University of Mysore

Oriental Library Publications

GENERAL EDITOR

M. S BASAVALINGAYYA, M.A., B.L.

*Curator, Govt. Oriental Library, Mysore*

SANSKRIT SERIES No. 82

श्रीव्यासतीर्थविरचितम्

# तर्कताण्डवम्

श्रीराघवेन्द्रतीर्थकृतन्यायदीपाख्यव्याख्यासमलङ्कृतम्

चतुर्थं संपुटम्



# TARKA TANDAVAM

OF

SRI VYASATIRTHA

WITH

THE NYAYADIPA OF SRI RAGHAVENDRATIRTHA

Vol. IV

EDITED BY

VIDVAN V. MADHVACHAR

*Govt. Oriental Library, Mysore*



MYSORE :

PRINTED BY THE ASST. SUPDT., GOVT. BRANCH PRESS

1943

॥ श्रीः ॥

# आदिवचनम्.

---

ग्रन्थकर्तारं व्याख्यातारं चाधिकृत्य वर्णनीयो विषयः प्रथमसंपुटे एव प्रदर्शितपूर्व इति नात्रातियतामहे। अपि च नैयायिकानां वेदान्तिनां च यस्मिन्यस्मिन्विरुद्धोऽभिप्रायस्तस्मिंस्तस्मिंस्वसिद्धान्तस्थापनानुकूलतया प्रकरणविभागविषयनिरूपणादयः प्रवर्तन्ते इत्ययमपि पूर्वसञ्जातविशदीकरण एव। यद्यपि—प्रायः सर्वेषु ग्रन्थेषु प्रत्यक्षानन्तरमनुमितेस्ततः शब्दस्येति निरूपणपद्धतिः प्रसिद्धतरास्ति, अत्र च प्रत्यक्षानन्तरं शब्दं निरूप्यानुमानमन्ते प्रतिपादयति, केयमभिनवा रीतिरिति शङ्का परमवशिष्यते। इदमत्राकूतम्—आनन्दतीर्थीये सिद्धान्ते अनुमानस्य प्रत्यक्षशब्दोपोद्बलं विना कामचारित्वेनाकार्यकरत्वं जघन्यत्वं चोपदर्शितम्। अत एवं प्रधानत्वोपष्टम्भकत्वमूलकनिरूपणक्रमानुसरणेनानुमानस्यान्ते निवेश इति॥

बुधाः,

नवीनन्यायकोलाहललब्धबुद्धिवैशद्यमानिनो विद्वांसः वेदान्ते वाक्यार्थसञ्चलनवेलायां—व्यभिचारं, बाधं, असिद्धिं, उपाधिं, तर्कादींश्च विशदयन्तो साध्याभाववतिहेतुसत्त्वादिकं विहाय सिद्धान्तानुमतविवरणमन्यं प्रकाशयितुं विरला एव

वर्तन्ते। किं बहुना—" यत्र धूमस्तत्राग्निरिति साहचर्यनियमो व्याप्ति" रितीमं क्रमं विना वेदान्तानुगृहीतव्याप्तिस्वरूपस्ववचना अपि न दृश्यन्ते। दशायामस्यां ग्रन्थरत्नमिदमाश्रितवतां कामना-विषया न पूर्णप्रज्ञप्रज्ञाननुसरणाः विषयाः, सुगमाः सुलभनिरू-पणमार्गाः समुपजायन्त इति द्वैतवेदान्ताध्येतृषु महापाठशालासु चायं ग्रन्थः प्रवचनकर्मण्यवश्यपरिगणितो भूयात्॥

एवं निवेदयिता,

विद्वान्. वे. मध्वाचार्यः.

# तर्कताण्डवचतुर्थसंपुटे विषयानुक्रमणिका.

## VII. अनुमादोषवादः



॥ ओं श्रीहंसः ओम् ॥

## मुद्रणोपयुक्तानां मातृकाणामयं परिचयः

१ मु. मुळबागलु श्रीश्रीपादरायमठाधिपतिभिरनुगृहीतम् ; मूलम्, व्याख्यानं च : शुद्धतमम्; एतदनुरोधी पाठ एवोपरि निहितः ; क्वचिदरमणीयोऽपि तत्तत्पुस्तकीयपाठानन्यथाभावाय तथैव मुद्रापितः ; पूर्णम् .

२ रा. मैसूरु आर्कियालजीयोपाध्यक्षाणां श्रीमताम् आर्. रामराव् महाशयानाम्; मूलम्; पूर्णम्; प्रायः शुद्धम्.

३ ट. निवृत्तसंस्कृत प्रोफेसरपदानां निवृत्तास्मदीयकोशागाराध्यक्षपदानां च श्रीमतां डि. श्रीनिवासाचार्यमहाशयानां; मूलम् ; व्याख्यानं च ; पूर्णम्; प्रायः शुद्धम्.

४ क. अस्मदीयकोशागारस्य ; C. 13 संख्याकं ; मूलम्; पूर्णम् ; अशुद्धम्.

५ ग. अस्मदीयकोशागारगत C. 937 संख्याकम् ; मूलम् ; पूर्णम्; प्रायः शुद्धम्.

६ ठ. अस्मदीयकोशागारस्थ ; C. 946 संख्याकं अनुमानव्याख्यानम्; पूर्णम्; किञ्चिदशुद्धम्.

७ ड. अस्मदीयकोशागारीयम् ; C. 1690 संख्याकं अनुमानव्याख्यानम्; पूर्णम्; किञ्चिदशुद्धम्.

८ सु. विदुषां सञ्जीव सुब्रह्मण्याचार्यणाम् ; शब्दखण्डस्य मूलम्; पूर्णम् ; प्रायः शुद्धम्.

९ उ. मैसूरुसंस्कृतमहापाठशालाद्वैतवेदान्तप्रधानाध्यापकानां विदुषां वि. श्री वासुदेवाचार्याणाम् ; शब्दखण्डस्य व्याख्यानम् ; पूर्णम् ; प्रायः शुद्धम्.

१० नं. नञ्जनगूडु श्री राघवेन्द्रतीर्थमठाधिपानाम् ; शब्दपरिच्छेदस्य; सानुग्रहं दत्तम् ; मूलम् ; व्याख्यानं च ; पूर्णम् ; प्रायश्शुद्धम्.

अन्यान्यपि द्वित्राण्यस्मत्कोशागारस्थानि पुस्तकानीति ॥

———

॥ श्रीः ॥

# तर्कताण्डवम्

## तृतीयः परिच्छेदः

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

॥ ॐ ॥

## व्याप्तिवादः ॥ १ ॥

### अथ स्वमते व्याप्तिनिरूपणम् ॥ १ ॥

अथ[1] "तन्मुख्यं ज्ञानशब्दयो"रित्यनुप्रमा-

## न्यायदीपाख्या व्याख्या

## व्याप्तिवादः ॥ १ ॥

### अथ स्वमते व्याप्तिनिरूपणम् ॥ १ ॥

सत्तर्कसहिता वेदाः प्राहुर्यं पूर्णसद्गुणम् ।
धर्माराध्यं देवतैक्यं वन्दे तं कमलापतिम् ॥

पूर्वेण सङ्गतिं दर्शयन्नुत्तरार्थमाह—अथेति । सपरिकर[2]शब्द-

[1] एवमित्याधिकम्–क. [2] रं श–ट. ठ. ड.

**णेषु—वेदरूप[1]शब्दः प्रधानमित्युक्तत्वात्तदनुग्राहकमनुमानमुच्यते ॥**

**निर्दोषोपपत्तिरनुमानम् । उपपत्तिर्व्या —**

प्रमाणस्वरूपनिरूपणानन्तरमनुमानप्रमाणं सपरिकरं अस्मिन्परिच्छेदे कथ्यते। किं कारणम्। तदनुग्राहकम्—हेतुगर्भमिदम्। शब्दप्रमाणानुग्राहकत्वादुच्यत इत्यर्थः। तदनन्तरम् कुतः। वेदरूपः शब्दः [2]प्रमाणमित्युक्तत्वात्। प्रधानोक्त्यनन्तरमेवानुग्राहकोक्तेरवसरादित्यर्थः। यद्वा प्रमाणान्तरानुग्राहक[3]मनुक्त्वा वेदानुग्राहकोक्तिः कुत इत्यतो वेदरूपः शब्दः प्रधानमित्युक्तत्वादिति। "याथार्थ्यमेव मानत्वं तन्मुख्यं ज्ञानशब्दयोः" इति युक्तिपादीयानुव्याख्याने "याथार्थ्यमेव प्रामाण्यं तन्मुख्यं ज्ञानशब्दयोः" इति ब्रह्मतर्के च। तद्याथार्थ्यं ज्ञाने केवलप्रमाणे वेदरूपप्रमाणे च मुख्यमित्यस्य तात्पर्यं—**प्रधानमित्युक्तत्वादिति**। वेदानुग्राहकत्वं च— वेदे आरोपितानि यानि अप्रामाण्यकारणानि अनृतव्याघातपुनरुक्त्यशक्यार्थाभिधायित्वगुरूपायबोधकत्वार्थबोधोपायशून्यत्वादीनि तत्सर्वनिरासेन प्रामाण्यस्थिरीकरणं, तथा वेदबोध्येऽर्थे आरोपितान्यथाकारशङ्कानिरासेन तद्बोध्यधर्मदेवब्रह्मस्वरूपस्थिरीकरणम् ॥

अनुमानसामान्यलक्षणं प्रमाणलक्षणं भगवत्पादोक्तमेवाह— **निर्दोषेति**। अनुमीयतेऽनेनेत्यनुमानमुच्यते। निष्क्रान्ता दोषेभ्यः निर्दोषा सा च सा उपपत्तिश्च निर्दोषोपपत्तिः। उपपत्तिदोषाश्च स्वमते अनुमानदोषोक्तिवादे व्यक्ताः। अत्रोपपत्तिपदं अर्थवादोपपत्ती चेत्यादाविव हेत्वाभासविविक्तयुक्तिपरं चेत् निर्दोषेति व्यर्थमित्यत आह—**उपपत्तिर्व्याप्यमिति** ॥

[1] पः श–**क. ग. ट. ग.** [2] प्रधानमि–**ट. ड.** [3] 'त्व' इति पूरितम्–**ड.**

प्यम् । निर्दोषत्वेन विशेषणान्नासिद्धादावतिव्याप्तिः । उक्तं हि पद्धतौ " उपपत्तिर्युक्तिर्लिङ्गव्याप्यमिति पर्याय[1] " इति । अत्रोपपत्तिर्व्याप्यमित्येतावतैव पूर्तावपि युक्तिलिङ्गग्रहणं भगवत्पादै "रनुमा युक्तिरेवोक्ते" ति "लिङ्गं हेतुरि" ति चोक्तत्वेन[2] तद्विरोध इति शङ्कानिरासाय । प्रमाणलक्षणटीकायान्तु—साहचर्येणार्थगमकं लिङ्गमिति साहचर्यनियमरूपव्याप्तौ नियमांशत्यागेन साहचर्यमात्रमुक्तम् । तदावश्यकनिर्दोषग्रहणादेव साधारणादौ नातिव्याप्तिरित्यभिप्रेत्य ॥

---

ननु—लक्षणटीकायामुपपत्तिर्लिङ्गमित्युक्तम् । अत्रतूच्यते व्याप्यमिति । तत्कथमित्यतः पर्यायत्वान्न दोष इति भावेनाह—**उक्तं हीति** । चतुर्णां शब्दानामुक्तेः कृत्यमाह—**अत्रेति** । **पूर्ताविति** । तावतैव निर्दोषपदसार्थक्यस्य[3] लक्षणोक्तेर्वा संभवादिति भावः । 'अनुमा युक्तिरेवेति' युक्तिपादीयानुव्याख्याने, 'लिङ्गं हेतुरिति' मिथ्यात्वानुमानखण्डने चोक्तत्वादित्यर्थः ॥

ननु—व्याप्यं नाम व्याप्तेः कर्म । व्याप्तिश्चसाहचर्यनियम इति वाच्यम् । तथा च लक्षणटीकाविरोध एव । तत्रोपपत्तिर्लिङ्गमित्युक्त्वा साहचर्येणार्थगमकं लिङ्गमित्येवोक्तेरित्यतो नियमांशोभिप्रेत एव तत्फलस्य विशेषणान्तरलभ्यत्वात्तदनुक्तिरितिभावेन विरोधं निराह—**प्रमाणलक्षणटीकायां त्विति** । **साधारणेति** । साधारणानैकान्तिकहेत्वाभासादावित्यर्थः ॥

[1] या इ—क. ट. [2] त्वान्न ग. ट. ग [3] क्यसंभवा—ट. ठ. ड.

**अविनाभावो व्याप्तिः ॥**

**नन्वविनाभावः–साध्येन विना साधनस्याभावो वा; साध्येनाविना साध्यसाहित्येन साधनस्य भावो वा। नाद्यः। केवलान्वयिनि साध्या[1]भावाप्रसिद्धयाव्याप्तेः। अस्य व्यतिरेकव्याप्तित्वेन त्वन्मतेनुमानानङ्गत्वाच्च। न द्वितीयः। साध्यसाहित्यस्य व्यभिचारिण्यपि सत्त्वात्। साध्यसाहित्यनियमोभिप्रेतश्चेत् नियमस्य निरुच्य-**

ननु व्याप्तेः कर्म व्याप्यमिति व्याप्यस्वरूपं व्याप्तिज्ञानाधीनज्ञानमिति का व्याप्तिरिति जिज्ञासायां पद्धत्युक्तलक्षणमाह— **अविनाभाव इति**। तत्परिष्कर्तुं व्याप्तिवादपूर्वपक्षे मण्याद्युक्ति[2]दिशाक्षिपति— **नन्विति**। नञो व्यत्यासेनान्वयमुपेत्याद्यः कल्पः। यथाश्रुतान्वयमुपेत्य द्वितीयः। फलितार्थमाह—**साध्यसाहित्येनेति**। **केवलान्वयिनीति**। शब्दोभिधेयः ज्ञेयत्वात् गुणत्वात् इत्यादिकेवलान्वयिसाध्यकहेताविस्यर्थः। **साध्यादीति**। साध्यसाधनाभावेत्यर्थः ॥

सिद्धान्तिनो मते सर्वस्य व्यतिरेकित्वादभावाप्रसिद्धिर्नेत्यरुचेराह— **अस्येति**। साध्येन विनाभाव इत्यस्य साध्याभावे साधनाभाव इत्यर्थकतया अस्य व्यतिरेकव्याप्तित्वात्। सिद्धान्ते[3]च व्यतिरेकवादे वक्ष्यमाणदिशानुमानानङ्गत्वाच्चेत्यर्थः। त्वन्मते—सिद्धान्तिनो मते ॥

“अविनाभावो व्याप्तिः साहचर्यनियम इति यावदि”ति पद्धत्युक्तेराह— **साध्यसाहित्येति**। आत्माश्रयात्—ज्ञप्ताविति भावः।

[1] ध्याद्य–ग. [2] क्तदि–ट. ड. [3] न्तिनाप्य–ठ.

मानव्याप्तिरूपत्वेनात्माश्रयात् । अधोदेशनदीपूरोर्ध्वदेशवृष्ट्योर्देशतः कालतो वा साहित्यासंभवाच्च । एतेन साहचर्यनियमो वाऽनौपाधिक[1] संबन्धो वा स्वाभाविकसंबन्धो वा साध्याभाववद्वृत्तित्वं वा व्याप्तिरिति निरस्तम् । व्यधिकरणयोः पूरवृष्ट्योर्देशतः कालतो वा साहचर्यस्य संबन्धस्य [2]चाभावात् । नदीपूरस्य वृष्टिरूपसाध्याभाववदधोदेशवृत्तित्वाच्चेति ॥

उच्यते । यद्देशकालसंबद्धस्य यस्य यद्देशकालसंबद्धेन येन विनानुपपत्तिस्तस्य तेन सा व्याप्तिः ।

---

**अधोदेशनदीपूरोर्ध्वदेशवृष्ट्योरिति ।** तयोरपि लिङ्गलिङ्गिभावदर्शनात् भिन्नदेशत्वाद्भिन्नकालत्वाच्चेति भावः । **एतेनेति ।** भिन्नदेशकालव्याप्यव्यापकभावापन्नपूरवृष्टिस्थलीयव्याप्त्यव्याप्तत्वेनेत्यर्थः । **साहचर्यनियम इति ।** पूर्वमविनाभाव इत्यस्याभिप्रेतत्वमुपेत्य साहित्यनियमो दूषितोऽत्र तु पृथग्व्या[3]प्तिलक्षणत्वेन साक्षादुक्त[4]त्वमुपेत्य पुनरुपन्यास इति न पुनरुक्तिदोषः ॥

एतेनेत्युक्तं व्यनक्ति—**व्यधिकरणयोरिति ।** समानदेशकालभिन्नदेशकालसर्वव्याप्यनिष्ठव्याप्तिं निरूपयति—**यद्देशेति । येन विनेति ।** केवलान्वयिन्यव्याप्तिस्तूद्धरिष्यत इति भावः । इयं च सर्वसाधारणीति स्वयमेवोपपादयिष्यति । अनुपपत्तिस्वरूपं चानुपपत्तिश्चासंभव इत्यादिना

---

[1]कः स–**क.** [2]वासं–**क.** चासंभ–**ग. ट. रा.** [3]प्तल–**ठ.** [4]दृष्टत्वमभिप्रेत्यपु–**ठ.**

**अनुपपत्तेर्व्याप्तित्वं च—प्रमाणलक्षणे परिशेषोर्थापत्तिरनुमानमित्यविशेष इत्य[1]र्थापत्तिरिवानुमानमप्यावश्यकानुपपत्त्यैव गमकमित्युक्तत्वात्; उपमानेपि न हि स्वसदृशेनादर्शं क्व[2]चिद्दृष्टमित्यनेन गवयनिष्ठगोसादृश्यस्य गोनिष्ठगवय सादृश्यं विनानुपपत्तेरेवोक्तत्वात्; पद्धतौ च निर्दोषोपपत्तिरनुमेति प्रमाणलक्षणस्थो[3]पपत्ति-शब्दो न पर्यायान्तरमात्रम् किं तु साध्ये सत्युपपद्यते अन्यथा तु ने[4]त्युपपत्तिरिति भावेनोपपत्तिर्व्याप्यमिति व्याख्यातत्वात्; प्रमाणलक्षणटीकायामपि जीवनवत्त्वे सति गृहे असत्त्वरूपे व्याप्ये अनुपपद्यमानार्थप्रमितिरर्थापत्तिरित्यनुपपद्यमानपदयोगात् परिशेषादरनुमानत्वानङ्गीकारे धूमोप्यनुपपत्त्या गमयन्नानुमानं स्या[5]दिति-**

स्वयमेव वक्ष्यति । **अनुपपत्तेर्व्याप्तित्वं चेति ।** भाष्यकाराद्यभिप्रेतमेवेत्यन्वयः । अविशेषशब्दार्थं टीकोक्तरीत्याह—**अर्थापत्तिरिवेत्यादि । उपमानेपीति ।** शबरोपमानस्यानुमानान्तर्भावोक्तिप्रस्तावेपीत्यर्थः ॥

पद्धतावुपपत्तिर्युक्तिर्लिङ्गंव्याप्तमिति शब्दाः पर्याया इत्युक्तेर्ग्रन्थान्तराविरोध एकोभिप्राय उक्तः । अभिप्रायान्तरमपि प्रकृतोपयोगायाह—**पद्धतौ[6] चेति ।** प्रमाणलक्षणाख्यग्रन्थगतस्य निर्दोषोपपत्ति-

[1] त्यनेनार्था—ग. ट. रा. [2] किंचिद्द्—ग. क. रा. ट. [3] स्थ उ—ग. स्थं उ—रा. [4] नेति भवेन—ग. रा. [5] दित्युक्त—ग. रा. ट. [6] तौवे—ठ.ड.

चोक्तत्वात्; सुधायां च 'अनुमायुक्तिरेवोक्ते' त्यनुव्याख्यानस्थयुक्तिशब्दस्य युज्यत एवेति युक्तिरिति व्याख्यातत्वाच्च; भाष्यकाराद्यभिप्रेतमेव ॥

यत्तु — विमतो गौर्गवयसदृशः गवयगत सादृश्यप्रतियोगित्वादिति प्रमाणलक्षणटीकायां हेतुसाध्ययोः सामानाधिकरण्यसंपादनं तत्परमतमाश्रित्य। अत एव तत्रैव इति प्रयोगसंभवादित्युक्तम्। अत एव[1] पद्धतौ च असौ गौरेतद्गवय सदृशः अस्य गवयस्य[2] तद्गोसदृशत्वादिति वैयधिकरण्येनैव प्रयुक्तम्। अत एव[3] सुधायां—

'रोहिण्युदय आसन्नः कृत्तिकाभ्युदितायत' इत्यनुव्याख्यानोक्ते व्यधिकरणप्रयोगे कालादिपक्षीकारेणैकाधिकरण्यमाशङ्क्यैवं प्रयोगविपरिणाम[4] प्रमाणं नेत्युक्तम् ॥

रनुमेत्येतदेव पद्धतावुपन्यस्य[5] व्याप्यमिति व्याख्यानात्प्रमाणलक्षणस्थेत्युक्तम्। एतच्च मूलाकारसम्मतमेतदिति ज्ञापनार्थम्। नन्वेवं शाबरोक्त[6]प्रमाणान्तर्भावप्रस्तावे गौर्गवयसदृशी गवयस्य गोसदृशत्वादिति प्रयोगे वैयधिकरण्यमाशङ्क्य सामानाधिकरण्येन प्रयोगोक्तिः कथम् तया व्यधिकरणस्य गमकता नेति प्रतीतिरित्यत आह—**यत्त्विति। इत्यनुव्याख्याने**[7]**ति**। भक्तिपादीयानुव्याख्यानोक्तेः[8] ॥

---

[1] वहिप—**ग. रा.**　[2] स्यैत—**ग. रा.**　[3] वचसु—**क. रा.**　[4] मेप्र—**ग. ट. रा**　[5] तत्रस्थोपपात्तिशब्दस्य इत्यधिकम्—**ठ.**　[6] शाबरोपमानान्तर्भा— **ठ.**　[7] नोक्त इति—**ट. ठ.**　[8] क्ते—**ठ. ड.**

अनुपपत्तिश्चा[1]घटनं प्रमाणविरोध इति यावत्। उक्तं हि प्रमाणलक्षणटीकायां अनुपपत्तिश्चासंभव इति ॥

या तु—परेण व्याप्त्या गमकमनुमानम् अनुपपत्त्या गमिकार्थापत्तिरित्यनुमानार्थापत्त्योर्भेदे शङ्किते तं प्रति टीकाकारीया, केन चिद्विना कस्य चिदनुपपत्तिर्हि तयोर्व्याप्तिं विना नोपपद्यत इत्यनुपपत्तिव्याप्त्योर्भेदोक्तिः सानुपपत्तिनियामकोर्ध्वाधरीभावकार्यकारणभावाद्यभिप्राया, नियतसामानाधिकरण्यानौपाधिकसंबन्धादिरूपपराभिमतव्याप्त्यभिप्राया वेति न टीकाविरोधः ॥

इयमेव च व्याप्तिः साध्येन विना साधनस्याभावोऽनुपपत्तिरिति भावेनाविनाभाव इति

---

एवमनुपपत्तेर्व्याप्तित्वे संमतिमुक्त्वा तत्स्वरूपमिदानीमाह—**अनुपपत्तिश्चेति**। येन विना यस्य सत्ता प्रमाणविरुद्धा सा तेन तस्य व्याप्तिरित्यर्थः। उपपत्तेश्च व्याप्त्यपेक्षा[2] सर्वथाङ्गीकार्येति प्रमाणलक्षणवाक्यटीकोक्तिविरोधं निराह—**यात्विति**। **पराभिमतेति**। न त्वनुपपत्तिरूपव्याप्त्यभिप्रायेत्यर्थः। नन्वेव'मविनाभावो व्याप्तिः। साहचर्यनियम इति यावत्' इति पद्धत्युक्तिविरोध इत्यत आह—**इयमेवेति** ॥

नन्वनुपपत्तिर्व्याप्तिरिति पक्षे कथं व्याप्यव्यापकव्यवस्थेत्यत

---

[1] श्चासंभवः—ग. रा. [2] क्षेति प्रमा—ठ. ड

साहचर्यनियम इति चोच्यते । यस्यानुपपत्तिः स व्याप्यः । येन विनानुपपत्तिः स व्यापकः ॥

इयं च व्याप्तिः प्रसिद्धेषु धूमाद्यनुमानेषु अधोदेशे[1] न दीपूराद्यनुमानेष्वर्थापत्त्यादिरूपानुमानेषु आत्माश्रयान्योन्याश्रयचक्रकानवस्थाव्याघता[2]पादकेषु तर्केषु केवलव्यतिरेकिषु केवलान्वयिषु च सर्वत्रानुगता आवश्यकी च । अन्यथाप्रयोजकत्वापातात् । हेतुरस्तु साध्यं मास्त्व[3]त्येवाव्याप्तेः शङ्क्यमानत्वात्[4] । न चात्माश्रय[5]त्वादिकमापाद्यं अपादकसमानाधिकरणत्वेन क्वचित्प्रमितम् । तथात्वेऽनिष्टत्वायोगात् । उक्तं च टीकाकारैः । न हि कुत्राप्यात्माश्रयादि[6]कं प्रमाणसिद्धमिति ॥

---

आह— **यस्येति** । अनौपाधिकसंबन्धादिरूपव्याप्तिं हित्वैतदुपादाने को विशेष इत्यत आह— **इयं चेति** । **केवलान्वयिषु चेति** पररीत्या । सिद्धान्ते सर्वस्य व्यतिरेकित्वात् । यद्वा देशकालरूपकेवलान्वयिसाध्य[7]कहेत्वपेक्षयैतदुक्तिः । एकसादृश्यसंबन्धिधर्मसाध्यकहेत्वभिप्राया वैतदुक्तिः । आवश्यकी चेत्युक्तं व्यनक्ति— **अन्यथेति** । **अप्रयोजकतेति** । व्याप्यत्वेनाभिमतस्येति योज्यम् । इयमेव व्याप्तिर्युक्तेत्येतद्व्यतिरेकमुखेनाप्युपपादयति— **हेतुरिति** ॥

नन्वात्माश्रयादौ मण्याद्युक्तसामानाधिकरण्यघटितव्याप्तिरेवास्तु किमनयेत्यत आह— **न चेति** । **उक्तं चेति** । प्रमाणलक्षणटीकाया-

---

[1] शन ी–**ट. रा.** [2] ताद्यापादकतर्के–**ग. ट. रा.** [3] भूदित्ये–**ग. रा.**
[4] त्वाच्च–**ग. रा** [5] यादिक–**क. ग रा.** [6] दिप्र–**क. ग. रा.** [7] ध्यहे–**ठ. ड.**

ननु—धूमस्यानुपपत्तिः किं वह्निसामान्यं विना किं वा पर्वतीयवह्निं विना। नाद्यः। तया पर्वतीयवह्न्यसिद्धेः। नान्त्यः। पर्वतीयवह्न्यसिद्धौ तेन विनानुपपत्तेर्दुर्ज्ञानत्वात्। सिद्धौ च तस्या एवानुमितिरूपफलत्वेन तत्कारणत्वायोगात् इति[1]। उक्तं हि खण्डने—यतोऽन्यत्वं तत्सिद्धेरग्रे तदसिद्धेरिति[2] इति चेत्।[3] धूमस्य सामानाधिकरण्यमपि किं वह्निसामान्येन किं वा पर्वतीयवह्निनेति विकल्प्य तद्दूषणयोः साम्यात्॥

ननु—धूमसामान्यस्य वह्निसामान्येन सामानाधिकरण्यज्ञानं करणम्। वस्तुगत्या पर्वतीयस्य वह्नेर्वह्नित्वेन ज्ञानं[4] फलम्। वह्नेः पर्वतीयत्वसिद्धिस्तु पक्षधर्मताबलादिति चेत्सममनुपपत्तावपि॥

---

मात्माश्रयान्योन्याश्रयेत्यादिवाक्यव्याख्यानावसरे। अस्यां व्याप्तौ बाधकमाशङ्कते—**नन्विति**। असिद्धौ अज्ञाने सतीत्यर्थः। एवं सिद्धावित्यपि। **तत्सिद्धेरग्रे तदसिद्धेरिति**। पर्वतीयवह्निसिद्धेः पूर्वं तद्वह्न्यसिद्धेः। न च सामान्यसिद्ध्या तत्सिद्धिः यतोऽन्यत्वं सामान्यविशेषयो[5]रित्यर्थः। तन्मुखेन समाधिं वाचयितुं प्रतिबन्द्योत्तरमाह—**धूमस्येति**। यत्तु—अस्य व्यतिरेकव्याप्तित्वेन त्वन्मतेऽनुमानानङ्ग-

---

[1] इति पदं न—ट. रा. [2] तीति च-ग. रा [3] चेत्र—क ग. रा.
[4] तत्फ—ग. ट. रा [5] न चेत्यादि नास्ति—ट. ड.

न चेयं व्यतिरेकव्याप्तिः । केवलान्वयिन्यपि साध्यं विनानुपपत्तेः सद्भावात् । वृष्टिरूपसाध्याभाववत्यधोदेशे पूररूपसाधनाभावस्याभावेन व्यतिरेकव्याप्त्यभावेऽपि पूरे वृष्टिं विनानुपपत्ति[1]दर्शनात्[2] । किं च वह्निं विनानुपपत्तिर्धूमगता । व्यतिरेकव्याप्तिश्च वह्न्यभावगतेति कथं तयोरभेदः । वह्न्यभावस्य धूमाभावेन व्याप्तिरपि धूमाभावं विनानुपपत्तिरेव । सा च वह्न्यभावेन धूमाभावे साध्ये व्याप्यगतत्वादन्वयव्याप्तित्वेनैवाङ्गम् । धूमेनैव वह्नौ साध्ये तु धूमानिष्टत्वान्न

---

त्वाच्चेति तदाशङ्क्य निराह—न चेय[3]मिति । सामानाधिकरण्यगर्भा[4] व्यतिरेकव्याप्तिर्न भवतीत्यर्थः ॥

ननु—समानाधिकरणतया हेतुसाध्यभावं गतेषु व्यतिरेकव्याप्तिरियं भविष्यतीति वादिनं प्रत्याह—**किं चेति** । नन्वस्त्वियं सर्वान्वय्यनुमानेषु वह्न्यभावादिना धूमाभावाद्यनुमानस्थलेन्यैव व्याप्तिर्वाच्येति तदनुगतेयं न भवतीत्यत आह—**वह्न्यभावस्येति** । इयमेव [5]धूमानुमानेऽप्यङ्गं कथं न व्यतिरेकव्याप्तिरित्यत आह—**धूमेनेति** । **न साक्षादिति** । किं तु व्यभिचारनिरासद्वारैवाङ्गमिति भावः । केवलान्वयिनि साध्या[6]भावाप्रसिद्ध्याव्याप्तिरित्युक्तदोषं निराह—

---

[1] तेर्द–ग. ट. रा.　[2] नाच्च–ग. ट. रा.　[3] चैवमिति–ठ.
[4] भव्य–ठ. ड.　[5] चेद्धू–ठ. ट. ड.　[6] व्याप्र–ठ. ड.

साक्षादङ्गम् । न च केवलान्वयिन्यव्याप्तिः । तत्र साध्याभावा[1]सत्त्वेनैव साध्याभावे सति साधनस्य योपपत्तिः तदभावरूपानुपपत्तेः सत्त्वात् । मन्मते अप्रामाणिकस्यापि निषेधप्रतियोगित्वात् ॥

तथा च–रसस्य समानदेशकालेन रूपेण विनेव, पाकजरूपादेः समानदेशेन भिन्नकालेन पाकेन विनेव[2] च, कृत्तिकोदय[3]स्याभिन्नकालया[4] भिन्नदेशया रोहिण्युदयासत्त्या विना, अधोदेशनदीपूरस्य भिन्नदेश[5]कालोर्ध्वदेशवृष्ट्या विनानुपपत्तिरस्तीति, सामानाधिकरण्य इव वैयधिकरण्येप्युक्तरूपा व्याप्तिर्युक्ता । प्रत्युत नदीपूरादौ सामानाधिकरण्य एवोक्तरूपा व्याप्तिरयुक्ता । न ह्यूर्ध्वदेशगतो नदीपूरः [6]ऊर्ध्वदेशगतां वृष्टिं विनानुपपन्नः । किं तु ततोप्यूर्ध्वदेशगताम् ॥

---

**न च केवलान्वयिनीति । अप्रामाणिकस्यापीति ।** यथा चैतत्तथोपपादितं न्यायामृते प्रथमपरिच्छेदे । सर्वत्रानुगतेति प्रागुक्तमुदाहरणनिष्ठतया व्यनक्ति—**तथा चेत्यादिना । सामानाधिकरण्य इवेति ।** यथा तत्र न्यायमते कथंचित्सामानाधिकरण्यं संपाद्य व्याप्तिरुपपाद्यते तथा क्लेशेन विनैव यथास्थितलिङ्गालिङ्गिनोर्वैयधिकरण्ये सत्यपीत्यर्थः ॥

ननु त्वन्मतेपि तत्र सामानाधिकरण्यमादायैव व्याप्तिरुच्यतामित्यत आह—**प्रत्युतेति**[7] । यथास्थितलिङ्गलिङ्गिनोर्व्यधिकरणयोर्व्या-

---

[1] सत्वादेव -**क. ग.** वस्यासत्त्वादेव-**ट. रा.** [2] च इति नास्ति-**ग. ट. रा.** [3] यस्य समानका-**ग. ट. रा** [4] यारो-**ग. रा.** [5] कालयो-**ग. ट. रा.** [6] स्वदे-**ग. ट. रा.** [7] ततः "व्यधिकरण" इत्याद्येवास्ति-**ट. ड.**

ननु साध्याभावेनैव संबन्धस्य नदीपूरस्य वृष्टि-रूपसाध्येन कथं व्याप्तिरितिचेत् साध्याभावेन नियमेन संबन्द्धस्य द्रव्यत्वस्य संयोगरूपसाध्येन कथं व्याप्तिः। यदितु तत्र फलबलेन व्याप्तिल-क्षणे प्रतियोग्यसमानाधिकरणेति विशेषणाद्व्याप्ति-सिद्धिः। तर्ह्यत्रापि फलबलेनैव व्याप्तेर्लक्षणान्त-रस्योक्तत्वात्तत्सिद्धिरिति समम्॥

ननु वैयधिकरण्ये साध्यस्य देशनियमः कथ-मिति चेत्। सामानाधिकरण्येपि—धूमेन तदधो-भाग एव वह्नेः, तुलोन्नमनेन भागान्तर एवावन-मनस्य, व्याप्यवृत्तिना द्रव्यत्वेनाव्याप्यवृत्तेः संयो-गस्याव्याप्यवृत्तिना संयोगेन व्याप्यवृत्तिद्रव्य-

---

प्यव्यापकभावे बाधकमाशङ्क्य प्रतिबन्द्योत्तरमाह — **नन्वित्यादिना**। **साध्याभावेनेत्यादि**। परमते संयोगस्याव्याप्यवृत्तित्वेन वृक्षः संयोगीद्रव्यत्वादित्यत्र द्रव्यत्वस्य साध्याभावसंबन्धस्येत्युक्तम्। **फलेति**। अनुमितिलक्षणफलबलेनेत्यर्थः। **प्रतियोगीति**। प्रतियोग्यसमानाधिकर-णसाध्यप्रतियोगिको योऽभावः तदसंबद्धत्वे सति साध्यसामानाधिकरण्यं व्याप्तिरिति विशेषणादित्यर्थः। तथाच संयोगाभावस्य प्रतियोगिसामा-नाधिकरण्यान्न दोष इति भावः। व्यधिकरणयोर्लिङ्गलिङ्गिभावे बाध-कान्तरमाशङ्क्य प्रतिबन्द्या निराह—**नन्विति**। सामानाधिकरण्येपि पक्ष एव प्रदेशनियम इत्यन्वयः। कुत इत्यतोऽन्यत्रान्यथादर्शनादिति भावेनाह—**धूमेनेत्यादिना**। वह्नेरित्यादिषष्ठ्यन्तानां सिद्धिरितीत्यनेना-न्वयः। इति शब्दो हेतौ। अत एव पद्धतौ तुलोन्नमनादीनामनेके-

त्वस्य, सिद्धिरिति कथं पक्ष एव प्रदेशनियमः। कथं च समानकालत्वेपि कादाचित्केन पतनेन स्थायिगुरुत्वस्य, स्थायिना शरीरत्वेन कादाचित्कनाशस्य च, सिद्धिरिति कालनियमः॥

व्याप्तिस्वभावादिति चेत्समम्। यत्र यदा रसस्तत्र तदा रूपमिति समानदेशकालत्वेनैव, यत्र पाकजं[1] रूपं तत्र पाक इति समानदेशत्वमात्रेणैव, यदाकृत्तिकोदयस्तदा रोहिण्युदयासत्तिरिति समानकालत्वमात्रेणैव[2] च, यदायत्र नदीपूरस्तत्पूर्वकाले तदूर्ध्वदेशे वृष्टिरिति भिन्नदेशकालत्वेनैव व्याप्तिग्रहात्॥

ननु—देशतः कालतश्च वैयधिकरण्ये कथं व्याप्तिग्रहः। यत्रेदं तत्रेदमिति वा यदैवं[3] तदैवमिति वा देशतः कालतो वा सामानाधिकरण्येनैव व्याप्तेर्ग्राह्यत्वादिति चेन्न[4]। यदीदं तर्हीदमित्येवानुपपत्तिरूपव्याप्तिग्रहस्य सर्वानुगतत्वात्॥

---

षामपि लिङ्गलिङ्गिभावो दर्शितः। 'व्याप्तिप्रकारमपेक्ष्यलिङ्गस्य लिङ्गिज्ञानजनकत्वनियमादि' ति पद्धत्युक्तादिशा परेण समाधानं वाचयित्वा सममित्याह—**व्याप्तीति**। व्याप्तिस्वभावादित्युक्तं व्यनक्ति—**यत्र यदेति**। व्याप्तिग्रहप्रकारानुपपत्तिमाशङ्क्य समाधत्ते—**नन्वित्यादिना**॥

ननु वैयधिकरण्येपि व्याप्यव्यापकभावे हेतुतदाभासव्यवस्था न

[1] जरू-**ग. रा.** [2] च इति नास्ति-**ट. ग.** [3] यदेदं तदेदमिति-**ट. रा.** [4] त। य--**ग. रा.**

अत्र च यद्देशकालसंबद्धस्य हेतोरनुपपत्तिः तद्देशकाले हेतोरभाव एवासिद्धिः । न तु पक्षेऽभावः । एवं यद्देशकालसंबद्धस्य हेतोरनुपतत्तिः तद्देशकालयोरन्यत्रापि भावो व्यभिचारः । न तु साध्याभाववति वृत्तिः । एवमुक्तयोर्देशकालयोरन्यत्रैव वर्तमानो विरुद्धः । न तु नियमेन साध्याभाववति वर्तमान इति न कश्चित्क्षुद्रोपद्रवः॥

तस्माद्वैयधिकरण्येपि व्याप्तिरस्त्येव । [1] तदुक्तं भगवत्पादैः । "असत्यपि व्याप्तिरस्त्येवेति" । सामानाधिकरण्ये असत्यप्यनुपपत्तिरूपा व्याप्तिरस्त्येवेत्यर्थः । [2] अत एव व्यधिकरणासिद्धिर्न दोष इति वक्ष्यते ॥

इति स्वमते व्याप्तिनिरूपणम् ॥ १ ॥

---

स्यादित्यत आह—**अत्रचेति** । भिन्नदेशकालयोरपि व्याप्यव्यापकभावपक्ष इत्यर्थः । **न तु पक्ष इति** । येन नदीपूरादिरसिद्धः स्यादिति भावः । **नत्विति** । येन नदीपूरादिर्व्यभिचारी स्यादिति ध्येयम् । **तद्देशकालयोरन्यत्रेति** । संबन्धसामान्ये षष्ठी । ताभ्यामन्यत्रेत्यर्थः । एवमग्रेपि । **एवमिति** समुच्चये । उक्तयोर्यद्देशे यत्कालेनुपपत्तिर्हेतोः साध्येन विना तयोरन्यत्र ताभ्यामन्यत्रेत्यर्थः । **तदुक्तमिति** । प्रमाणलक्षणे । प्रकृतोपयोगाय तस्यार्थमाह—**सामानाधिकरण्य इति** ॥

इति स्वमते व्याप्तिनिरूपणम् ॥ १ ॥

---

[1] प्रपञ्चयिष्यते चैतद्व्यधिकरणासिद्धेरदोषत्वप्रस्तावे इत्यधिकम्—**ग. रा. ट.**

[2] अत एवेत्यादि नास्ति—**ग. रा.**

## अथ परोक्तवक्रव्याप्तिलक्षणभङ्गः ॥ २ ॥

एतेन—

मण्युक्तानि-अव्यभिचरितः [1]संबन्ध इत्यस्य विवरणरूपाणि तत्राप्यत्यन्ताभावगर्भाणि तत्रापि धूमजातीयस्य वह्निजातीयेन व्याप्तिरिति मताश्रितानि प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकानवच्छिन्नं यत्तेन समं

अथ परोक्तवक्रव्याप्तिलक्षणभङ्गः ॥ २ ॥

**मण्युक्तानीति** । वक्राणि व्याप्तिलक्षणानि निरस्तानीति वक्ष्यमाणेनान्वयः । तानि चाव्यभिचरितसंबन्धानौपाधिकसंबन्धस्वाभाविकसंबन्धविवरणरूपतया त्रैराश्येन निष्कृष्यावान्तरभेदपूर्वमनुवदति । **अव्यभिचरितः संबन्ध इत्यस्येत्यादिना** । तत्रापि तद्विवरणरूपेष्वपि । तत्राप्यत्यन्ताभावगर्भेष्वपीत्यर्थः । **धूमजातीयस्य वह्निजातीयेनेति** । पर्वतीयवह्निनेव महानसादिस्थवह्निनापीत्येवं समानाधिकरणव्यधिकरणसर्वधूमवह्निव्यक्तिसाधारणव्याप्तिलक्षणानीत्यर्थः ॥

**प्रतियोगीति** । प्रतियोग्यसमानाधिकरणः यच्छब्दनिर्दिष्टसाधनधूमाधिरूपसमानाधिकरणो योत्यन्ताभावः घटाद्यत्यन्ताभावः तत्प्रातियोगितायामवच्छेदकं घटत्वादिकं तदनवच्छिन्नं तेनाव्यावर्त्तितं

[1] तस–क.ग.रा.

सामानाधिकरण्यं व्याप्तिरित्यादीनि, तथा अंत्य-

यद्वह्न्यादि तेन येन केनापि सह तस्य धूमादेः सामानाधिकरण्यं संयोगसम्बन्धेनैकाधिकरणवृत्तित्वं धूमादेर्वह्न्यादिना व्याप्तिरित्यर्थः । महानसादिवह्निः पर्वतीयधूमसमानाधिकरणात्यन्ताभावप्रतियोगित्वेपि तत्प्रतियोगिता न वह्नित्वेनावच्छिद्यते । धूमवति वह्निर्नास्तीत्यप्रतीतेः । अनवच्छेदकवह्नित्वेना[1]वच्छिन्नमहानसीयवह्निसामानाधिकरण्यस्य पर्वतीयधूमे अभावेपि पर्वतीयवह्निरपि महानसीयवह्निरिव वह्नित्वेनावच्छिन्न इति तत्सामानाधिकरण्यमादाय व्यधिकरणधूमवह्न्योरपि व्याप्तिरिति भावः । अत्र यद्यपि पर्वतीयधूमसमानाधिकरणात्यन्ताभावप्रतियोगिता महानसीयवह्निनिष्ठा महानसवह्नित्वेनावच्छिद्यते । पर्वते महानसवह्निर्नास्तीति प्रतीतेः । तथा च न सर्वधूमस्य सर्वेण वह्निना व्याप्तिः सिध्यति । तथापि प्रतियोगितानवच्छेदकावच्छिन्नं यदिति नञ्व्यत्यासेन पक्षधराद्युक्तदिशा व्याख्येयम् । एवं यत्समानाधिकरणेत्यत्रापि यदवच्छिन्नेत्यपि ध्येयम् । तेनायं धूमवान वह्निमत्त्वादिति व्यभिचारिणि यत्किंचिन्महानसादिनिष्ठवह्निसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधूमत्वावच्छिन्नसामानाधिकरण्यस्य सत्त्वाद्व्याप्यतापत्तिर्नेति ध्येयम् । धूमत्वस्य चायोगोलकीयवह्निसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकत्वात् । एवं तेनेत्यत्र तदवच्छिन्नेन समं तदवच्छिन्नस्येत्यपि व्याख्येयम् । अत एवादिपदप्रयोगः एवंरूपाणां टीकाकृदाद्युत्प्रेक्षितानां परिग्रहाय कृतः । अत्रावच्छेदकत्वं प्रतियोगितानधिकदेशवृत्तित्वं विशेषणताविशेषो वा । न त्ववच्छित्तिप्रत्ययजनकत्वम् । जनकत्वस्य

[1] नानव—ट.ठ.

**न्ताभावगर्भेष्वेव समानाधिकरणयोरेव धूमाग्नि-
व्यक्तिविशेषयोर्व्याप्तिरिति मताश्रितानि प्रतियोग्य-
समानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रति-
योगि यन्न भवति तेन समं सामानाधिकरण्यं व्याप्ति-
रित्यादीनि, तथा प्रतियोग्यसमानाधिकरणेति**

नियमगर्भतया आत्माश्रयापत्तेरिति । अत्र संयोगादिसाध्यकद्रव्यत्वादिनिष्ठव्याप्ताव्याप्तिवारणाय प्रतियोग्यसमानाधिकरणेत्यभावविशेषणमिति रुचिदत्तादिः । अयं कपिसंयोगी एतद्वृक्षत्वादित्यस्योपसंग्रहायेत्याहतुः पक्षधरशिरोमणी ॥

**समानाधिकरणयोरिति** । पर्वतीयधूमस्य पर्वतीयवह्निना महानसादिनिष्ठधूमस्य तत्तन्निष्ठवह्निनैवेत्येवंरूपेणेत्यर्थः । **प्रतियोगीति** । प्रतियोग्यसमानाधिकरणपर्वतीयधूमादिसमानाधिकरणो योत्यन्ताभावः घटाद्यत्यन्ताभावः तत्प्रतियोगि यन्न भवति पर्वतीयवह्न्यादिर्न भवति तेन समं सामानाधिकरण्यं पवतीयधूमस्य व्याप्तिः । एवं महानसादिधूमस्यापि ध्येयम् । घटो गन्धवान्पृथिवीत्वादित्यादिनिष्ठव्याप्ताव्या[1]प्तेः गन्धव्यक्तीनां प्रत्याश्रयं[2] भिन्नत्वेन सर्वस्यापि गन्धस्य पृथिवीत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वादित्यत आदिपदप्रयोगः । तेन प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं यन्न भवति तदवच्छिन्नसामानाधिकरण्यमित्यादिटीकाकाराद्युत्प्रेक्षितग्रहः । एवमग्रेपि । अत्यन्ताभावस्याव्याप्यवृत्तित्वेप्यन्योन्याभावस्य व्याप्यवृत्तित्वेन संयोगसाध्यकद्रव्यत्वादिनिष्ठव्याप्ताव्याप्त्यनापत्तेरिति

[1] प्तः—ट. ड. [2] यमि—ट. ठ.

**विशेषणा[1]दानाल्लघून्यन्योन्याभावगर्भाणि यत्स-नाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यन्न भवति तेन समं तस्य[2] सामानाधिकरण्यं व्याप्ति-रित्यादीनि, तथा यत्समानाधिकरणान्योन्याभाव-प्रतियोगि यद्वन्न भवति तेन समं तस्य[3]सामानाधि-करण्यं व्याप्तिरित्यादीनि ;**

विशेषणत्यागाल्लघूनीत्युक्तम् । समानाधिकरणयोरेव व्याप्तिरिति मता-श्रितानीत्यप्यनुकृष्यते । **यत्समानाधिकरणेत्यादि** । यदिति साधनं धूमादि । तत्समानाधिकरणो योन्योन्याभावः घटाद्यन्योन्याभावः, न तु वह्निमदन्योन्याभावः, धूमवान्घटादिर्नेतिवद्वह्निमान्नेत्यप्रतीतेः । तत्प्रति-योगितावच्छेदकं यन्न भवति, वह्निर्न भवति । किं तु घटत्वादिकमेव । तेन वह्निना समं धूमस्य सामानाधिकरण्यं व्याप्तिरित्यर्थः । अस्य लक्षणस्य मणावनुक्तत्वेपि अत्यन्ताभावगर्भलक्षणे अवच्छेदकघटि-तस्योक्तया अन्योन्याभावगर्भलक्षणेप्युक्तप्रायतया तदभिप्रेतत्वादुप-न्यासः ॥

मणौ कण्ठोक्तमाह—**तथा यदिति** । यद्वा यत्समानाधि-करणान्योन्याभावप्रतियोगि यद्वन्न भवति तेन समं तस्य सामानाधिकरण्यं वा स्वसमानाधिकरणान्योन्याभावप्रतियोगि यद्वन्न भवति तत्कत्त्वं वेति मण्युक्तलक्षणद्वयस्यापौनरुक्त्याय परिष्कारपूर्वं एवं द्वेधानुवादो बोध्यः । आदिपदेन यत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यदव-च्छिन्नं न भवति तदवच्छिन्नेन येन यस्य सामानाधिकरण्यं तयोर्व्याप्ति-

[1] णत्यागाल्ल—**क. ट. ग. रा.** [2] तस्येति नास्ति—**ग. रा.** [3] तस्येति नास्ति -**क. ग. रा.**

[1]अनौपाधिकसंबन्ध इत्यस्य विवरणरूपाणि तत्रापि साध्यव्यापकेषु साधनाव्यापकत्वनिषेधपर्यवसितानि यावन्तः साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगिनः तत्प्रतियोगिकात्यन्ताभावासामानाधिकरण्यं व्याप्तिरित्यादीनि, तथा साधनाव्यापकेषु साध्यव्यापकत्वनिषेधपर्यवसितानि यावन्तः साधनसमानाधिकरणात्यन्ताभावप्रतियोगिनः तत्प्रतियोगिकात्यन्ताभावसमानाधिकरणसाध्यसामानाधिकरण्यं व्याप्तिरित्यादीनि ;

---

रित्येवंरूपाणां संभावितानां ग्रहः । अनौपाधिकेति ॥

धूमवह्न्यादिसंबन्धस्यानौपाधिकत्वं हि उपाधेस्तत्राभावे भवति साध्यव्यापकसाधनाव्यापकरूपोपाध्यभावश्च साध्यव्यापकानां साधनां[2]-व्यापकत्वेन वा साधनाव्यापकानां साध्याव्यापकत्वेन वेति द्वेधेति हृदि कृत्वा पक्षधराद्युक्तरीत्याह—तत्रापीति । अप्रतियोगिन इत्यन्तस्य साध्यव्यापका इत्यर्थः । प्रमेयत्वाभिधेयत्वादय इति भावः । तत्प्रतियोगिकेत्यादेस्तद्व्याप्यत्वमित्यर्थः । धूमादिहेतोरिति योज्यम् । साध्यव्यापकव्याप्यत्वमनौपाधिकत्वमित्येवोक्तावात्माश्रयापत्तेरेवमुक्तिः । एवमग्रेऽपि । व्यभिचारिणि हेतावतिव्याप्तिनिरासाय यावदित्यत्रोत्तरत्र चेति ज्ञेयम् । यावन्त इति । अत्रापि प्रतियोगिन इत्यन्तस्य साधनाव्यापका इत्यर्थः । तत्प्रतियोगिकेत्यादेस्तदव्यापकं यत्साध्यमित्यर्थः । मणौ पश्चा-

---

[1] तथा इत्यधिकम्—क. ट. ग. रा. [2] नव्या-ट. ठ. ड.

**तथा स्वाभाविक[1]सबन्धो व्याप्तिरित्यस्य विव-रणरूपाणि यत्सामानाधिकरण्यावच्छेदकरूपवत्त्वं यस्य तस्य सा व्याप्तिरित्यादीनि च ; साध्यसाधन-सामानाधिकरण्यशिरस्कानि वक्राणि व्याप्तिलक्ष-णानि—**

**निरस्तानि ॥**

**उक्तासु वक्ष्यमाणासु च सकललोकसिद्धासु**

---

दुक्तस्य पूर्वमनुवादः पूर्वमुक्तस्य पश्चादनुवादस्तु साध्यव्यापकत्वस्य भाव-रूपतया पूर्वभावित्वाच्च पश्चात्तनसाधनाव्यापकत्वाभाव एव पूर्वं वाच्य इत्यभिप्राय इत्येके । बोधसौकर्यायेत्यपरे । पश्चात्तनस्य तत्प्रतियोगिता-कात्यन्ताभावसमानाधिकरणसाध्यसामानाधिकरण्यपर्यन्तं वक्तव्यत्वादिति। **यत्सामानाधिकरण्येति**। यत्संबन्धितावच्छेदकरूपवत्त्वं यस्येत्येव मणि-पाठस्तथापि यथाश्रुतघटकारणतालक्षणतत्संबन्धितावच्छेदकदण्डत्वाव-च्छिन्ने दण्डे घटव्याप्यतापत्तिदोषात् तद्व्याख्यात्रुक्तदिशा यत्सामा-नाधिकरण्येत्युक्तम् । धूमे वह्निसामानाधिकरण्यावच्छेदकं रूपं धूमत्वं तद्वत्त्वं धूमस्य व्याप्तिरित्यर्थः । यत्सामानाधिकरण्यं यस्य तस्य सा व्याप्तिरित्युक्तौ व्यभिचारिणोऽपि व्याप्यतापत्तेरवच्छेदकेत्युक्तम् । चर्चितमेतल्लक्षणमीश्वरस्यानुमानिकत्वभङ्गे कार्यहेतोः प्रतिपक्षोक्ति-प्रस्तावे ॥

अव्याप्त्यतिव्याप्त्यसंभवैः सर्वलक्षणानि निराह—**उक्तास्विति** । ऊर्ध्वदेशवृष्ट्यधोदेशनदीपूरादिनिष्ठव्याप्तिषु । **वक्ष्यमाणास्विति** ।

[1] कः सं—ग. ट. रा.

**व्यधिकरणसाध्यसाधनव्याप्तिषु आत्माश्रयान्योन्याश्रयचक्रकाश्रयानवस्थाव्याघाताद्यापादकतर्काङ्गभूतासु सामानाधिकरण्यरहितापाद्यापादकव्याप्तिषु व्यतिरेकव्याप्तिषु चाव्याप्तेः । त्वयापि[1] व्याप्तित्वेनास्वीकृते नीलधूमस्य वह्निसामानाधिकरण्ये अतिव्याप्तेश्च । न हि नीलधूमवति वह्न्यत्यन्ताभावः ॥**

व्यधिकरणासिद्धेरदोषत्वोक्तिप्रस्तावे वक्ष्यमाणास्वित्यर्थः । **अतिव्याप्तेश्चेति** । नीलधूमादिनिष्ठवह्निसामानाधिकरण्ये त्वदभिमताव्यभिचरितसंबन्धत्वानौपाधिकसंबन्धत्वस्वाभाविकसंबन्धत्वानां सत्त्वादिति भावः । तदेव व्यनक्ति—**न हीति** । अत्यन्ताभाव इत्युपलक्षणम् । वह्निमदन्योन्याभावो न हीत्यपि [2]ध्येयम् । नीलधूमनिष्ठवह्निसामानाधिकरण्ये न्यूनवृत्तित्वेन गुरुत्वेन च नीलधूमत्वस्यानवच्छेदकत्वेऽपि धूमत्वस्यावच्छेदकत्वेन वह्निसामानाधिकरण्यावच्छेदकरूपवत्त्वस्यापि तत्र सत्त्वात् । ननु धूमत्वावच्छिन्नवह्निसामानाधिकरण्यं नीलधूमनिष्ठमपि व्याप्तित्वेनोपेयते । नीलधूमत्वावच्छिन्ने सामानाधिकरण्यमेव व्याप्तित्वेन नोपेयते । अवच्छेदकान्तरोपपन्नव्याप्यताश्रयवृत्तित्वेन नीलधूमत्वस्यानवच्छेदकत्वादिति चेत् । अस्त्वेवं तथापि लक्षणान्तरे अतिव्याप्तेरनिवारणात् ॥

ननु यथाश्रुते प्रतियोग्यसमानाधिकरणेत्यादिलक्षणेपि नीलधूमसमानाधिकरणात्यन्ताभावप्रतियोगितायां तुषजन्यादिवह्निविशेषत्वेनाव-

[1] अपि इत्यधिकम्—**ग. रा.** [2] द्रष्टव्यम्—**ट ठ.**

**किंच महानसीयवह्नेः पर्वतीयधूमसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकेन महानसीयवह्नित्वेनावच्छिन्नत्वादसंभवः । प्रतियोगितानवच्छेदकावच्छिन्नेति नञ्व्यत्यासे च धूमरूपसाध्यस्यापि वह्निसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकेन प्रमेयत्वेनावच्छिन्नत्वात् तत्समानाधिकरणवह्निरपि धूमव्याप्यः स्यात् ॥**

---

च्छिन्नत्वान्नातिव्याप्तिरिति मन्वानं प्रत्याह—**किंचेति । अवच्छिन्नत्वादिति ।** तथाच तादृशाभावप्रतियोगितावच्छेदकानवच्छिन्नेन सामानाधिकरण्यं नास्ति । किंतु अवच्छिन्नेनैव तदस्तीति भावः । ननु महानसीयवह्नेस्तादृशधर्मावच्छिन्नत्वेपि पर्वतीयवह्नेर्महानसीयवह्नित्वेनानवच्छिन्नत्वात् । तत्सामानाधिकरण्यमादाय पर्वतीयधूमस्य व्याप्यता स्यादेवेति चेन्न । पर्वतीयधूमासमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नवह्निसामानाधिकरण्यमेव महानसीयधूमस्य, तथा महानसीयधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकं पर्वतीयवह्नित्वमिति तदवच्छिन्नवह्निसामानाधिकरण्यमेव पर्वतीयधूमस्येत्येवं सर्वधूमेष्विति, न क्वाप्युक्तरूपाभावप्रतियोगितावच्छेदकानवच्छिन्नसामानाधिकरण्यं धूमस्य लभ्यत इत्यसंभव इति तात्पर्यात् । नञ्व्यत्यासेन प्रतियोगितानवच्छेदकावच्छिन्नत्वमर्थ इति पक्षधरोक्तमनूद्य निराह—**प्रतियोगितेति । धूमरूप**[1]**साध्यस्येति ।** धूमाख्यसाध्यस्येत्यर्थः । अयं धूमवान् वह्निमत्त्वादिति व्यभिचारिप्रयोगे हेतुभूतवह्निसमानाधि-

[1] साध्यपदं न—ट ठ.

**किंच यस्य यदत्यन्ताभावासमानाधिकरणत्वे सति येन सामानाधिकरण्यं[1] तेन तस्य सा व्याप्ति-रित्येवास्तु । लाघवात् । न च केवलान्वयिनि साध्यात्यन्ताभाव[2]स्याप्रसिद्ध्याव्याप्तिः । अत्य-**

---

करणात्यन्ताभावप्रतियोगितायां न प्रमेयत्वमवच्छेदकं वह्निमतिप्रमेयं नास्तीत्यप्रतीतेः । तथाच तदवच्छिन्नधूमरूपसाध्यसामानाधिकरण्यं वह्ने-रप्यस्तीति सोपि व्याप्यः स्यादित्यर्थः ॥

ननु प्रमेयत्वेन रूपेण धूमादिसाध्यव्याप्यता वह्नेरस्त्येव । अयं प्रमे-यवान् वह्निमत्त्वादित्येवंरूपत्वात्तस्य प्रमेयत्वपदेन प्रमेयधूमत्वविवक्षाया-मवच्छेदकत्वस्येहानतिप्रसक्तवृत्तित्वरूपत्वेन प्रमेयधूमत्वस्यापि उक्त-रूपाभावप्रतियोगितावच्छेदकत्वात् । महानसीयादिवह्निविशेषमादाय प्रमेयधूमत्वस्योक्तरूपाभावप्रतियोगितानवच्छेदकत्वेपि यदीत्यत्र यदव-च्छिन्नेति विवक्षायामयोगोलकीयवह्निमादाय वह्नित्वावच्छिन्नसमाना-धिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वं प्रमेयधूमत्वेप्यस्तीत्युक्तप्रति-योगितानवच्छेदकावच्छिन्नसामानाधिकरण्यं व्यभिचारिणि वह्नौ नास्तीति वक्तारं प्रत्याह—**किं च यस्येति** । यस्य धूमादेः । **यदत्यन्तेति** । वह्न्याद्यत्यन्ताभावेत्यर्थः । येन—वह्न्यादिना । सामानाधिकरण्यं यस्येत्यनु-कर्षः । तस्य धूमादेः । तेन वह्न्यादिना । व्याप्तिरित्यर्थः । **लाघवादिति** । अनवच्छेदकावच्छिन्नेत्यादिविशेषणा[3]दानात् अव्यभिचरितसामाना-धिकरण्यरूपत्वादस्येति भावः । न च प्रतियोग्यसमानाधिकरणेत्य-

[1] 'तस्य तेन व्याप्ति' इत्यस्ति—**ट. ग. रा.** [2] वाप—**ट. ग. रा.**
[3] णानुपादानात्—**ठ.**

न्ताभावस्याभावादेव तत्सामानाधिकरण्याभावस्य शुक्तिरूप्यतादात्म्याभावस्येव सुतरां सिद्धेः। उक्तं चैतद्योग्यताप्रस्तावे ॥

किंचात्राधिकरणं देश एव वा काल एव वा उभयं वा उभयानुगतमधिकरणसामान्यं वा। नाद्यः। कालिक्यां गोत्वाश्वत्वव्याप्तावव्याप्तेः। अस्ति हि तयोरपि यदा गोत्वं तदाश्वत्वमिति व्याप्तिः। न द्वितीयः। दैशिक्यां पाकपाकजरूपादिव्याप्तावव्याप्तेः। अस्ति हि तयोरपि [1]यत्रपाकजं रूपं तत्र पाक इति व्याप्तिः। न तृतीयः। अस्य रूपरसादिव्याप्तितोऽन्यत्र सर्वत्राव्याप्तेः। न चतुर्थः। गोत्वरूपहेतुं प्रति देशरूपाधिकरणे गव्यश्वत्वाभावेन तद्व्याप्तावव्याप्तेः। दैशिक्यां व्याप्तौ देशोधिकरणं कालिक्यां काल इति चेत् न। अननुगमात्।

नुक्तौ संयोगसाध्यकहेतुनिष्ठव्याप्तावव्याप्तिः। संयोगस्य व्याप्यवृत्तित्वेन तदभावस्याप्यैकाधिकरण्याभावादिति भावः ॥

सदुपरागेणासदेव तादात्म्यं भातीति मतावष्टम्भेनाह—**शुक्तिरूप्यतादात्म्येति। एतदिति।** अप्रामाणिकस्याप्यभावप्रतियोगित्वम्। **रूपरसादिव्याप्तितोन्यत्रेति।** कृत्तिकोदयरोहिण्युदय[2]नदीपूरवृष्ट्यादिगोत्वाश्वत्व(पाक)पाकजरूपादिस्थले च सर्वत्रेत्यर्थः। **गोत्वरूपेति। अयमश्वत्ववान् गोत्ववत्त्वात्** इत्यादिहेतावित्यर्थः। गत्यन्तराभावादेव-

[1] तयोरपीति नास्ति—**क. ट.**　　[2] यासत्ति—**ठ.**

व्याप्तेरिदानीमेव निरुच्यमानत्वेनात्माश्रयाच्च । कृत्तिकोदयरोहिण्युदयासत्त्योरपि कालतः सामानाधिकरण्यसत्त्वेन तत्र वैयधिकरण्योक्त्ययोगाच्च । मदुक्तरीत्यानुगमसंभवाच्च ॥

किंच त्वन्मतेपि नित्यद्रव्याणां निरधिकरणत्वात्तेषां यदाकाशः तदा[1]नित्यद्रव्यमिति व्याप्तिर्न स्यात् ॥

ननु काल आकाशादेरधिकरणं आकाशः सदा[2]स्तीत्यबाधितप्रतीतेरिति चेत् । तर्हि गगनात्यन्ताभावः केवलान्वयी न स्यात् । किं च सर्वत्राकाश इत्यपि प्रतीतेर्देशोप्याकाशाधिकरणं स्यात् ॥

ननु-स्वरूपसंबन्धेनाकाशः सदा सर्वत्रास्ति समवायवृत्त्या तु नास्तीति तया वृत्त्या[3]रूपादेः

---

मा[4]श्रयेत इत्यत आह—**मदुक्तेति** । यद्देशकालसंबन्धस्य यस्येत्यादिना पूर्ववादे मदुक्तरीत्येत्यर्थः ॥

सामानाधिकरण्यघटितव्याप्तिलक्षणेषु स्थालान्तरेऽव्याप्तिमाह—**किंचेति** । केवलान्वय्यभावप्रतियोगित्वं सदा सर्वत्र सत्त्वं च संबन्धभेदेन युक्तमित्याशङ्क्य प्रतिबन्द्या निराह—**नन्वित्यादिना** ।

---

[1] कालादिरिति व्या—**ट.** दिगिति व्या—**ग. रा.** [2] अपि पदं मधिकम्—**ग. ट.** [3] त्त्या गगनात्यन्ताभावः केवलान्वयीति चेत् । तर्हि रूपादिकं प्रमेयत्वादिकं च संयोगवृत्त्या कुत्रापि नेति तया वृत्त्या रूपादेः प्रमेयत्वादेश्चात्यन्ताभावोपि केवलान्वयी स्यात् । गगनात्यन्ताभावोपि स्वरूपसंबन्धेनैव सर्वत्रास्ति । न तु संयोगादिवृत्तयेति गगनात्य—**क. ट. ग.** [4] श्रीय—**ठ. ड.**

प्रमेयत्वादेश्चात्यन्ताभावोपि केवलान्वयी स्यात् । गगनात्यन्ताभावोपि स्वरूपसंबन्धेनैव सर्वत्रास्ति न तु संयोगादिवृत्त्येति गगनात्यन्ताभावात्यन्ताभावरूपं गगनमपि केवलान्वयि स्यात् ॥

अपि च प्रतियोग्यसमानाधिकरणेति विशेषणं व्यर्थम् । संयोगतदत्यन्ताभावयोर्भिन्नावयवृत्तित्वस्यान्यत्रोक्तत्वात् ॥

किञ्च प्रतियोगित्वस्य त्वन्मते स्वरूपसंबन्धरूपत्वात्तस्य च व्याप्तिरूपानियमगर्भितविशिष्टप्रतीतिजनकत्वगर्भितत्वादात्माश्रयः ॥

अपि चैवं समानाधिकरणसाध्यसाधनव्यक्तिविशेषयोरेव व्याप्तिरिति मते पृथवीत्वस्य गन्धं प्रति व्याप्यत्वं न स्यात् । सर्वस्यापि गन्धस्य प्रत्येकं पृथिवीत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वात् । नहि पृथिवीत्वामिवैकैव गन्धव्यक्तिः सर्वपृथिवी निष्ठा ॥

**अन्यत्रेति** । चन्द्रिकायां तत्त्वविवेकादिप्रकरणे वैशेषिकाधिकरणसुधायां चेत्यर्थः । व्याप्तिरूपनियमगर्भितेति जनकत्वविशेषणम् । नियतपूर्ववृत्तित्वरूपत्वात् जनकत्वस्येति भावः ॥

प्रथमलक्षणं निरस्य द्वितीयलक्षणं च निराह—**अपिचैवमिति**। ननु-तादृशात्यन्ताभावप्रतियोगितावच्छेदकं यन्न भवति तदवच्छिन्नसामानाधिकरण्यं लक्षणार्थः । भवति च गन्धत्वमनवच्छेदकं पृथिवीगन्धवती नेत्यप्रतीतेरितिचेत्तर्हि पूर्वलक्षणाभेद एव । कथंचिद्भेदाभिमाने तु

अपि च गोत्वस्य गोव्यक्तिं प्रति कालिकी व्याप्तिः स्यात् । गोत्ववति प्रलयकाले गोव्यक्तिध्वंसस्य सत्त्वेपि गोव्यक्त्यत्यन्ताभावाभावात् । एवं पृथिवीत्वस्य गन्धेन सह कालिकी व्याप्तिः स्यात् । गन्धोत्पत्तेः प्राग्गन्धाभावस्य[1] सत्त्वेपि गन्धात्यन्ताभावाभावात् ॥

न चात्यन्ताभावपदेन विरोध्यभावमात्रं विवक्षितम्, ध्वंसप्रागभावौ च कालतः प्रतियोगिविरुद्धाविति वाच्यम् । तथात्वे प्रतियोग्यसमानाधिकरणपदवैयर्थ्यात् । न च गोव्यक्तेः क्वचिदत्यन्ताभावस्तावदस्ति । न[2] च सर्वाधारे कालेप्यस्तीति वाच्यम् । तथात्वे हि गोत्वस्याश्वत्वं प्रत्यपि कालिकी व्याप्तिर्न स्यात् ।

तुष्यतु दुर्जन इति न्यायेन दोषान्तरमाह---**अपि च गोत्वस्येति** ॥

पक्षधराद्युक्तमनूद्य निराह—**न चात्यन्ताभावेति । कालत**[3]**इति** । एककाले । **वैयर्थ्यादिति** । संयोगात्यन्ताभावस्य संयोगाविरुद्धत्वेन यत्समानाधिकरणप्रतियोगिविरोध्यभावप्रतियोगितानवच्छेदकत्वाद्युक्तौ संयोगसाध्यकद्रव्यत्वादिनिष्ठव्याप्तावव्याप्त्यनापत्तेरिति भावः । यदुक्तं गोत्वस्य गोव्यक्तिं प्रतीत्यादि तन्न । तस्य गोव्यक्त्य[4]न्तराभावसमानाधिकरणत्वादित्याशङ्क्य निराह—**न च गोव्यक्तेरिति । कालिकीति** । यदा गोत्वं तदाश्वत्वमिति कालिकीत्यर्थः । तद्व्यनक्ति—

[1] न्धप्रागभावस्य-क. ट. ग. रा. [2] स च-ट. ग. [3] ल इ--ठ. ड.
[4] त्यन्ताभाव-ट. ठ. ड.

क्वचिद्देशे सतोऽश्वत्वा[1]भावस्यापि काले सत्त्वात् ॥

किञ्च धूमोपि वह्निव्याप्यो न स्यात्। वह्नेः समवायवृत्त्याधूमसमानाधिकरणात्यन्ताभावप्रतियोगित्वात् ॥

न च साध्यस्य व्याप्तिशरीरान्तर्गततया वृत्त्या साधनसमानाधिकरणात्यन्ताभावा[2]प्र ति यो गि त्वं विवक्षितम्, धूमाग्न्योश्च संयोगवृत्त्यैव व्याप्तिरिति वाच्यम्। व्याप्तेरिदानीमेव निरुच्यमानत्वेनात्माश्रयात् ॥

न च समवायवृत्त्या वह्न्यत्यन्ताभावस्य संयोगवृत्त्या वह्निसमानाधिकरणतया प्रतियोगिव्यधिकरणपदेनैव तन्निरास इति वाच्यम्। येन हि सम्बन्धेन यत्र हि[3] प्रतियोगिनो भावः तेनैव

क्वचिदिति । यत्तु तदाश्वत्वात्यन्ताभावस्य काले सत्त्वेपि तस्य प्रतियोगिसमानाधिकरणत्वात् प्रतियोगिव्यधिकरणपदेन तन्निरास इति तन्न । येन हि संबन्धेनेत्यादिवक्ष्यमाणदिशा तस्यापि प्रतियोगिव्यधिकरणत्वाद्व्य[4]क्त्यन्तराभावस्यापि व्यक्तिदशायां प्रतियोगिसमानाधिकरणत्वेनोक्तदोषापरिहाराच्च ॥

पक्षधरायुक्तमाशङ्कते—न च साध्यस्येति । ननु—मास्तु व्याप्तिशरीरेत्यादिविवक्षा । [5]अथापि समवायवृत्त्या वह्न्यभावसामानाधिकरण्येन धूमस्याव्याप्यतापत्तिर्नेत्याशङ्क्य निराह—न च समवायेति ।

[1] त्वात्यन्ता—ट. ग. रा. [2] वप्र—क. ट. [3] हि' ने—ग. रा. ट.
[4] व्यक्तधत्यन्ता—ट. ठ. ड. [5] अथापि इति नास्ति—ट ठ.

सम्बन्धेन तत्र प्रतियोगिनोऽवृत्तिरेव हि प्रतियोगिवैयधिकरण्यम् । अन्यथा काले सर्वाभावानां प्रतियोगिसमानाधिकरणतया प्रतियोगिव्यधिकरणा[1]सिद्धेः ॥

किंच प्रतियोगिव्यधिकरणपदेन यत्किंचित्प्रतियोगिव्यधिकरणत्वं विवक्षितम् यावत्प्रतियोगिव्यधिकरणत्वम् । नाद्यः । अयं संयोगविशेषाभाववान् द्रव्यत्वादिति सदनुमानाव्याप्तेः । साध्याभावरूपस्य संयोगस्य स्वप्रतियोगिभूतसंयोगसामान्याभावव्यधिकरणत्वात् । नान्त्यः । अयं संयोगसामान्याभाववान् द्रव्यत्वादित्यसदनुमानेऽतिव्याप्तेः । साध्याभावरूपस्य संयोगस्य संयोगविशेषाभावरूपप्रतियोगिसामानाधिकरण्येन यावत्प्रतियोगिव्यधिकरणत्वाभावात् ॥

[2] यच्चोक्तमन्योन्याभावगर्भलक्षणेषु प्रतियोग्यसमानाधिकरणेति विशेषणत्यागाल्लाघवमिति । तन्न । संयोगात्यन्ताभावस्याव्याप्यवृत्तित्वे[3] न संयुक्तान्योन्याभावस्यापि तत्त्वावश्यं भावात् ।

---

प्रतियोगिनोवृत्तिरित्यत्र प्रतियोगिनो अवृत्तिरितिपदविभागः । समवायसम्बन्धेन च वह्नेरवर्तनात् प्रागुक्तदोषः सुस्थ एवेति भावः । एवमत्यन्ताभावगर्भलक्षणं निरस्यान्योन्याभावगर्भं च निराह—**यच्चोक्त-**

---

[1] णाप्रसि—क. ग. ट. [2] किंचेत्यादिकं नास्ति—ट. ग. रा. [3] त्वे सं—ग. ट. रा.

मूले कपिसंयोगो नेतिवत् मूले वृक्षः कपिसं-युक्तो नेत्यबाधितप्रतीतेः। न चेयं धीः संयोगाभावविषया। घटः पटो नेतिवत्तादात्म्यनिषेधरूपत्वात्। अन्यथान्योन्याभावोच्छेदः स्यात्। विरोधस्य च संयोगतदत्यन्ताभावयोरिवावच्छेदकभेदेन परिहारात्॥

ननु—यः संयोगाभाववान्वृक्षः स एव संयुक्त इति प्रत्यभिज्ञाविरोध इति चेन्न। प्रत्यभिज्ञा हि किमभेदं विधत्ते किं वा भेदं निषेधति। नाद्यः। एतद्वृक्षत्वेन तयोरभेदस्यापि सत्त्वात्। नान्त्यः। मूले संयुक्तो नेति भेदधीविरोधेन तन्निषेधायोगात्। [1]मूले संयुक्तान्यो-

---

मिति। अत्यन्ताभावप्रतीतिं दृष्टान्तयति—**नेतिवदिति**। नास्तीतिवदित्यर्थः। **अन्योन्याभावोच्छेद इति**। घटः पटो नेत्यादिषु सर्वत्र घटे पटत्वात्यन्ताभावविषयकत्वेनोपपत्तेः सुवचत्वादिति भावः। नन्वेकस्मिन्नेव वृक्षे संयुक्ताभेदः संयुक्तभेदश्च कथं विरोधादित्यत आह—**विरोधस्य चेति**। यथाग्रावच्छेदेन वृक्षे कपिसंयोगो मूलावच्छेदेन तदत्यन्ताभावः एवमग्रावच्छेदेन संयुक्तवृक्षाभेदो मूलावच्छेदेन भेद इत्युपपत्तेरित्यर्थः॥

अन्योन्याभावस्याव्याप्यवृत्तित्वे बाधकमाशङ्कते—**नन्विति**। **तयोरिति**। संयोगाभाववतः संयुक्तस्य चेत्यर्थः। अन्योन्याभावस्याप्यव्याप्यवृत्तित्वाभावे बाधकमाह—**किंच मूल इति**। अनुमितिज्ञानपर्या-

[1] किं चेत्यधिकम्—क. ग. रा.

न्याभावो न चेन्मूले संयुक्तान्योन्याभावात्यन्ताभावरूपो यः[1] संयोगस्तद्धीश्च स्यात् । त्वन्मतेन्योन्याभावात्यन्ताभावस्यान्योन्याभावप्रतियोगितावच्छेदकधर्मरूपत्वात् । प्रकृते च संयोगस्य तदवच्छेदकत्वात् ॥

किं चानुमितिहेतुः किमत्यन्ताभावादिगर्भाणामुक्तसर्वव्याप्तीनां ज्ञानं किं वा लघ्व्या अन्योन्याभावगर्भाया एव ज्ञानं यद्वा कदाचित्क[2]स्यचिज्ज्ञानम् । नाद्यः । एकैकज्ञानेप्यनुमितिदर्शनात् । न द्वितीयः । अत्यन्ताभावगर्भव्याप्तिज्ञानेप्यनुमितिदर्शनात् । अन्योन्याभावपक्षे लाघवस्य निरासाच्च । न तृतीयः । अननुगमात् । अनुपपद्यमानज्ञानत्वेन क्रोडीकारे चावश्यकत्वाल्लाघवाच्चानुपपत्तिरेव व्याप्तिरस्त्विति दिक् ॥

लोचनयाप्यस्मदुक्तव्याप्तिज्ञानमेव कारणं न त्वदुक्तमतोपि न त्वदुक्तव्याप्तिलक्षणं युक्तमित्याह— **किंचानुमितीति** । ननु—अत्यन्ताभावगर्भव्याप्तिज्ञानेनानुमितिदृष्टावपि लाघवादन्योन्याभावगर्भव्याप्तिज्ञानमेव हेतुः । भूयोदर्शनवादे मणिकृता तथैवोक्तेरित्यत आह—**अन्योन्याभावेति** । अन्योन्याभावस्याव्याप्यवृत्तित्वोक्त्या प्रतियोग्यसमानाधिकरणेति तत्राप्यवश्यं वाच्यत्वादिति भावः ॥

**इति दिगिति** । अयं भावः । अनौपाधिक[3]संबन्धत्वस्य द्वेधा

[1] यः इतिनास्ति—क. ट. रा. [2] स्याश्चि—ग. क. ट. रा. [3] धिकत्वस्य द्वेधा—ड. कसंबन्धत्वस्य द्वे—ट.

**तस्मात्परोक्तव्याप्तिलक्षणानां अधोदेशनदीपू-**

विवरणं यत्कृतं तत्र साध्यव्यापकव्याप्यत्वपर्यवसितानौपाधिकत्वज्ञानमनुमितिहेतुरुत साधनाव्यापकाव्याप्यसाध्यकत्व[1]पर्यवसितमनौपाधिकत्वज्ञानमथोभयं कदाचित् किंचिज्ज्ञानमिति वा। नाद्यत्रयं युक्तम्। यत्किञ्चिज्ज्ञानादप्यनुमितिदर्शनात्। न चतुर्थः। अननुगमात्। किंच सर्वत्रापि सामानाधिकरण्यं नाम समानेनाधिकरणेन संबन्धः। संबन्धत्वं च विशिष्टधीनियामकत्वम्। नियामकत्वं च विशिष्टधीजनकत्वेसत्यविशिष्टज्ञानाजनकत्वम्। जनकत्वं चानन्यथासिद्धनियतपूर्ववृत्तित्वमित्यात्माश्रयापत्तिः। न च नियामकत्वं संसर्गविधयैव भासते न तु प्रकारत्वेनातो नात्माश्रयः इति युक्तम्। संबन्धज्ञानं संबन्धविशेष्यकं संबन्धविशेषणकं वा व्याप्तिज्ञानहेतुरिति वाच्यम्। अन्यथा सामानाधिकरण्यसंदेहप्रतिबन्धकत्वानुपपत्तेः। तथा च संबन्धत्वं प्रकार एवेत्यवश्यं वाच्यत्वेनात्माश्रयापरिहारात्। यत्तु विशिष्टधीनियामकत्वरूपसंबन्धत्वस्य प्रकारत्वेन भानावश्यंभावस्तदापि संयोगत्वादिना रूपेणैव भानमिति। तन्न। तथात्वेऽननुगमापत्तेः। समवायत्वेन भानस्थले समवायत्वस्यापि नित्यसंबन्धत्वरूपत्वेनात्माश्रयानिरासाच्च। किंचावच्छेदकत्वमप्यवच्छित्तिप्रत्ययजनकत्वं चेदात्माश्रयाद्यापत्तिः। अन्यूनानतिरिक्तवृत्तित्वं चेत् धूमत्वस्यापि वह्निसामानाधिकरण्यन्यूनवृत्तित्वादन्त्यलक्षणमलक्षणं स्यात्। इत्यादिरूपेण तदभिमतलक्षणानि सर्वाण्यपि दूष्याणीति ॥

**तस्मादिति**। दोषाणां सम्यगुपपादितत्वादिति वा अपरिहार्यत्वादिति वार्थः। परोक्तवक्रव्याप्तिलक्षणानां चतुर्दशदोषा इत्यनेनान्वयः। उक्तान्दोषान् सङ्ग्रहेणानुवदति—**अधो देशेति**।

[1] ध्यव्यापकत्वप-. ड. साध्यपदं विहाय—"काव्यापकत्वपर्य"-ट.

रोर्ध्वदेशवृष्ट्यादिव्याप्तिष्वात्माश्रयादितर्काङ्गव्याप्तिषु व्यतिरेकव्याप्तिषु चाव्याप्तिः परीत्या नीलधूमस्य वह्निसामानाधिकरण्येतिव्याप्तिः, महानसीयवह्नेः पर्वतीयधूमव्याप्यत्वादावभावेनासंभवः, गौरवम्, अननुगमः, आत्माश्रयादिकम्, यदा आकाशः तदा दिगित्यादिव्याप्यव्याप्तिः, विशेषणवैयर्थ्यम्, आत्माश्रयः, पृथिवीत्वस्य गन्धेन सह व्याप्याव्याप्तिः, गोत्वस्य गोव्यक्त्या पृथिवीत्वस्य गन्धेन[1] संबन्धेऽति व्याप्तिः, आत्माश्रयः, अन्योन्याभावगर्भलक्षणे परोक्तलाघवायोगः, अननुगमः इति चतुर्दश दोषाः ॥

इति परोक्तवक्रव्याप्तिलक्षणभङ्गः ॥ २ ॥

---

परीत्येति । सिद्धान्ते तत्रापि व्याप्यत्वाङ्गीकारादिति भावः । इत्येवास्तु लाघवादित्युक्तदोषं तात्पर्यतोऽनुवदति—गौरवमिति ।

परोक्तवक्रव्याप्तिलक्षणभङ्गः ॥ २ ॥

## अथ खण्डनोक्तव्याप्तिनिश्चयानुपपत्तिभङ्गः ॥ ३ ॥

व्याप्तिग्रहोपायस्तु पदशक्ति[1]प्रस्तावे दर्शितः ।

ननु तर्कं विना व्याप्त्यग्रहात्तर्कस्य च व्याप्तिधीसापेक्षत्वादनवस्थेति चेत् । अत्र कचित्—यत्राप्तवाक्येन व्याप्तिधीर्न तत्र तर्कापेक्षा । न च तत्र व्याप्तिनिश्चयोऽनुमानादेर्वेति वाच्यम् । पित्रादौ स्वतः सिद्धश्रद्धयानाप्तत्वशङ्कानुदयात् । प्रात्यक्षिकी व्याप्तिधीपरंपराप्यन्ततोऽत्रैव विश्राम्यतीत्याहुः ॥

---

### अथ खण्डनोक्तव्याप्तिनिश्चयानुपपत्तिभङ्गः ॥ ३ ॥

नन्वस्तु भवदुक्तैवानुपपत्तिरूपा व्याप्तिर्न तु परोक्ता । तद्ग्रहोपायस्तु न संभवति । अनुगतजातेर्निरासेन सामान्यप्रत्यासत्तेरभावादित्यत आह—**व्याप्तीति** । सादृश्यादिना तद्ग्रहस्योपपादितत्वादिति भावः । [2]खण्डनोक्तां व्याप्तिग्रहानुपपत्तिं निरसितुमाशङ्कते—**नन्विति** । **तर्कं विना व्याप्त्यग्रहादिति** । अनिष्टप्रसञ्जनरूपतर्काभावे व्यभिचारादिशङ्कया प्रतिबन्धेन व्याप्त्यनिश्चयादित्यर्थः । **अत्रैव विश्राम्यतीति** । आप्तवाक्यजन्यव्याप्तिधियामेवेत्यर्थः । अत्रारुचिबीजं तु श्रद्धया सिद्धत्वेपि न्यायतोनुपपादितत्वे न्यायासाध्ये निःशङ्कप्रवृत्तेरयोगात्

[1] क्तिग्रह—ट. ग. ग्रहण—ग.. [2] मण्ड—ट. ड.

**अपिचानादिसिद्धकार्यकारण[1] मूलाः केचन तर्काः । न चात्र देहात्मत्वादाविव बाधोस्तीति न तत्र तर्का[2] पेक्षा । [3] यत्रापि जन्मान्तरानुभूत-व्याप्तिस्मृतिहेतुः न तत्र तर्कापेक्षा । इतरापि-व्याप्तिधीरन्ततोत्रैव पर्यवस्यतीत्यस्तु । किंच या निर्दोषश्रुत्या निर्दोषज्ञानरूपसाक्षिणा वा सिद्धा-**

---

तदर्थं न्यायानुसंधाने स्यादेवानवस्थेत्येवं ज्ञेयम् । **अनादीति ।** अनादिसिद्धत्वेन ज्ञाता निःशङ्कमवगम्यमानाः ये कार्यकारणभावाः तन्मूलाः केचन तर्का बीजाभावे अङ्कुराभाव इत्यादयः इत्यर्थः । **देहात्मत्वादाविति** । तत्र युक्त्यादिबाधो यथा न तथानादिसिद्धकार्यकारणभावमूलतर्केष्वस्तीति न तत्र तर्कापेक्षेत्यर्थः ॥

नन्वयं पक्षः मणावेव कार्यकारणभावादेरनादिसिद्धत्वेपि तत्र प्रमाणानुसरणेऽनुमान एव पर्यवसानादनवस्थैवेति दूषित इत्यतः पक्षान्तरमाह—**किंचेति ।** यस्तर्को व्याप्त्यनुभवमूलकस्तत्र तर्कान्तरापेक्षायामपि व्याप्तिस्मृतिमूलतर्के न तर्कान्तरापेक्षेति नानवस्थेत्यर्थः । **हेतुरिति ।** तर्कस्येति योज्यम् । व्याप्त्यनुभवमूलतर्के का गतिरित्यत आह—**इतरापीति ।** अनुभवरूपव्याप्तिधीरपीत्यर्थः । नन्वयमपि पक्षःस्तन्यपानादावनवस्थोद्धारेपि वह्निधूमयोर्व्याप्तौ गृह्यमाणायामनवस्थेति पक्षधरादौ दूषित इति चेन्न । अन्ततोप्यत्रैव सर्वापि व्याप्तिधीः पर्यवस्यतीत्युक्तत्वेनादोषत्वात् ॥

पक्षान्तरं चाह—**किंच येति । श्रुत्येति ।** ब्राह्मणो न हन्तव्यः

---

[1] णभावमू–ट.ग रा. [2] र्कान्तरापे–उ. ट. रा. [3] किंचेत्यधिकम्–ट. क. ग रा.

व्याप्तिर्न तत्र तर्कापेक्षा । अन्यापि व्याप्तिधीरत्रैव विश्राम्यतीति नानवस्था । उक्तं हि—

"न परीक्षानवस्थास्यात्साक्षिसिद्धे त्वसंशयादि"ति ॥

अपिच न तर्कः साक्षाद्व्याप्तिग्राहकः । भूयोदर्शनव्यभिचारादर्शनसहकृतप्रत्यक्षेणैव तद्ग्रहात् । या तु व्याप्तिग्राहिणः प्रत्यक्षस्य भूयोदर्शनव्यभिचारादर्शनोपाध्यभावनिश्चयाः सहकारिण इति पद्धतौ उपाध्यभावनिश्चयस्य सहकारित्वोक्तिः सोपाधिशङ्कास्थलाभिप्राया न तु सार्वत्रिकाभिप्राया । अन्यथोपाध्यभावनिश्चयस्य व्याप्तिसापेक्षतर्काधीनत्वेनानवस्थापातात् । पद्धतावेव तर्कस्य क्वाचि-

गौः न पदा स्पृष्टव्येत्यादौ यो ब्राह्मणः स न हन्तव्य इत्यादिव्याप्तिः श्रुतिसिद्धा । यज्जलपानं तत्सुखसाधनमित्यादिव्याप्तिः साक्षिसिद्धा । श्रुत्याद्यन्यस्थलीयव्याप्तिधीः कथमित्यत आह — **अन्यापीति । उक्तंहीति ।** ज्ञानपादीयानुव्याख्याने । परीक्षा नाम तर्क एव ॥

सर्वव्याप्तिधियस्तत्रैव पर्यवसाने विवादिनं प्रति भूयोदर्शनवादे मणौ सिद्धान्तितं पक्षमुपेत्याह—**अपि चेति ।** न साक्षाद्व्याप्तिग्राहक इत्यस्य किंत्वित्यनेनान्वयः । किं तर्हि साक्षाद्व्याप्तिग्राहकमित्यत आह—**भूयोदर्शनेति ।** बहुषु स्थलेषु साध्यसाधनयोः सहचारदर्शने[1]त्यर्थः । **व्यभिचारेति ।** हेतोः साध्याभावसंबन्धादर्शनेत्यर्थः ।

[1] नेने—ड.

त्कत्वोक्तेश्च । पार्थिवत्वलोहलेख्यत्वयोस्तु वज्र एव व्यभिचारदर्शनात्तद्ग्रहः । उक्तं हि—

"अदृष्टे व्यभिचारे तु साधकं तदिति स्फुटम् ।
ज्ञायते साक्षिणैवाद्धा मानाबाधे न तद्भवेत्" ॥

इति । किंतु व्यभिचारशङ्कानिवृत्तिद्वारा । शङ्का तु क्वाचित्कैव । सा च क्वाचित्केन[1] तर्केण निरस्यत इति न[2] तत्र तर्कापेक्षा । ननु तर्कानवतारे विशेषादर्शनस्य सर्वत्र सत्त्वात्—

"सर्वत्र शङ्कया भाव्यं नियामकमपश्यताम्" ।

---

प्रत्यक्षेण—चक्षुरादिना । नन्वेवं यत्पार्थिवं तल्लोहलेख्यमिति बहुषु स्थलेषु सहचारदर्शनाद्व्यभिचारादर्शनाच्च व्याप्तिग्रहः स्यादित्यत आह— **पार्थिवत्वेति** । वज्रे—वज्रमणौ । **उक्तं हीति** । भक्तिपादीयानुव्याख्याने व्यभिचारादर्शनादिसहकृतं प्रत्यक्षं व्याप्तिनिश्चायकमित्येतदुक्तमित्यर्थः । तुरवधारणे । तल्लिङ्गं धूमादिकं वह्न्यादिसाध्यव्यभिचारेऽद्धा सर्वथाप्यदृष्ट एव सति तस्य वह्नेः साधकं व्याप्यं न तु व्यभिचारदर्शने[3] प्रमाणबाधे तु साधकं न भवेदित्यर्थः । **शङ्कानिवृत्तिद्वारेति** । तर्को व्याप्तिग्राहक इत्यनुकर्षः । विशेषादर्शनस्य व्यभिचारिव्यावृत्तविशेषादर्शनस्य[4] सर्वत्र सत्त्वादित्यस्य शङ्का सार्वत्रिकी स्यादित्यन्वयः । व्याघातावधिराशङ्केति वक्ष्यमाणोदयनवाक्यं वक्ष्यमाणाद्व्याघातावधित्वाच्छङ्काया इति भक्तिपादीयछललक्षणोक्तिप्रस्तावगतसुधावाक्यं हृदि-

[1] नैव त—ट. ग. [2] न सर्वत्र त—ट. क. ग. ग. [3] न प्र—ड.
[4] स्य तत्र सत्त्वादि—ड. स्य अत्र—ठ.

इति न्यायेन शङ्का सार्वत्रिकी स्यादिति चेन्न । किमियं शङ्का स्वार्थानुमाने स्यात् परार्थानुमाने वा । आद्येपि स्वारसिकी वा आधेया वा । नाद्यः । एवं शङ्कायां चार्वाकस्य प्रत्यक्षेपि करचरणादि-विशेषदर्शनेऽद्वैतिनोपि वेदनिर्दोषत्वज्ञाने उप-क्रमादिलिङ्गानां तात्पर्याव्यभिचारज्ञाने च स्वार्थव्यभिचारशङ्कापातात् । शङ्काविषयकज्ञानेपि स्वार्थस्य व्यभिचारशङ्कया त्वदुक्त[1]व्यभिचार-शङ्काया एव सिद्ध्यापत्तेश्च । यदि च तत्र त्रिचतुर-[2]कक्ष्यानन्तरं कोटिस्मरणाद्यभावान्न शङ्का । तर्हीहापि न विशेषादर्शनमात्रं संशयसामग्री । किंतु कोटिस्मरणादिसहितम् । तथा च कतिपयकक्ष्या-नन्तरं कुत्रचित्कोट्यस्मरणस्य कुत्रचिदुत्कटविष-यान्तरसंचारस्य कुत्रचिज्जिज्ञासाभावस्य कुत्रचित्--

"[3]यत्त्वादौ श्रद्धया सिद्धं पुनर्न्यायेन साधितम्"।

इति न्यायेन स्वारसिकविश्वासस्या[4]वश्यकत्वान्न

---

कृत्वा व्याघातभिया एवं शङ्का न कार्येति भावेन व्याख्यातमाह---- **एवं शङ्कायामिति** । एवं सर्वत्र शङ्कायाम् । अनुमानाप्रामाण्यवादी-चार्वाक एवेति चार्वाकस्येत्युक्तम । सर्वखण्डनवादी मण्डनमिश्रो-प्यद्वैतवादीत्यद्वैतिनोपीत्युक्तम् । अनेन स्वक्रियाविरोध उपपादितः ॥

परमुखेन समाधिं वाचयित्वा समं प्रकृतेपीत्याह—**यदीति** ।

---

[1] व्यभिचारपदं न—**क. ट. ग.** त्वदुक्तेति नास्ति **रा.** [2] त्रिक—**रा.**
[3] यत्रादौ—**ट. ग. रा.** [4] स्य चाव—**ट. ग. रा.**

सर्वत्र शङ्का। न हि कश्चिदपि यावज्जीवं कोटिस्मरण[1]धारायामेव व्याप्रियमाणोनुभूयते। न चाविरळलग्नाशङ्काधारानुभूयते। येन फलबलात्कोटिस्मरणादिधाराया अविच्छेदः कल्प्येत। अन्यथा प्रत्यक्षेपि विशेषदर्शनधारायां वेदेपि वेदनिर्दोषत्व[2]ज्ञानधारायां च व्याप्रियेत। उक्तं हि—

यावच्छक्तिपरीक्षायामुपजीव्यस्य बाधने।
दोषो नाशोधिते दोष उपजीव्यत्वमस्त्वलम्॥

इति। द्वितीयेपि स्वार्थानुमाने शङ्काधायकं न तावत्प्रतिवादिवाक्यम्। अतिप्रङ्गात्। तस्य तदानुपस्थितेश्च नाप्युपाधिशङ्का। तस्या

**फलबलादिति**। शङ्कारूपफलबलादित्यर्थः। **अन्यथेति**। शङ्काभावेपि परंपराकल्पन इत्यर्थः। **उक्तं हीति**। विश्वासादिना प्रमाणत्वेन सिद्धस्य शङ्कानास्पदत्वं ज्ञानपादीयानुव्याख्याने उक्तमित्यर्थः। परीक्षायां सत्यां प्रमाणत्वेन निश्चितस्येति शेषः। **अशोधिते**। तर्कादिना अप्रमाणाद्विविक्ते। उपजीवकेन बाधेपि न दोषः। ननु उपजीव्यं कथं बाध्यमित्यत आह—**उपजीव्यत्वमस्त्वलमिति**। उपजीव्यत्वमात्रमप्रयोजकमिति भावः। **द्वितीयेपीति**। स्वार्थानुमाने आहितशङ्का भवतीति पक्षेपीत्यर्थः। **अतिप्रसङ्गादिति**। प्रत्यक्षेपि करचरणादिविशेषदर्शन इत्युक्तस्थलेष्वपि प्रतिवादिवाक्याच्छङ्काप्रसङ्गादित्यर्थः। **उपाधिशङ्केति**। शङ्काधायिकेत्यनुकर्षः।

[1] णादि–**ग. ग.** [2] ज्ञापकादि–**ट. ग. रा.** ज्ञापक–**क.**

अप्युक्तन्यायेन सर्वत्रासंभवात् । क्वाचित्क्यास्तु क्वाचित्केनैव तर्केण निरासात् । निरासस्त्वेवम्—धूमस्याग्निना संबन्धे उपाधिरैन्द्रियिकश्चेदुपलभ्येत । न चोपलभ्यते । अतीन्द्रियोपि प्रमाणान्तरवेद्यः स्यात् । न च तत्प्रमाणमुपलभ्यत इति । अत एव पद्धतौ "सोयं कश्चित्प्रमाणान्तारानुग्राहको भवती"ति तर्कस्य क्वाचित्कत्वमेवोक्तम् । प्रमाणेनानुपलभ्यमानोपि कश्चिदुपाधिर्भविष्यतीति निर्बीजाशङ्कापिशाची तु प्रामाणिकत्वेन त्वदभिमतेप्यद्वैतादौ बाधकसहस्रं अप्रामाणिकत्वेन त्वदभिमतेपि द्वैतादौ साधकसहस्रं निर्दोषत्वेन त्वदभिमते[1] त्वद्वाक्ये दोषसहस्रं च भविष्यतीत्याद्यतिप्रसङ्गहेतुत्वात् सप्तमरसादिशङ्कासमाना न व्याप्तिनिश्चयोत्पत्तिप्रतिबन्धिका । नाप्युत्पन्नस्य व्याप्तिनिश्चयस्य कार्यप्रतिबन्धिका । उत्पन्नेन निश्चयेनैव शङ्कोत्पत्तिप्रतिबन्धात् । न हि ग्राह्यसंशयमात्रं तन्निश्चयप्रतिबन्धकम् । न चोत्पन्नस्य

---

**उक्तेति** । कोटिस्मरणाद्यभावादित्यादिनोक्तन्यायेनेत्यर्थः । **अत एवेति** । क्वाचित्कोपाधिस्थल एव तर्कानुसरणादित्यर्थः । **त्वदभिमतेति** । खण्डनकारं प्रत्युच्यते । न व्याप्तिनिश्चयोत्पत्तिप्रतिबन्धिकेत्येतद्व्यनक्ति—**न हीति** । तथात्वे संशयोत्तरप्रत्यक्षस्यानु-

---

[1] तेपि त्व- ट. ग. रा.

व्याप्तिनिश्चयस्य बलवद्बाधकमस्ति । येनौत्सर्गिकं प्रामाण्यमपोद्येत । उक्तं हि—

उत्सर्गतोपि यत्प्राप्तमपवादविवर्जितम् ।
व्यभिचार्यपवादेन मानमेव भविष्यति" ॥

इति । उक्तं च खण्डनेपि—

"अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि ।
अबाधात्तु प्रमामत्र स्वतःप्रामाण्यनिश्चलाम्" ॥

इति । कथं च प्रत्यक्षसिद्धे अन्नादौ निःशङ्कस्य प्रत्यक्षसिद्धायां व्याप्तौ शङ्का । उक्तं च—व्याप्तिप्रत्यक्षस्यापि सहकारिसामर्थ्यात्प्रत्यभिज्ञावदती-

मित्यादेश्चानुदयापातादिति भावः । उक्तं हीति । बलवद्बाधकाभावे प्रमाणमेवेत्येतद्भक्तिपादीयानुव्याख्याने उक्तमित्यर्थः । अपवादेन व्यभिचार्यपि मानमेवेत्यर्थः । स्वतः प्रामाण्यनिश्चलां प्रमां शब्दः करोतीत्यन्वयः ॥

ननु—प्रत्यक्ष[1]व्याप्तौ शङ्कानुदयेप्यन्यव्याप्तौ सा भविष्यति । परिचितप्रत्यक्षस्थळेषु हेतोः साध्यव्यभिचारज्ञानेप्यतीतादौ तच्छङ्कया [2]सास्यादेवेत्यत आह—उक्तं चेति । यद्वा सन्निकृष्टकतिपयधूमादिव्यक्तिव्याप्तिग्रहेप्यतीतादिव्यक्तिषु तद्ग्रहोपायाभावात्कथं सर्वत्र व्याप्तिग्रह इत्यत आह—उक्तं चेति । शक्तिप्याप्त्यादिग्रहसमर्थनवादे । एवमियता ग्रन्थेन तर्कानवतारे विशेषादर्शनस्य सर्वत्र सत्त्वादित्या[3]दिना पूर्वपक्षिणोक्तं विशेषादर्शनमभ्युपेत्य स्वार्थानुमाने स्वारसिकाहितशङ्कयोः स्वव्याघातप्रसङ्गेनानुत्पाद उक्तः । अधुना नास्त्येव विशे-

[1] ऽप्त शङ्कानु–ट. ठ. ड. [2] सा इतिनास्ति–ठ. ड. [3] दिना पू–ट. ड.

तादिविषयकत्वमिति । वाचयिष्यते च परमुखेनैव व्याप्तिधीकाले व्यभिचार[1]व्यावृत्तविशेषदर्शनमप्यस्तीति ॥

नाप्यनुमानप्रामाण्यवादिना तदप्रामाण्यवादिनं प्रतिप्रयुक्ते परार्थानुमाने शङ्का । तत्र प्रतिवादिना मयेदं साध्यं व्यभिचरिष्यतीति सर्वत्र शङ्कोत्थापनादिति द्वितीयः । [2]तथापि तृप्त्यर्थं भोजने परबोधनार्थं शब्दोच्चारणे एवं तत्तत्कार्योद्देशेन तत्तत्कारणे च प्रवृत्तिरूपस्वक्रियाव्याघातेन शङ्कानुदयात् । अत्र—

षादर्शनमित्याह—वाचयिष्यते चेति । अत्रैव भङ्गे किञ्च व्यभिचारिव्यावृत्तविशेषस्यादर्शन इत्यादिग्रन्थेनेति भावः ॥

परार्थानुमाने वेति प्राग्विकल्पितं द्वितीयपक्षं विवृण्वन्नेव निराह—नापीति । द्वितीय इत्यन्वयः । मया चार्वाकेण खण्डनकारेण वा स्वक्रियाव्याघातेन व्याघातो विरोधो हानिर्वा । यदि सर्वत्र शङ्का त्वयोत्थाप्यते तर्हि भोजनमपि [3]तृप्तिं व्यभिचरिष्यति शब्दोच्चारणमपि परबोधं व्यभिचरिष्यतीति भोजनादौ न प्रवृत्तिः स्यात् । अस्ति च सा । अतो न सर्वत्र शङ्का कार्येत्यर्थः । एवं व्याघातावधिराशङ्केत्येतद्धृदि कृत्वा व्याघातदण्डभयेन सर्वत्र शङ्का नोत्पत्तुमर्हतीत्युक्तम् । तस्य खण्डनोक्तं दोषमुद्धर्तुमाह—अत्रेति । व्याघातभयाच्छङ्का नोदेतुमर्हती-

[1] चारि—**क. ग. रा.** [2] तत्रापि-**क.** तवापि—**ग. रा.**
[3] प्रवृत्ति व्यभि—**ठ.**

"शङ्का चेदनुमास्त्येव न चेच्छङ्का ततस्तराम्।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः" ॥

इत्युदयनोक्तदूषणार्थं चार्वाक[1]भूषणार्थं चोक्तं खण्डने—

"व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम्।
व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः" ॥

इति। अस्यार्थः। यदि व्याघातः तर्हि शङ्कास्त्येव। व्याघातो हि स्वक्रियायाः शङ्कया सह

त्युक्तप्रमेये खण्डने उक्तमित्य[2]र्थः। **शङ्काचेदिति**। कालान्तरे देशान्तरे वा अयं हेतुः साध्यं व्यभिचरिष्यतीति शङ्का चेदुत्पन्ना तदानुमानं प्रमाणमस्त्येव। अनुमानं विना कालान्तरदेशान्तरयोरनुपस्थितेः। न चेदेवं शङ्का तदा सुतरां निःसंदेहमनुमानं प्रमाणमस्त्येव। नन्व[3]नुमानं प्रमाणं शङ्का तु कथं निवर्त्येति सुहृद्भावेन पृच्छन्तं प्रत्याह— **तर्कः शङ्कावधिर्मतः**। यावच्छङ्कं तर्कप्रवृत्त्या तर्केण सा निवर्तनीयेति। ननु तर्केपि व्याप्तेरावश्यकत्वात्तत्रापि शङ्कायां तर्कान्तरान्वेषणेनवस्थेति चेत्तत्रोत्तरं—**व्याघातावधिराशङ्केति**। आशङ्का परम्पराजायमाना सती क्वचिद्विश्राम्यति। यत्र शङ्कायां क्रियमाणायां स्वक्रियाव्याघातादिर्भवति तत्र न शङ्कोत्पत्तुमर्हतीति तृतीयपरिच्छेदे कुसुमाञ्जल्युक्तश्लोकार्थः। [4]दुर्गमार्थत्वाद्दूषणसौकर्यार्थमाह—**अस्यार्थ इति**।

---

[1] तोक्त भू—क. [2] न्वयः -ड. [3] न्वस्त्वनु—ठ. [4] दूषणसौकर्यार्थमाह—इत्यस्ति—ठ. ड.

विरोधः। तथा च शङ्का प्रतियोगितया व्याघातनिरूपकत्वेन तन्निर्वाहिकेति कथं शङ्कां विना व्याघातः। नचेद्व्याघातस्तदा निवर्तकाभावात्सुतरां शङ्कास्त्येवेति। अत्र ब्रूमः। किमनुमानप्रामाण्येपि व्याप्तिनिश्चयो न संभवतीत्युच्यते किं वानुमानमात्रमप्रमाणमिति। नाद्यः।

"अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्"।

इति न्यायेन ममेष्टसिद्धेः। न ह्यहमुपेये अनुमानप्रामाण्ये सिद्ध्युपायविशेषेऽभिनिविष्टोस्मि। व्यभिचारिणापि साध्यसिद्धिप्रसङ्गाच्च। स्थापनायां विरक्तस्यापि तत्र दृष्टप्रकारत्यागेनादृष्टेन

---

**तथा च शङ्केति**। तन्निर्वाहिकेत्यन्वयः। व्याघातनिर्वाहिकेत्यर्थः। **कथं**—प्रतियोगितयेत्यादि। एवं च व्याघातावधिराशङ्केति तर्कः शङ्कावधिरिति च कुत इत्युत्तरार्धस्य स्पष्टत्वादर्थो नोक्तः। व्याप्तिनि[1]-श्चयो न संभवतीति तत्संभवस्य तर्काधीनत्वात्। तर्कस्य व्याप्तिसापेक्षत्वेनानवस्थापत्त्यानुत्थानादिति भावः। [2]**अर्के चेदिति**। "इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेदि"ति वाक्यशेषः। अयं च श्लोकः शाबरभाष्यादावुक्तः। ननु तर्काधीनव्याप्तिनिश्चय[3]हेतुकं प्रामाण्यं न प्राप्तमेवेत्यत आह—**न हीति**। अनुमानप्रामाण्यं स्वीकुर्वता व्याप्तिनिश्चय[4]संभवोवश्यं वाच्योन्यथातिप्रसङ्गादिति भावेनाह—**व्यभिचारिणापीति**। अनुमानप्रामाण्यस्वीकारस्तवायुक्त इत्याह—**स्थापनायामिति**। कश्चिदपि मम स्थाप्यः पक्षो नेति वदतः खण्डनकारस्येत्यर्थः। अनुमान-

[1] न सम्भवतीति-ठ. [2] तर्केच-ड. [3] श्चायकं-ड [4] योवश्यं-ट. ठ.

**प्रकारान्तरेणानुमानप्रामाण्यसाधना[1]पाताच्च । व्याप्तिसापेक्षेण तर्केणानवस्थापादनायोगाच्च । प्रमाणतर्काभ्यां व्यवहर्तव्यमिति समयबन्धायोगाच्च । व्याप्तेरनिश्चये शब्दशक्तेरप्यनिश्चयेनाद्वैतश्रुतेरबोधकत्वापाताच्च । लक्षणाया अप्यभिधामूलकत्वात् ॥**

**नान्त्यः । परकीयशङ्कादेरप्यनुमेयतया तच्छ-**

प्रामाण्यमुपेत्य व्याप्तिनिश्चयखण्डनं स्वव्याहतमित्याह—**व्याप्तिसापेक्षेणेति** । अनुमानस्येव तर्कस्यापि व्याप्तिनिश्चयं विनैव साधकत्वसंभवादिति भावः । यद्वा तत्प्रामाण्यनिर्वाहकोपायान्तराभावात् अस्मदुक्तनिर्वाहस्यैव त्वयापि वाच्यत्वात्तद्दूषणोक्तिरयुक्तेत्याह—**व्याप्तीति** । व्याप्तिसापेक्षत्वेन तर्कस्य खण्डनं व्याहतमित्याह—**प्रमाणेति** । परमार्थाद्वैतदृष्ट्या नास्ति समयबन्धादिव्यवहार इत्यत आह—**व्याप्तेरिति** । यद्वा व्याप्तिनिश्चयो न संभवतीत्येतत्स्व[2]व्याहतमित्याह—**व्याप्तेरिति** । केवलव्यतिरेकिणान्वयव्यतिरेकिणा वा प्रमाणलक्षणटीकाद्युक्तदिशा शक्तेर्ग्राह्यत्वादिति भावः । यद्वा वृद्धव्यवहारादावापोद्वापाभ्यां शक्तिग्रहाद्व्याप्तिनिश्चयोपेक्षित इति भावः । लक्षणयाद्वैतज्ञानमस्तु किं शक्तिग्रहणेनेत्यत आह —**लक्षणाया इति** । मुख्यार्थसंबन्धपूर्वकत्वाल्लक्षणाया इति भावः ॥

**नान्त्य इति** । अनुमानमात्रमप्रमाणमिति पक्ष इत्यर्थः ।

[1] नायासापाताच्च—**ट. ग. रा.** [2] त्यत आह—**ट.** त्येतद्व्याख्यानमित्याह—**ठ.**

ङ्कानिवृत्त्यर्थं तत्र वाक्यप्रयोगायोगात् । अनुमानाप्रामाण्यस्यापि प्रत्यक्षाद्यसिद्धत्वेन तत्रानुमानस्यैव प्रमाणयितव्यत्वाच्च । अनुमानाप्रामाण्ये कालान्तरादेरप्यसिद्ध्या तत्र व्यभिचारशङ्कायोगाच्च । प्रवर्तकनिवर्तकयोरिष्टानिष्टसाधनत्वयोरप्यनुमेयत्वेन तव कुत्रापि प्रवृत्तिनिवृत्त्ययोगाच्च। अद्वैते षड्विधतात्पर्यलिङ्गानां प्रपञ्चमिथ्यात्वानुभूतिस्वप्रकाशत्वादौ दृश्य[1]मानत्वानुभूतित्वादिलिङ्गानां चोक्तव्ययोगाच्च । संदिग्धानैकान्तिके व्यावहारिकप्रामाण्यस्या[2]भावात् । विश्वमिथ्यात्वादेरव्यावहारिकत्वाच्च । प्रत्यक्षशब्दाभ्यामिव लिङ्गेनापि ज्ञानोत्पत्तेरुत्पन्नज्ञानस्य बाधाभावेन प्रामाण्यनिश्चयस्य तदधीननिष्कम्पप्रवृत्तेः प्रवृत्ति-

कालान्तरादेरसिद्ध्येति । पररीत्या कालदेशयोरानुमानिकत्वमुपेत्य इदं दूषणं ध्येयम् । सिद्धान्ते साक्षिसिद्धत्वात् । व्यावहारिकप्रामाण्यमुपेत्य तदुक्तिरित्यत आह—**संदिग्धेति** । कालान्त[3]रादौ साध्यं व्यभिचरिष्यति किमिति शङ्कास्पद इत्यर्थः । तात्त्विकप्रामाण्यमेव दृश्यत्वादिहेतूनां उपेयं तद्बोध्य[4]मिथ्यात्वादेस्तात्त्विकत्वात् । अन्यथा व्यावहारिकप्रमाणसिद्धप्रपञ्चवन्मिथ्यात्वमपि मिथ्यैव स्यादिति भावेनाह—**विश्वमिथ्यात्वादेरिति** । ज्ञानोत्पत्तेरित्यादिषष्ठ्यन्तचतुष्टय-

[1] श्यत्वानु—ट क. ग. रा. [2] स्याप्य—क. ग. रा. [3] रे सा—ट

[4] विश्वमिथ्यात्वांशतात्त्व इत्यस्ति—ट.

**सामर्थ्यस्य चानुभवेनानुमाने विशेषापराधाभावाच्च ॥**

**अन्यथानुमानमेव प्रमाणं न तु प्रत्यक्षादीति। प्रत्यक्षेपि नेत्रमेव प्रमाणं न तु श्रोत्रादि वेदेपि द्वैतवाक्यमेव प्रमाणं नत्वद्वैतवाक्यमिति च स्यात्॥**

**एतेनानुमानात्संभावनामात्रेण प्रवृत्त्यादिकं संवादाच्च प्रामाण्याभिमान इति निरस्तम्। अनुमानाज्ज्ञानं जायते तच्च[1] संवादीति वदता त्वयैव तत्प्रामाण्योपगमात्। संभावनात्वे[2]नापि कोट्यन्तरोल्लेखापाताच्च। निष्कम्पप्रवृत्त्यनुपपत्तेश्च। एवंविधस्य पारिभाषिकसंभावनात्वस्य मया[3]भ्युपगमाच्च। प्रत्यक्षादिनापि संभावनामात्र-**

स्यापि अनुभवेनेत्यन्वयः। नेत्रमिति चक्षुरित्यर्थः। **संभावनामात्रेणेति।** उत्कटकोटिकसंदेहमात्रणेत्यर्थः। वह्न्याद्यनुमितिस्थल इति योज्यम्। संभावनामात्रेण प्रवृत्तौ सकम्पैव प्रवृत्तिः स्यात् न तु निष्कम्पेत्याह—**निष्कम्पेति।** ननु मयोपेता संभावना निष्कम्प[4]-प्रवृत्तिजानिकैवेत्यत आह—**एवमिति।** परिभाषामात्रस्यानुमितिप्रामाण्यापरिपन्थित्वादिति भावः। ननु प्रत्यक्षशब्दयोरुत्सर्गतः सर्वत्राबाध एव। क्वचिदेव शुक्तिरूप्यादौ बाधः। अतो न तत्र संभावना-

[1] ज्ञानमित्यधिकम्—ट. क. ग. रा. [2] त्वेह्यनुमितावपि का—ट. त्वे हीनत्वेनापि को—ग. रा. [3] याप्युपग—क. ग रा. [4] नित्र—ट. ठ.

मित्यापाताच्च । औत्सर्गिकोऽबाधः क्वाचित्कबाधश्चोभयत्रापि समः ॥

किंच व्यभिचारिव्यावृत्तविशेषस्यादर्शने संभावनैव कुतः । अन्यथा संदिग्धव्यभिचारिण्यपि सा स्यात् । दर्शने तु यद्दर्शनेन तव संभावना तद्दर्शनेनैव मम निश्चयोस्तु । स विशेषः क इति चेदात्मानमेव पृच्छ । यस्त्वं दर्शनेन संभावितवान् निष्कम्पं प्रवृत्तश्च ॥

यदि तव समकोटि[1]शङ्कासामग्रीविरहो संभावना हेतुः । तर्हि मम समकोटिविषमकोटिकोभयशङ्कासामग्रीविरहो निश्चयहेतुः ॥

यदि च तवान्वेषणेपि व्यभिचारादर्शनसहकृतमुपाध्यदर्शनं वा उपाध्य[2]दर्शनसंभावना वा यावच्छक्तिपरीक्षा वा संभावनाहेतुः । तर्हि ममापि त एव व्याप्तिनिश्चयहेतवः ॥

एवं च यदुक्तं व्याघातो यदीत्यादि तदपराद्धेषो-

मात्रोपगमेन प्रत्यक्षादेरप्रामाण्यापात इत्यत आह—**औत्सर्गिकेति** । **उभयत्रेति** । प्रत्यक्षादावनुमाने चेत्यर्थः । **निष्कम्पं प्रवृत्तश्चेति** । यस्त्वमित्यनुकर्षः ॥

परमुखेनैव विशेषस्वरूपं वाचयन् समं ममापीत्याह—**यदि तवेति** । **अपराद्धेषोरिति** । अपराद्धः लक्ष्यादन्यत्र गतः इषुः शरो यस्य तस्ये

[1] टि कसं–**ट.** टिकशङ्कासा–**ग. रा.** [2] ध्यसंभा–**ट. ग.** भावसं–**रा.**

धानुष्कस्येव वल्गितमात्रम् । नहि मया[1] निष्पन्न भोजन[2] क्रिया वा क्रियायाः शङ्कया सह विरोधो वा तज्ज्ञानं वा शङ्कानिवर्तकमित्युच्यते । येन क्रियायां सत्यां शङ्कानिवृत्त्या तृप्तिकारणत्वानिर्णयः तस्मिंश्च सति क्रियेति त्वदुक्तोन्योन्याश्रयः त्वदुक्ताविरोधि[3] प्रतियोगिशङ्कावश्यंभावश्च[4] स्यात् । किंतु त्वमपि[5] क्रियामूलभूतेन शङ्काविरुद्धकोट्या-लम्बन[6] विशेषदर्शनेन निवृत्तशङ्कः सन् मनसा व्याप्तिं निश्चिनुषे । वाचा तु नेति ब्रूषे । तस्मा-द्वाङ्मनस[7] विसंवादं कुरुषे । न हि तदर्थं तत्र निष्कम्पं प्रवर्तते तच्च तत्कारणं नेति शङ्कते चेति संभवति । तस्मात्त्वद्वचनं मूकोहमितिवत्स्वक्रिया विरुद्धमित्येवोच्यते ॥

त्यर्थः । त्वदुक्तदूषणमत्र न लग्नमथापि तद्दुःखेन व्याघातो यदि शङ्कास्तीत्यादि केवलं [8] वल्गनस्यैवेत्यर्थः । कथं वल्गनं दूषणमेव कुतो नेत्यत आह— **न हीति** । **निष्पन्नेति** । तृप्त्युद्देशेनेति योज्यम् । विरोधः—व्याघातरूपः । **शङ्केति** । भोजनक्रिया तृप्तिं व्यभिचरिष्यती-त्येवंरूपेत्यर्थः । **क्रियायामिति** । तृप्त्युद्देशेनेति योज्यम् । **शङ्काविरुद्धेति** । क्रिया तृप्तिं न व्यभिचरिष्यतीत्येवंरूपविरुद्धकोटि . . . . . । **वाङ्मनसेति** । अचतुरेत्यादिना निपातनात् साधु[9] ॥

[1] मायानि—ट. क. [2] नादि क्रि—ट. क. ग. ग. [3] धप्र—ट. रा. [4] स्यादर्श—ग. रा. [5] स्वक्रि—ट. ग. ग. [6] नेन वि—ट. ग. रा. [7] विवा—ट. ग. [8] ल्गितमे—ठ. [9] धुः—ठ. ड.

किंच शङ्कानिवर्तकेन व्याघातेन [1]निवर्त्यायाः शङ्कायाः स्वस्मात्पूर्वसत्त्वमेवापेक्ष्यते । तावतैव ध्वंसं प्रतीव प्रतियोगित्वोपपत्तेः। न तु यावत्स्वावस्थानं सहभावः । तथात्वे हि विरोध एव न स्यात् । नहि विशेषदर्शननिवर्त्या शङ्का बाधनिवर्त्या भ्रान्तिः ब्रह्मज्ञाननिवर्त्याविद्या तेजोनिवर्त्यं तिमिरं च निवर्तकसमकालं दृष्टम् । भिन्नकालीना च शङ्का व्याघातेन निवर्तितत्वान्न व्याघातकालेऽस्ति । येन तर्कापेक्षा स्यात्। अन्यथा ब्रह्मज्ञानाद्यनन्तरमप्यविद्यादिकं स्यात् ॥

एतेन—'व्याघातस्य स्वरूपसतः शङ्कानिवर्तकत्वे शङ्का नित्यानिवृत्ता स्यात् । व्याघातोद्भावनवैयर्थ्यं च स्यात् । ज्ञातस्य निवर्तकत्वे

शङ्कायाः सत्त्वमुपेत्यापि न दोष इत्याह —**किं चेति । विरोध एव न स्यादिति ।** सहानवस्थानरूपत्वाद्विरोधस्येति भावः । नाजात एकोऽन्यं हन्ति नाप्यन्याधार इति न्यायेन वध्यघातकस्थले सहावस्थानमावश्यकमित्यतो देशतस्तथात्वेऽपि न कालतस्तथात्वं किंतु पौर्वापर्यमेवेति भावेनाह—**न हीति ।** निवर्त्याविद्येत्यत्राविद्येति विभागः ॥

ननु यदाकदाचिच्छङ्कायाः सत्त्वे स्यादेव तन्निवृत्त्यर्थं तर्कापेक्षेत्यनवस्थापत्तिरेवेत्यत आह—**भिन्नेति ।** इष्टापत्तिरित्यत आह—

[1] न स्वनि–ट. क. ग. ग.

व्याघातरूपविरोधस्य तदभावव्याप्यत्वात्मकतया व्याप्तिगर्भितत्वेन तज्ज्ञानाय पुनस्तर्कापेक्षेति' खण्डनश्लोकस्य व्याख्यानान्तरमप्यपास्तम् । स्वक्रियामूलभूतविशेषदर्शनमेव शङ्कानिवर्तकमित्युक्तत्वात् । व्याघातावधित्वाच्छङ्काया इति सुधाया अप्ययमेवाभिप्रायः। केचित्तु-व्यभिचारज्ञानाभावसमानकालीनमन्वयव्यतिरेकानुविधायित्वज्ञानं शङ्कानिवर्तकम् न तु तत्प्रयोज्या क्रिया न च क्रियाज्ञानं शङ्कानिवर्तकम् येनान्योन्याश्रयः स्यात् इत्याहुः ॥

इति खण्डनोक्तव्याप्तिनिश्चयानुपपत्तिभङ्गः ॥ ३ ॥

**व्याघातेति** । **तदभावेति** । शङ्काभावव्याप्येत्यर्थः । **व्याख्यानान्तरेति** । व्याघातो यदि स्वरूपसन् शङ्कानिवर्तकस्तर्हि शङ्का नित्य[1] निवृत्ता स्यात् इति शेषः । व्याघातस्य स्वरूपसतः सर्वदाभावात् । न चैत[2]त्स्वरूपसन्निवर्तको न चेत्तज्ज्ञानाय व्याप्तिज्ञानापेक्षायां व्यभिचारशङ्कास्त्येवेत्येवं व्याख्यानान्तरमित्यर्थः । **स्वक्रियेति** । प्रवृत्त्यादिरूपस्वक्रियेत्यर्थः । **उक्तत्वादिति** । न हि मयेत्यादिपूर्वग्रन्थेनोक्तत्वादित्यर्थः । **सुधाया अपीति** । भक्तिपादीयाद्यनये—

"जातिः स्वव्याहतिर्ज्ञेया छलमर्थान्तरोत्तर"

मित्येतद्व्याख्यानसुधाया अपि न हि मयेत्यादिनोक्त एवाभिप्राय इत्यर्थः । **अन्वयेति** । भोजनादौ सति तृप्त्यादि तदभावे तदभाव इत्यन्वयव्यतिरेकानुविधायित्वज्ञानमित्यर्थः । **अन्योन्येति** । प्रागुक्ता-

[1] वृत्त्यनिवृत्त्या—ड. [2] एतदिति नास्ति—ट. ड.

# अथ प्रमेयत्वाभिधेयत्वयोर्व्याप्तिग्रहे खण्डनोक्त सार्वज्ञ्यप्रसङ्गभङ्गः ॥ ४ ॥

[1]अत्रोक्तं खण्डने—

एवं चेत्प्रमेयत्वाभिधेयत्वयोर्व्याप्तिं गृह्णतः सार्वज्ञ्यं स्यात्। तथाच सर्वान्तर्गताशेषविशेषाणां ज्ञातत्वादयं घटो ने[2]ति संशयादिकं न स्यात्।

न्योन्याश्रय इत्यर्थः। अत्रारुचिबीजं तु यत्राप्तवाक्यादिजन्यविशेषदर्शनेन स्वक्रिया तत्रान्वयव्यतिरेकज्ञानाभावात्। अन्वयव्यतिरेकानुविधायित्वज्ञानस्यापि विशेषदर्शनत्वेनास्मदुक्तरीतिरेवानुसर्तव्यत्वात् किमनेनेति ॥

इति खण्डनोक्तव्याप्तिनिश्चयानुपपत्तिभङ्गः ॥ ३ ॥

# अथ प्रमेयत्वाभिधेयत्वयोर्व्याप्तिग्रहे खण्डनोक्तसार्वज्ञ्य प्रसङ्गभङ्गः ॥ ४ ॥

अत्रेति। व्याप्तिज्ञानविषये दूषणमुक्तमित्यर्थः। एवं चेदिति। व्यभिचारा[3]भावसहचारज्ञानसहकृतप्रत्यक्षेण व्याप्तिग्रहश्चेदित्यर्थः। अस्त्वित्यत आह—[4]तथाचेति। संशयादिकं संशय-

[1] यच्चोक्तं–ट. [2] न चेति–क. नवेति–ग.ट.रा. [3] रज्ञानाभावसहकृतप्रत्यक्षेण व्याप्तिश्चेदित्यर्थः इत्यस्ति–ठ. [4] ततश्चेति–ठ.

न च प्रमेयमिति ज्ञानं सर्वविषयकमपि प्रमेयत्वप्रकारकमेव न तु घटत्वादिप्रकारकं, समानप्रकारकमेव च ज्ञानं संशयादिविरोधीति वाच्यम्। तत्प्रकारकत्वं हि तद्वैशिष्ट्यविषयकत्वम्। प्रमेयमिति ज्ञानं[1] च सर्वविषयकत्वाद्घटत्वादिवैशिष्ट्यविषयकमेवेति॥

अत्र[2] केचिदाहुः—यद्यपि प्रमेयमिति [2]ज्ञानं घटत्वादिवैशिष्ट्यविषयकम्। तथापि न घटत्वादिविशेषणज्ञानजन्यं प्रमेयमिति ज्ञानात्पूर्वं घटत्वादिज्ञाननियमे मानाभावात्। जन्यज्ञानस्य संशयादिविरोधित्वे च तद्विशेषणज्ञानजन्यत्वं तन्त्रमिति संशयादिकं युक्तमिति॥

यद्वा यथा ज्ञानस्य स्वाभाविन स्वविषयेण च सह संबन्धे[3] विशिष्टेप्यभावाद्व्यावृत्तो विषयेण सहसंबन्धविशेषोऽन्य एव, यथा वा घटोयमित्यत्र

विपर्ययज्ञानादिकं न स्यादित्यर्थः। संशयाद्युपपत्तिमाशङ्क्य निराह—**न चेति**। **समानेति**। अयं घटो न वेत्यादिसंदेहस्य घट एवायमिति घटत्वादिप्रकारकनिश्चयनिवर्त्यत्वादिति भावः। घटत्वादिप्रकारकमपि भवति प्रमेयत्वेन ज्ञानमित्याह—**तत्प्रकारकत्वं हीति**। घटत्वादिपरामर्शः। **वैशिष्ट्येति**। भासमानवैशिष्ट्यप्रतियोगित्वरूपत्वात्प्रकारत्वस्येति भावः। केचित्तु[4] तार्किकाः॥

विशेष[5]ज्ञानं कारणं नेति मतेनाह—**यद्वेति**। **अन्य एवेति**।

[1] नस्य सर्व-ग. [2] तत्र के-ग रा. [3] अवि-क.ग.ट. सवि-ग.रा.
[4] त् तार्कि-ट.ठ.ड. [5] णज्ञा-ट ठ.

घटघटत्वयोर्विषयत्वेऽविशिष्टेपि घटत्वांशे विशेष्यव्यावृत्तः संबन्धोऽन्य एव। तथा घटोयं प्रमेयमिति ज्ञानद्वयेपि घटत्वस्य भासमानवैशिष्ट्यप्रतियोगित्वरूप[1]प्रकारत्वेऽविशिष्टेपि घटोयमितिज्ञानस्य[2]प्रमेयमिति ज्ञानाद्व्यावृत्तो घटत्ववैशिष्ट्यांशे संबन्धोऽन्य एव। तेन च स्वरूपसता संबन्धेन घटत्वविषयकत्वं संशयविरोधित्वे तन्त्रम्। तच्चप्रमेयमिति ज्ञाने नास्तीति संशयादिकं युक्तम्॥

एतदेवाभिप्रेत्योक्तमाचार्यैः—

"सर्वं सामान्यतो यस्मात्सर्वै[3]रेवानुभूयते"।

इति। सामान्यतः स्वरूपसता सम्बन्धसामान्येन हेतुनेत्यर्थः॥

यद्वा [4]यथा शङ्खे श्वैत्यसाक्षात्कारानुमित्योर्विष-

प्रतियोग्यनुयोगिभावात्स्वाभावसंबन्धाद्विषयाविषयीभावरूपोऽन्य एवेत्यर्थः। घटत्वां[5]शे घटत्वेन[6] सह ज्ञानस्य विशेष्यव्यावृत्तोऽन्य एवेत्यर्थः। ततश्च किमित्यत आह—तेन चेति। उक्तमिति। तैत्तिरीयभाष्ये। प्रकृतोपयोगितयार्थमाह—सामान्यत इति। संबन्धसामान्येति। यादृशसंबन्धेन ज्ञानं संशयादिविरोधि तदन्येन संबन्धेनेत्यर्थः। तादृशसंबन्धे विवादिनं प्रत्याह—यद्वेति। शङ्खः श्वेत इति साक्षात्कारस्य शङ्खत्वादि[7]हेतुजन्यानुमितेश्चेत्यर्थः॥

---

[1] त्वेऽवि—ग. [2] प्रमेयमितिज्ञानस्य इत्यधिकम्—क. [3] रप्य—ग.रा.
[4] यथेति न—क. ट. [5] त्वादौ—ट. घटत्वाघ—ड. [6] घटत्वादिना—ट.ठ.
[7] दितिहे—ड.

यकृतविशेषाभावेपि करण[1]वैजात्यप्रयुक्ताज्जाति-भेदादेव पीतत्वभ्रमाविरोधित्वाविरोधित्वे ; यथा वा मण्डूकवसाञ्जनाक्तनयनस्य पुंसो वंशे चाक्षुष-स्पार्शनयोः साक्षात्कारयोर्विषयकृतविशेषाभावेपि जातिभेदादेवोरगभ्रमानिवर्तकत्वानिवर्तकत्वे ; तथा विषयकृतविशेषाभावेपि सामान्यप्रत्यासत्त्यजन्यं ज्ञानं संशयविरोधि । न तु तज्जन्यम् । कारण-वैजात्यप्रयुक्ताद्वैधर्म्यात् ॥

एतदप्युक्तम्—सामान्यत इति । सामान्य-प्रत्यासत्तिमपेक्ष्येत्यर्थः ॥

अथवा संशयविरोधित्वे न[2] घटत्वप्रकारकत्वमात्रं

ननु — शङ्खगतरेखोपरेखपरिमाणादिविषयकत्वं साक्षात्कार-स्यास्ति नत्वनुमितेरतः कथं विषयकृतविशेषाभावः । मैवम् । यद्विषयकत्वेन भ्रमविरोधित्वं तदंशे विशेषस्याभिप्रेतत्वात् । न हि श्वैत्यांशे द्वयोः कश्चिदपि विशेषोस्तीति भावः । निवर्तकत्वानिवर्त-कत्वे इति । [3]यथायोगमन्वयो न तु यथाक्रमम् । चाक्षुषत्वजात्या-क्रान्तस्यानिवर्तकत्वं प्रत्युतभ्रमजनकत्वमेव स्पार्शनत्वजातियुक्तस्य न निवर्तकत्वमित्यर्थः । न तु तज्जन्यमिति । प्रमेयत्वज्ञानं च प्रमेयत्व-रूपसामान्यप्रत्यासत्तिजन्यमिति वाक्यशेषः । इत्यर्थ इति । यद्यपि

[1] कारणे वै-क. कारणव—ग. ग. [2] त्वे घ-क. ग. त्वं घ—ग

[3] यथाक्रममन्वयः चाक्षुषेनि निर्दोषचाक्षुषेत्यर्थः. न तु तज्जन्यमिति इत्य-स्ति--ङ.

तन्त्रम्। किंतु विरोधिकोट्यव्यावृत्तरूपानालिङ्गितघटत्वप्रकारकनिश्चयत्वम् । तच्च घटोयमिति निश्चयेस्ति। न तु प्रमेयमिति निश्चये। तत्र घटत्वस्य विरोध्यव्या[1]वृत्तप्रमेयत्वालिङ्गितत्वेन प्रकारत्वात् ॥

नन्वेवं चेत्–प्रमेयत्वविशिष्टघटत्ववानयं इति ज्ञानमपि संशयविरोधि न स्यात्। तत्र घटत्वस्य विरोधिसाधारणप्रमेयत्वालिङ्गितत्वेनैव प्रकारत्वा[1]दिति चेन्न। उदाहृतज्ञाने घटत्ववत्त्वस्य प्रमेयत्वालिङ्गितत्वेनाप्रतीतेः । प्रमेयमितिज्ञाने तु स्वस्मिन्भासमानस्य सर्वस्यापि प्रमेयत्वालिङ्गितत्वेन प्रतीतेः ॥

---

सिद्धान्ते सामान्यप्रत्यासत्तिर्नास्ति। अनुगतधर्मा[2]पाकरणात् पूर्वपरिच्छेदे। तथापि परमतावष्टम्भेनेदं समाधानम् ॥

यद्वा सामान्यं तु समानानां सदृशानां भावः सामान्यमिति सादृश्यमेवेत्यनुगतजातिभङ्गोक्तादिशा प्रमेयत्वनिष्ठसादृश्यप्रत्यासत्तिं वा प्रमेयनिष्ठसादृश्यरूपप्रत्यासत्तिं वापेक्ष्येति स्वमतरीतिरेवेयमपीति ध्येयम् ॥

संशयविरोधित्व इति विभागः। न तन्त्रमिति नञोन्वयः। **विरुद्धेति**[3]। विरुद्धा या कोटिः तदव्यावृत्तं तस्यां विद्यमानं यद्रूपं यो धर्मः तदनालिङ्गितत्यर्थः। **उदाहृतज्ञान इति**। प्रमेयत्वविशिष्टघटत्ववानयं इत्युक्तज्ञानाकार इत्यर्थः। **घटत्ववत्त्वस्येति**।

[1] व्यावर्तकप्र ग. ग. [2] मनिराकरणात्–ड. [3] विरोधीति विरोधिनी या को- ड.

एतदप्युक्तं सामान्यत इति । विरोधिकोट्य-व्यावृत्तधर्मालिङ्गितत्वेनेत्यर्थः ॥

यद्वा सामान्यप्रत्यासत्तिसापेक्षं ज्ञानं, घटस्य प्रमेयत्वेनैव सह गुणप्रधानभावलक्षणसंबन्धं गृह्णाति न तु घटत्वादिना सह तदा तदग्रहेऽपि अन्यदा तद्ग्रहसंभवेन हान्यभावादिति न संशयविरोधि ॥

एतदप्युक्तं सामान्यत इति । गुणप्रधानभाव-रूपसंबन्धं विनेत्यर्थः ॥

यद्वा व्याप्तिज्ञानं विप्रकृष्टव्याप्यांशे न निश्चय-रूपं किंतु संभावनारूपम् व्याप्त्यंशे तु निश्चय-रूपमिति नरसिंहाकारमिति न कोपि दोषः । अत एव पद्धतौ "यद्यन्यत्रापि धूमः स्यात्तर्हि तस्या-प्येवमित्येवं व्याप्तिग्रहो भवतीत्यतः कात्रा[1]नुप-पत्तिरि"त्यनेनैतमेव पक्षमुक्त्वा "एतेन प्रमेयत्वा-भिधेयत्वयोर्व्याप्तिं गृह्णतः सार्वज्ञ्यप्रसङ्ग इत्यपि

---

घटत्व[2]स्यैव तदालिङ्गितत्वप्रतीतिरिति भावः । **गुणप्रधानभावेति** विशेषणविशेष्यभावेत्यर्थः । पद्धत्यनुरोधेन पक्षान्तरमाह—**यद्वा व्याप्तिज्ञानमिति** । न निश्चयरूपमिति विभागः । संभावनारूपं उत्कट-कोटिक[3]संशयरूपम् । **न कोपीति** । सार्वज्ञ्यापत्तिदोषो वा संशया-द्यभावापत्तिदोषो वा नेत्यर्थः । एवंरूपं ज्ञानमदृष्टचरमित्यतोलौकिक-

---

[1] का वा नु-ग. ग. [2] वत्त्व-ड. [3] टिसं-ट. ड.

परास्तामि"त्युक्तम् । दृश्यते हि यद्यतिथिरागच्छे-[1]त्तर्हि भोजयितव्यः यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् गृह्णीयादि[2]ति वाक्यजन्य[3]-ज्ञानस्य निमित्तांशे संभावनात्वेपि तस्मिन्सति नैमित्तिकं कार्यमित्यंशे निश्चयत्वम् ॥

एतदप्युक्तं सामान्यत इति । सांमुख्येन नि-र्धारणौदासीन्येनेत्यर्थः । अन्यथा तत्रापि सर्वं खल्विदं ब्रह्मेत्यादिवाक्यार्थधीर्न स्यात् । सर्व-शब्दप्रयोगश्च न स्यात् । सार्वज्ञ्यापत्तिरित्यापादनं च न स्यादित्युक्तम् ॥

इति प्रमयत्वाभिधेयत्वयोर्व्याप्तिग्रहे खण्डनोक्त-सार्वज्ञ्यप्रसङ्गभङ्गः ॥ ४ ॥

---

वैदिकदृष्टान्तावाह—दृश्यत इति । यदि रथंतरेति । सोमो ज्योति-ष्टोमः । ज्योतिष्टोमे हि रथंतरं पृष्ठं भवति बृहत्पृष्ठं भवतीति वैकल्पिके रथंतराख्यबृहदाख्यसामनी श्रुते तथाग्निदवतेत्युपांशुमासादयति सोमो देवतेत्यन्तर्याम्यस्येत्यादिनोलूखलाकाराः ग्रहशब्दिताः पात्रविशेषाश्च श्रुताः । तत्र सोमो ज्योतिष्टोमो यदि रथन्तराख्यसोमयुक्तः स्यात् तदा ऐन्द्रवायव एवाग्रः प्राथमिको येषां तानैन्द्रवायवाग्रान्गृह्णीयादित्यर्थः । विचारितं चैतद्वाक्यं द्वितीयस्य तृतीयपादीयाद्यनये । अन्यथेति । पूर्वोक्तपक्षषट्केऽन्यतमस्याप्यनङ्गीकार इत्यर्थः । तत्रापीति । खण्डन-कारस्यापीत्यर्थः ॥

इति प्रमेयत्वाभिधेयत्वयोर्व्याप्तिग्रहे खण्डनोक्तसार्वज्ञ्यप्रसङ्गभङ्गः ॥ ४ ॥

---

[1] त्स भो–ट. [2] त्यादि वा–ट. रा. [3] न्यस्य ज्ञा–ट.

# अथ पक्षतावादः ॥ २ ॥

## अथ परोक्तपक्षलक्षणभङ्गः ॥ ५ ॥

अथ पक्षता निरूप्यते ।

तत्र न तावत्सन्दिग्धसाध्यधर्मा धर्मी पक्षः ।

## अथ पक्षतावादः ॥ २ ॥

## अथ परोक्तपक्षलक्षणभङ्गः ॥ ५ ॥

एवमनुमानलक्षणं तदङ्ग[1]व्याप्तिस्वरूपं तन्निश्चयोपाय[2]मुक्त्वा तत्र बाधकं च निरस्येदानीमनुमानसहकारिसंपत्तिरूपावसरप्राप्ता पक्षता निरूप्यत इत्याह—**अथेति** । यद्वाऽनुमानस्य द्वयं सामर्थ्यं व्याप्तिः समुचितदेशवृत्तित्वं च । तत्रान्त्यमपि द्वेधा । पक्षधर्मतारूपा तदन्यरूपा चेति । कयोश्चित्समानदेशकालयोः कयोश्चिद्भिन्नदेशकालयोरित्यादिपद्धत्युक्तेः । तथा च काचित्कपक्षधर्मतासापेक्षत्वात्सा निरूप्यत इत्याह—**अथेति** । तत्र पक्षतानिरूपणे कार्ये सतीत्यर्थः । **संदिग्धसाध्यधर्मेति** । साध्यधर्मेत्यवोक्तौ सपक्षस्यापि पक्षतापातात्संदिग्धेत्युक्तम् । धर्मिपदं स्पष्टार्थमित्येके । प्रामाणिकत्वकथनायेत्यन्ये । साधनेतिव्याप्तिवारणाय धर्मिपदम्[3] धर्मित्वं च साध्यापेक्षया ध्येयमिति प्रेक्षावन्तः ॥

---

[1] भूतेत्यधिकम्–ठ. [2] यं चोक्त्वा–ठ. [3] र्मितिप्रेक्षा–ट. ड. म् देयमिति प्रे–ठ.

**अनुमितिकाले संदेहस्यासत्त्वेन विशेषणत्वायोगात्। उपलक्षणत्वेऽतिप्रसङ्गात् । असंदेहेऽपि सामग्री-बलादनुमितिदर्शनाच्च ॥**

**नापि साधकमानाभावो यत्र स पक्षः ।**

अत्र संदिग्धं च तत् साध्यं च संदिग्धसाध्यं संदिग्धसाध्यं धर्मो यस्येति बहुव्रीहौ सति 'धर्मादनिच्केवलादि'त्यनिच्प्रत्ययः । [1]तत्र हि केवलादिति न धर्मविशेषणम् । किंतु बहुव्रीह्याक्षिप्तपूर्वपदस्य विशेषणम् । तेन पूर्वपदीभवतः केवलादन्यनिरपेक्षात्परो यो धर्मशब्दस्तदन्तादित्यर्थो भवति । तथा च संदिग्धसाध्यपदस्य बहुव्रीहौ पूर्वपदीभवतोऽन्य-निरपेक्षत्वाद्भवत्यनिजिति [2]ध्येयम् । [3]एतच्च धातुवृत्तौ व्यक्तम् । उक्त-विग्रहपक्षे कैवल्यस्य धर्मविशेषणत्वेऽप्यस्ति प्रत्ययप्राप्तिरित्यप्याहुः ॥

**असत्त्वेनेति** । परामर्शात्पूर्वं लिङ्गदर्शनव्याप्ति[4]स्मरणादिना तस्य नाशादिति भावः । **अतिप्रसङ्गादिति** । सिद्धिदशायामपि पक्षतापत्तेरिति भावः । व्यतिरेकव्यभिचारं चाह —**असंदेहेपीति** । घनगर्जितादिस्थल इति भावः । **यत्रेति** । यन्निष्ठसाध्यविषये । यद्वा साध्यसाधकमानाभावो यत्र पर्वतादिप्रदेशे स इत्यर्थः । एवमग्रेपि । श्रोतव्यो गुरूपदेशेन ज्ञातव्यो मन्तव्यो युक्त्यनुसंधानरूपमननोत्पन्ना-

[1] यदा तु धातु वृत्त्युक्तदिशा केवलादिति न धर्मविशेषणं किंतु इत्यस्ति —**ढ.** [2] ध्येयमिति न—**ट. ड.** [3] यदा तु 'वृत्तौ पञ्चमान्त्यपादे केवलात्पूर्वपदात् न पदसमुदायात् इत्युक्तदिशाथः । तदा निजत्राचिन्त्यः । असत्त्वेनेति—**ढ.** [4] कोटीत्यधिकम्—**ड.**

**श्रोतव्यो मन्तव्य इत्यादौ साधके सत्यपि पक्षत्वदर्शनात् । विपक्षस्यापि तत्प्रसङ्गाच्च ॥**

**नापि बाधकमानाभावो यत्र स पक्षः । स पक्षस्यापि तत्प्रसङ्गात् ॥**

**नाप्यभावद्वयं यत्र स पक्षः । मन्तव्य इत्यादौ तदभावेपि पक्षत्वात् ॥**

**नापि साध्यवत्तया सिषाधयिषाविषयो यः स[1] पक्षः । अनिच्छा[2]यामप्यनुमितिदर्शनात् ॥**

**ननु—सिषाधयिषाविरहसहकृतसाधकमानाभावो**

---

नुमितिरूपज्ञानेन विषयीकर्तव्य इत्यर्थः । **साधके सतीति ।** श्रवणशब्दितं उपदेशजन्यं यज्ज्ञानं तस्मिन्सत्येव तत्समानविषयश्रवणानन्तरभाविमनन[3]रूपानुमानेन श्रवणविषयार्थानुमित्यनुदयेन मननवैयर्थ्यापत्तेरिति भावः । **विपक्षस्येति ।** साध्याभाववतः । तत्र साध्याभावसाधकस्यैव सत्त्वेन साध्यसाधकस्याभावात् । अनेन सपक्षस्यापीत्येतदपि व्याख्यातप्रायम् । **तदभावेपीति ।** श्रवणादिरूपसाधकस्यैव तत्र सत्त्वेनाभावद्वयाभावेपि पक्षतासत्त्वादित्यर्थः । **नापि साध्येति ।** साध्यवत्त्वेन साधयितुमिच्छा साध्यवत्तया सिषाधयिषा तद्विषय इत्यर्थः । अनिष्टायाः अनिष्टविषयायाः । इच्छां प्रत्यविषयीभूतपदार्थविषयाया इत्यर्थः ॥

मणिकृता सिद्धान्तितमपि लक्षणमाशङ्कते – **नन्विति ।** मण्यु-

---

[1] यः स इति नास्ति—**ट. ग.** [2] च्छयानुमितिद—**क.** छाया—**ग. ट. ग.** [3] "श्रवणविषयार्थस्यानुमानेन तत्र पक्षताभावे अनुमित्यनुदयेन" इत्यस्ति—**ट. ड.** नेन श्र इत्याद्यस्ति—**ठ.**

**यत्र स पक्षः। एवं च मन्तव्य इत्यत्र सिषाधयिषाविरहरूपविशेषणाभावात् घनगर्जितेन मेघानुमाने साधकमानरूपविशेष्याभावात् सिषाधयिषोः पुंसो धूमानुमाने उभयाभावाद्वि[1]शिष्टाभावाद्विशिष्टाभावोऽनुगत इति तत्रतत्र [2] पक्षतायुक्ता। यत्र तु सिषाधयिषा[3]विरहयुते स्पष्टदृष्टे घटादौ विशेषणं विशेष्यं चास्ति न तत्र पक्षतेति चेन्न। असिषाधयिषोर्धूमानुमाने घनगर्जितेन मेघानुमाने चानुमितेः पूर्वं लिङ्गपरामर्शरूपसाधकमानस्य सत्त्वेनापक्षत्वापातात्॥**

---

क्तविवरणपूर्वकं प्रागुक्तदोषा नेत्याह—**एवं चेति**। एवं पक्षलक्षणे सतीत्यर्थः। सिषाधयिषोरित्येतत्सिषाधयिषाविरहरूपविशेष[4]णाभावोपपादनायोक्तम्। **उभयेति**। साधकमानस्य सिषाधयिषाविरहस्य चाभावादित्यर्थः। एवमव्याप्तिं निरस्यातिव्याप्तिं च निराह—**यत्रत्विति**। **विशेषणमिति**। सिषाधयिषाविरहः प्रत्यक्षरूपसाधकमानं चास्तीत्यर्थः। **असिषाधयिषोरिति**। एतच्च सिषाधयिषाविरहरूपविशेषणसद्भावायोक्तम्। एवं च तत्र विशेषणविशेष्ययोर्द्वयोरपि सत्त्वेनान्यतराभावेन वोभयाभावेन वा न विशिष्टाभावस्तत्रास्तीत्यव्याप्तिरिति भावः॥

---

[1] विशिष्टाभावादिति नास्ति—ट. क. ग. ग. [2] पुनः तत्रात नास्ति—क. ग. ट. प्रथमतोऽपि नास्ति—ग [3] रहिते—क. ग ट. [4] षाप—ट. षाभावो—ड.

**अथ मतम्—**

**सिषाधयिषाविरहसहकृतसिद्ध्यभावो यत्र स पक्षः। अनुमितेः पूर्वं च साधकमानत्वेऽपि न साध्यस्य सिद्धिरस्तीति तत्र पक्षता युक्ता ॥**

**ननु–एवं सति संशयानन्तरप्रत्यक्षस्थले पक्षता स्यात्। तत्र पुरुषत्वसिद्धिरूपविशेष्याभावेन विशिष्टाभावसंभवात्। तस्मात्सिषाधयिषाविरहसहकृतसिद्धितत्करणान्यान्यत्वा[1]वच्छिन्नाभावो यत्र स [2]एव च पक्षः। एवं च संशयानन्तर-**

पक्षधराद्युक्तविवक्षामाशङ्कते–**अथ मतमित्यादिना**–**मैवमित्य-न्तेन। संशयानन्तरेति।** स्थाणुर्वा पुरुषो वेति संशयानन्तरं पुरुषत्व-व्याप्यकरादिरूपविशेषदर्शनानन्तरं पुरुष एवायमिति जायमानप्रत्यक्ष-स्थल इत्यर्थः। संशयानन्तरप्रत्यक्षस्थळे दोषपरिहाराय यज्ञपतिनोक्त समाधिं पक्षधराद्युक्तदोषेण पूर्वपक्षिमुखेनैव निरसितुमाह—**तस्मा-त्सिषाधयिषेति।** सिद्धितत्करणान्यतरत्वावच्छिन्नेत्यस्य निष्कर्षेणार्थो[3] **न्यान्यत्वेति।** सिद्धितत्करणाभ्यां यदन्यत् जगत् तदन्यत् सिद्धि-स्तत्करणं च तत्त्वेनेत्यर्थः। अनुगत्यर्थमन्यान्यत्वावच्छिन्नेत्युक्तम्। अन्यान्यत्वावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः। प्रागुक्तदोषं निराह— **एवं चेति।** नन्वेवं[4] धूमादिस्थळेप्युक्तदिशा लिङ्गपरामर्शसत्त्वात्पक्षता

[1] त्वलिङ्गाभावो–क. [2] सपक्षः–ग. ट. रा. [3] र्थोन्यान्यत्व–ट. ठ. ड. [4]एवं च संशयोत्तरप्रत्यक्षस्थळे इत्युक्तदिशा–ठ.

प्रत्यक्षस्थळे च सिद्धेरभावेऽपि पुरुषत्वव्याप्यकर[1]-चरणादिरूपसिद्धिकरणस्य सत्त्वान्न पक्षता । धूमानुमाने तु पक्षता युक्ता । क[2]रणशब्देनानुमितिजनकपरामर्शेतर[3]तत्करणस्याभिप्रेतत्वादिति—चेन्न । तत्र पक्षताया इष्टत्वात् ॥

नचैवं तत्रानुमितिरेव स्यान्न तु प्रत्यक्षम् । अनुमितिसामग्र्याः बलवत्त्वात् । अन्यथा धूमानुमानेऽपि लिङ्गपरामर्शानन्तरं तदनुव्यवसाय एव

---

न स्यादित्यत आह—**धूमेति । परामर्शेति** । एवं चेदपि संशयोत्तरप्रत्यक्षस्थळे पुरुषत्वव्याप्यकरादिदर्शनरूपपरामर्शसत्त्वेऽपि तदितरप्रत्यक्षरूपसिद्धिकरणस्यापि सत्त्वान्न [4]तत्र पक्षतापत्तिरिति भावः ॥

अथमतमिति शङ्कितैव निराह—**तत्रेति** । संशयोत्तरप्रत्यक्षस्थळे । तथा च तदर्थं सिद्धितत्करणान्यान्यत्वेत्यादि न वक्तव्यमितिभावः । एतेन तत्र पक्षताविरहदर्शना[5]त्पक्षतासत्त्वस्य तत्र[6] केनाप्यकथनादिति मणिकण्ठोक्तं नादर्तव्यमित्युक्तं भवति । **तदनुव्यवसाय इति** । परामर्शोत्पत्त्यनन्तरं परामर्शानुव्यवसायं प्रतिबध्यानुमितेरेवोत्पादोऽभ्युपगतोऽनुमितिसामग्र्या बलवत्त्वयुक्तिमाश्रित्य तन्न स्यात् इत्यर्थः । एतच्च ज्ञानस्य बुभुत्सितग्राह्यत्वमतमाश्रित्योक्तम् । अबुभुत्सितग्राह्यत्वे तु स्यादेवानुव्यवसाय इति ध्येयम् । परामर्शस्य चरमकारणत्वं च [7]स्वस्य ज्ञातैकसत्त्वेन स्वप्रत्यक्षाजनकत्वेनेति ध्येयम् ।

[1] रादि दर्शनरूप–क. ग. ट. रा. [2] अत्र सर्वत्र का इत्यस्ति–ट. [3] रकरण–क. ग. रा. [4] तत्र पक्षतानापत्तिः–ठ.ड. [5] तत्रेत्यधिकम्–ठ. [6] तत्रेति न–ठ. [7] व्यवसायत्वेन स्वप्र–ठ.

**स्यान्न त्वनुमितिरिति वाच्यम्। संशयानन्तरप्रत्यक्षस्थळे विशकलितयोर्व्याप्तिपक्षधर्मता[1]ज्ञानयोः सत्त्वेपि लिङ्गपरामर्शाभावात्। साक्षात्करोमीत्यनुव्यवसायेन समानविषये फलबलेन प्रत्यक्षसामग्र्याः प्राबल्यकल्पनाच्च ॥**

**ननु--तथात्वे तत्रानुमित्सायां सत्यामप्यनुमितिर्न स्यात्। अनुमित्सयापि हि पक्षतैव संपाद्या।**

**न त्वनुमितिरिति।** अनुव्यवसायेन परामर्शनाशेनानुमितिकारणाभावादिति भावः। **विशकलितयोरिति।** करादिः पुरुषत्वव्याप्यः। अयं च करादिमानित्येव तत्र धीर्नतु पुरुषत्वव्याप्यकरादिमानयमिति धीरित्यनुमितिसामग्र्यभावादेव नानुमितिर्न तु पक्षताविरहादिति भावः। तत्राप्यस्ति परामर्श इति वादिनं प्रत्याह—**साक्षादिति। समाने विषय इति।** एवं च परामर्शे[2]ऽनुव्यवसायमजनयित्वानुमितिजनकत्वं युक्तम्। समाने विषये प्रत्यक्षसामग्र्या बलवत्त्वेपि भिन्ने विषयेऽनुमितिसामग्रीबलवत्त्वसंभवादिति भावः। **तथात्व इति।** संशयोत्तरप्रत्यक्षस्थळे पक्षतासत्त्वेपि प्रत्यक्षसामग्रीप्राबल्येन प्रत्यक्षस्यैवोत्पादाङ्गीकारे सतीत्यर्थः। तत्र संशयोत्तरप्रत्यक्षस्थळे। अनुमित्सा सिषाधयिषापदेनात्राभिमता। न तु सिद्धिसामान्येच्छा। श्रवणानन्तरभाविनो मननस्यानुदयापत्तेरिति भावनानुमित्सापदप्रयोगः। **अनुमित्सयापिहीति।** सिषाधयिषाविरहरूपविशेषणस्याभावप्रयुक्तविशिष्टाभावसंपादनद्वारा

---

[1] तयोः--क. [2] र्शानु-ठ. ड.

त्वयाच पक्षतायां सत्यामपि प्रत्यक्षसामग्रीबलवतीति [1]कल्पनादिति चेन्न। उभयत्र पक्षतायां सत्यामपि फलबलेनानुमित्सा प्रबलप्रत्यक्षसामग्रीरूपप्रतिबन्धकविरोध्युत्तम्भिका। तथा[2]चानुमित्सायाः पक्षतासंपादकत्वाभावेपि प्रतिबन्धकप्रत्यक्षसामग्र्यामुत्तेजकत्वात्। त्वयापि हि सिद्धिरूपप्रतिबन्धकविरोध्युत्तम्भकत्वेनैव सिषाधयिषा पक्षतायां प्रवेशिता॥

---

विशिष्टाभावरूपपक्षतैव संपाद्येत्यर्थः। **त्वया चेति**। संशयोत्तरप्रत्यक्षस्थले पक्षतास्तीति वादिना चेत्यर्थः। **उभयत्रेति**। [3]धूमानुमाने-संशयोत्तरप्रत्यक्षस्थले चेत्यर्थः। **फलेति**। अनुमिनोमीत्यनुभवसिद्धानुमितिरूपफलबलेनेत्यर्थः। अनुमित्सा विरोध्युत्तम्भिकेत्यन्वयः। अनुमितिप्रतिबन्धकस्य यद्विरोधि तदुत्तम्भिकेत्यर्थः। **कल्पनादिति**। अनुमित्सादशायां अनुमितिर्न स्यादिति दोषो नेति योज्यम्। परस्यापि सम्मतमेतदित्याह—**त्वयापीति**। यज्ञपतिनापीत्यर्थः। सिषाधयिषाविरहसहकृतसिद्धीत्यादिवदता सिषाधयिषाविरहे सति सिद्धिः प्रतिबन्धिका तस्यां तु सत्यां नेति कृत्वा तादृशसिद्ध्याद्यभावः पक्षतेत्युक्तत्वादिति भावः॥

नन्वेवमनुमित्साविरहसहकृतप्रत्यक्षसामग्र्या बलवत्त्वेनानुमिति प्रतिबन्धकत्वे तादृशसामग्र्यभावः तादृशसिद्ध्यभावश्च द्वयमप्यनुमितौ कारणमिति विनिगमकाभावात्पक्षतात्वमुभयोरप्यस्त्विवति चेन्न। द्वयोः

---

[1] त्युक्तमिति चेन्न–ग. ट. रा. [2] तथाचानुमित्साविरह सहकृतप्रत्यक्ष सामग्रीबलवतीति कल्पनात्–ग. ट. रा. [3] अनुमित्सावति तदभाववति चेत्यर्थः इत्यधिकम्–ट.

**तस्मात्सिषाधयिषाविरहसहकृतसिद्ध्यभावो यत्र स [1]पक्ष इति चेत्–मैवम् ॥**

**सत्यां सिद्धौ असत्यामपि सिषाधयिषायामनुमितिदर्शनात् । दृश्यते ह्यसंदिहानस्यापि आप्तवाक्याद्वह्निं निश्चितवतोपि गिरिशिखरे अभ्रंलिहां धूमरेखां पश्यतो दैवाद्व्याप्तिस्मरणे सति अननुमित्सोरनुमितिः । न हि सामग्री प्रेक्षावती । येन मया कर्तव्यमन्येन कृतमिति पर्यालोच्योदासीत । अनुभवानुसारेण हि लक्षणं कल्प्यम् । न तु स्वकल्पितलक्षणरक्षणार्थमनुभवपीडा । अस्ति चात्र न केवलं वह्निः श्रुतः किं त्वनु-**

कारणत्वाविशेषेपि लाघवात्सिद्ध्यभाव एव पक्षतारूपपक्षपदप्रवृत्तिनिमित्तम् । न त्वधिकम् । गौरवात् । किञ्चान्यान्यत्वावच्छिन्नाभावत्वेन न जनकत्वम् । मण्यादिस्थळेपि मन्त्रान्यान्याभावत्वेनापि हेतुतापत्त्या प्रतिबन्धकाभावकूटः कारणमिति सिद्धान्तभङ्गापत्तेः । तृणाद्यन्यान्यत्वेनापि हेतुतापत्त्या कार्यवैजात्यासिद्धिप्रसङ्गादित्याद्यभिप्रायेण "अथ मतमि"त्यादिशङ्किता स्वमतमुपसंहरति —**तस्मादिति ।** इदमपि लक्षणमव्याप्तमिति भावेन –

"असिद्धसाधने दोषः को व्याप्तिर्यदि विद्यते" ।

इति भक्तिपादीयानुव्याख्यानसुधोक्तं हृदिकृत्वा निराह—**सत्यामित्यादिना ।** तत्र विशेषणविशेष्ययोर्द्वयोरपि सत्त्वेनान्यतराभावप्रयुक्तस्योभयाभावनिमित्तकस्य वा विशिष्टाभावस्याभावादव्याप्तिरिति भावः । न च [2]पक्षतैव नेति वाच्यम् अनुमितिरूपफलदर्शनेन तत्र पक्षताया आवश्यकत्वादित्याह—**दृश्यते हीति ।** अनुभव एव नास्तीत्यत आह—**अस्ति चेति ॥**

---

[1] एवेत्यधिकम्–**ट. रा.** [2] तत्रेत्यधिकम्–**ट. ड.** तत् इत्यधिकम्–**ठ.**

मितोपीत्यनुभवः । अत्रानुमित्साकल्पने च घनगर्जितेन मेघानुमानेपि सा कल्प्यताम् । योग्यानुपलब्धिबाध[1]श्चोभयत्रापिसमः । न च छिन्ने छिदान्तरमिव परिच्छिन्ने परिच्छेदान्तरमशक्यम् । चैत्रेण ज्ञातेर्थे मैत्रस्य. चैत्रस्यैव कालान्तरे ज्ञानान्तरस्य, तदानीमपि प्रत्यक्षसिद्धे शाब्दज्ञानान्तरस्य, प्रत्यक्षधारावाहिज्ञानान्तरस्य, शब्दलिङ्गाभ्यां निश्चितेप्यर्थे सामग्रीवशाच्छाब्दलैङ्गिकज्ञानान्तरस्य, दर्शनात् ॥

---

ननु तत्र फलबलेनानुमित्सैव कल्प्यतां एवं चानुमित्साविरहरूपविशेषणाभावप्रयुक्तविशिष्टाभावरूपपक्षतासत्त्वान्नदोष इत्यत आह—**अत्रेति** । **घन[2]गर्जितेनेति** । एवं च [3]तत्र विशेषणसत्त्वमुपेत्य साधकमानरूपविशेष्याभावप्रयुक्तविशिष्टाभावोक्त्या पक्षत्वोपपादनमसङ्गतं स्यादिति भावः । तत्रानुमित्सा योग्याननुभवबाधितेत्यत आह—**योग्येति** । इच्छाया योग्यत्वात्तदनुपलब्धयोग्यानुपलब्धित्वाद्योग्यानुपलब्धीत्युक्तम् । किं परिच्छेदान्तरं कस्यापि नास्तीति अथ परिच्छेत्तुरेव नेति अस्मिन्पक्षेपि कालान्तरे[4] नास्त्युत तदा तदेत्यत्रापि प्रमाणान्तरेण नास्ति उत पूर्वपरिच्छेदजनकप्रमाणेन शब्दलिङ्गाभ्यां परिच्छिन्ने पुनस्ताभ्यामेव परिच्छेदान्तरं नेति कल्पान्क्रमेण निराह—**चैत्रेण ज्ञात इति** ॥

[1] धस्तू भ—ट. ग. [2] घनपदं न—ठ. ट. [3] एवं च इति न—ट. तत्रेत्यपि न—ड. [4] रेपि न—ड.

किञ्च मणिमन्त्रादिवत्सिद्धेः प्रतिबन्धकत्वे सिद्धे विशिष्टाभावस्य कारणत्वं सिद्ध्येत्। न च तदस्ति। सिद्धेर्बाधवत्साक्षाद्विरोधिविषयत्वाभावात्। व्यभिचारज्ञानवद्धेतुविघटकत्वस्याप्यभावात्। मण्यादिवदन्वयव्यतिरेकयोरप्यभावात्॥

अपि च यदि विरोध्यविषयिण्यपि सिद्धिः सिषाधयिषाविरहरूपसहकारिसंपत्त्या समानविषया[1]नुमितिप्रतिबन्धिका तर्हि लिङ्गज्ञानमप्युपाधिज्ञानसहकृतं साक्षादेव लिङ्गपरामर्शप्रतिबन्धकं स्यात्। न तु व्यभिचारधीद्वारा॥

न च सिद्धेरविरोधित्वेऽनुमितिधारा न विच्छि-

---

ननूक्तस्थले सर्वत्र फलबलात्प्रतिबन्धकीभूतसिद्धेरुत्तेजकं किंचित्परिकल्पनीयम्। अन्यथा प्रतिबन्धके सति कार्योदयस्य दुर्घटत्वादित्यत आह—**किं चेति**। प्रतिबन्धकत्वं सिद्धेः किं ग्राह्याभावावगाहित्वेनोत सिद्ध्यन्तर[2]विघटकत्वेनान्वयव्यतिरेकाभ्यां वा न [3]त्रयमपीति क्रमेण निराह--**सिद्धेर्बाधवदित्यादिना**। सिद्धेः [4]प्रतिबन्धकत्वे साधकं नेत्युक्त्वा बाधकमप्याह—**अपि चेति**। **लिङ्गज्ञानमिति**। महानसादौ गृहीतव्याप्तिकस्य पर्वते यल्लिङ्गदर्शनं तदित्यर्थः। सिद्धेरप्रतिबन्धकत्वेऽनुमित्यविच्छेदो वा सिद्धसाधनत्वस्यादोषत्वं वा स्यादित्यत आद्यं बाधकं तावदाशङ्क्य निराह--**न चेति**। शाब्दबोधस्थळे

[1] यकानु--क. ट. यत्वानु--ग. रा. [2] कारणेत्यधिकम्--ट. [3] न केनापीति--ठ. [4] बाधकत्वेसा--ट.

द्येतेति वाच्यम्। लिङ्गपरामर्शस्य शाब्दधीकारणीभूतज्ञानवद्द्विक्षणावस्थायित्वेनानुमितिधाराहेत्व - भावात्। लिङ्गोपहितलैङ्गिकभानपक्षस्य निरासात् ॥

न च लिङ्गपरामर्शस्य स्थितिक्षणे चैका तन्नाशक्षणे चान्येत्यनुमितिद्वयं नियमेन स्यात् तद्धेतोः सत्त्वादिति वाच्यम्। क्वचिदुत्कटविषयान्तरजिज्ञासया प्रतिबन्धसंभवेन नियमहेत्वभावात्। कदाचिदनुमितिद्वयापादने च हेतुसत्त्वेनेष्टापत्तेः। कथं हि विज्ञातं भवता कदाप्यनुमितिद्वयं नास्तीति। अनुमिनोमीत्यनुव्यवसायस्य द्विती-

सिद्धेरप्रतिबन्धकत्वेन तत्रापि शाब्दबोधपरंपरापत्तेः। कारणीभूतस्य शब्दगोचरज्ञानस्य विनाशेन कारणाभावान्न शाब्दबोधपरंपरेति चेत्समिहापीत्याह--लिङ्गपरामर्शस्येति। ज्ञानवज्ज्ञानस्येव। आत्मलाभरूपजन्मक्षणमप्युपादाय वा विनाशक्षणमप्युपादाय वा द्विक्षणेत्युक्तम् ॥

ननु धूमवत्पर्वतोऽग्निमानित्यनुमित्याकारोपगमेनानुमितिरपि परामर्शरूपेत्यत आह—लिङ्गेति। [1]स्वतस्त्वानुमानवादे निरासादित्यर्थः। अनुमिनोमीत्यनुव्यवसाय एवानुमितिद्वयाभावे मानमित्यत आह—अनुमिनोमीति। द्वितीयं बाधकं निराह—

[1] प्रामाण्यस्वतस्त्वे अनुमानोक्तिप्रस्तावे निरा--ऽ.

याभावाविषयकत्वात् । सिद्धसाधनं तु परार्थानुमान एव दोषो न स्वार्थानुमाने इति वक्ष्यते ॥

[1] तस्मात्प[2]क्षता दुर्निरूपेति ॥

इति परोक्तपक्षलक्षणभङ्गः ॥ ५ ॥

## अथ स्वमते पक्षलक्षणम् ॥ ६ ॥

उच्यते—

लिङ्गाभिमतस्य यत्र यदा यं प्रति यद्धीजननानुकूलसहकारिसंपत्तिस्तत्र तदा तं प्रति तत्सा-

सिद्धसाधनं त्विति । वक्ष्यत इति । स्वमतेऽनुमानदोषोक्तिवादे । एतेन सिद्ध्यभावस्य पक्षतात्वखण्डनेनैव सिषाधयिषाविरहसहकृतसाध्यनिश्चयाभावः पक्षतेति शिरोमणिपक्षोऽपि प्रत्युक्तो ध्येयः । पूर्वोक्तदोषाणामत्राप्यनुवृत्तेः उक्तदोषान्संक्षेपेणानुवदन्पूर्वपक्षमुपसंहरति—तस्मादिति ॥

इति मण्युक्तपक्षलक्षणभङ्गः ॥ ५ ॥

## अथ स्वमते पक्षलक्षणम् ॥ ६ ॥

'साध्यधर्मविशिष्टः पक्ष' इति मिथ्यात्वानुमानखण्डने भगवत्पादोक्तं पक्षलक्षणमिह विवक्षुः 'लिङ्गेन यत्प्रतीतिर्जनयितव्या स साध्यधर्म' इति टीकोक्तं परिष्कुर्वन्साध्यस्वरूपं तावदाह—**लिङ्गाभिमतस्येति** । पर्वतोऽग्नि-

[1] तस्मात्परोक्तवक्रपक्षलक्षणेषु सत्यां सिद्धौ असत्यामपि सिषाधयिषायां या अनुपपत्तिस्तत्राव्याप्तिः सिद्धेरनुमितिप्रतिबन्धकत्वे बीजाभावः लिङ्गज्ञानस्यापि लिङ्गपरामर्शप्रतिबन्धकत्वापातः इति दोषत्रयम् । इत्यधिकम्—**ग. ट. ग.**

[2] त्परोक्त पक्षता—**ट.**

ध्यम् तादृशसाध्यविशिष्टश्च तदा तं प्रति तस्यानु-
मितौ पक्षः ॥

न च पक्षताया अप्यनुमितिहेतुत्वेन सहकारि-
रूपायाः कथं सहकारिसंपत्तिरूपतेति वाच्यम् ।

मान्प्र[1]मेयत्वादिति व्यभिचारिप्रयोगादावव्याप्तिनिरासाय लिङ्गाभिमते-त्युक्तम् । व्याप्यत्वेनाभिमतस्येत्यर्थः । समानाधिकरणव्यधिकरणसर्व-साध्यस्वरूपनिर्वचनार्थं यत्र यदेत्याद्युक्तम् । देशान्तरे कालान्तरे पुरुषान्तरं प्रति वस्त्वन्तरज्ञाने चानुकूलसहकारिसंपत्तिमादाय देशान्त-रादौ साध्यतापत्तिदोषनिरासाय यत्तच्छब्दचतुष्टयम् । सहकारिसंपत्तिः सहकारिमेलनम् । लिङ्गजन्यानुमितिविषयत्वयोग्यत्वं साध्यत्वमिति फलितार्थः ॥

एतेन साध्यशब्देन किं संदिग्धो धर्मो विवक्षितः किं वा प्रज्ञापनीयः यद्वा प्रमित्सितः । नाद्यः सत्यां सिद्धावित्यादिपूर्वभङ्गोक्तग्रन्थे निश्चित-स्यापि साध्यत्वोक्तिविरोधात् । प्रमाणसंप्लववादिनां निश्चितेप्यनुमान-प्रवृत्तेरङ्गीकाराच्च । न द्वितीयः । स्वार्थानुमाने प्रयोज्यकर्तुरभावेन प्रज्ञा-पनाभावात् । न तृतीयः । अनिष्टानुमानाभावप्रसङ्गादित्याद्युपप्लवोऽ-पोढः । लिङ्गजन्यप्रतीतिविषयधर्मस्य[2]साध्यधर्मपदेन विवक्षितत्वात् । तस्य कालान्तरादिकमादायातिप्रसङ्गनिवृत्त्यर्थं यत्र यदेत्येवं निरुक्तत्वात् ॥

एवं च पर्वतनिष्ठधूमेन पर्वतीयवह्न्यनुमित्युत्पादनदशायां वह्नेः साध्यत्वं नदीपूरेणोर्ध्वदेशवृष्ट्यनुमित्युत्पादवेलायां वृष्टेः साध्यत्वं कृत्ति-कोदयेन रोहिण्युदयासत्त्यनुमितिकाले रोहिण्युदयासत्तेः साध्यत्वमित्यादि ध्येयम् । अस्तु साध्यमेवं रूपं ततः किमित्यत आह—**तादृशेति** । उक्तरूपेत्यर्थः । तं प्रति पुरुषं प्रति । **तस्येति** । वह्न्यादिवस्तुनः ।

[1] न्मेय—ट. ठ.　[2] साध्यधर्मस्येत्यधिकम्—ठ.

**मन्मते पक्षताया अनुमितिसहकारिसंपत्ति[1]रूपत्त्वेना[2]नुमित्यहेतुत्वात् । त्वन्मतेपि[3] हि पक्षता सिद्धिरूपप्रतिबन्धकाभावतया हेतुः । [4]सिद्धेश्च न सिद्धिः प्रतिबन्धिका । किन्त्वनुकूलैवेत्युक्तम् ॥**

**नन्वेवं सति लिङ्गपरामर्शदशायामेव पक्षता न तु ततः प्राक् । ततश्च लिङ्गपरामर्शः कथं**

---

अत्रापि कालान्तरे पुरुषान्तरं प्रति वस्त्वन्तरानुमितौ वस्त्वन्तरविशिष्टस्य पक्षताव्युदासाय तदा तं प्रति तस्येत्युक्तिः ॥

ननु साध्यधर्मविशिष्टत्वं साध्यधर्मसंबन्धित्वम् । तच्च व्याप्यतया साधनस्याप्यस्तीति तत्रातिव्याप्तिरिति चेन्न । धर्मधर्मिभावेन वैशिष्ट्यस्य विवक्षितत्वात् । साध्यपदं सपक्षादावतिव्याप्तिनिरासाय । साध्यविशिष्टः पक्ष इत्येवोक्ते वस्तुतोग्निविशिष्टपर्वतस्यापि साध्यत्वात्तद्विशिष्टान्यस्य पक्षत्वं स्यात् । तदर्थं धर्मग्रहणम् । न च वह्निरेव साध्यो न पर्वत इति वाच्यम् । वह्निस्वरूपमात्रस्य प्रागेव सिद्धत्वात् । पर्वतसंबन्धित्वेनासिद्धत्वात्तद्रूपेण वह्निः साध्यते इति चेत्तर्हि यथा पर्वतसंबन्धित्वेन वह्निः साध्यः तथा पर्वतोप्यग्निसंबन्धित्वेन साध्य एव स्वरूपमात्रसिद्धावपि विशिष्टासिद्धेरुभयत्र समानत्वात् ॥

ननु न्यायमते सहकारिसंपत्तिरूपत्वं पक्षतालक्षणमसंभवीत्यत आह---**त्वन्मत इति । उक्तमिति ।** पूर्वभङ्गे । तथाच तव मतेपि पक्षताया न सहकारित्वमिति भावः । **नन्वेवमिति ।** अनुमिति-

[1] रूपपदं न—**ग. ट. रा.** [2] ना सहकारित्वात्—**ग. ट. रा.** [3] तेहि—**ग. रा.** [4] सिद्धिश्च न सिद्धिं प्रति प्रतिबन्धिका—**क. ग. ट. रा.**

पक्षधर्मताविषयकः स्यादिति चेत्। [1]कात्र कथं ता। लिङ्गपरामर्शस्य पक्षधर्मताविषयकत्वं हि न स्वपूर्वकाले स्वकाले च विद्यमाना या पक्षता तदाश्रये व्याप्यवत्त्वविषयकत्वम्। किं तु स्वकाले वस्तुगत्या विद्यमाना या पक्षता तदाश्रये व्याप्यवत्त्वविषयकत्वम्। लिङ्गपरामर्शकाले च पक्षतास्त्येव। पक्षताज्ञानं तु त्वन्मतेपि नानुमितिहेतुरिति कात्रानुपपत्तिः। सपक्षविपक्षावप्युक्तसहकारिसंपत्तिदशायां पक्षावेव। तदसंपत्तिदशायां पक्षोप्यपक्ष एव। न हि पक्षत्वं जातिः॥

एतदेवाभिप्रेत्य मिथ्यात्वानुमानखण्डनटीकायां 'साध्यधर्मविशिष्टः पक्ष' इति मूलव्याख्यावसरे 'यत्प्रतीतिर्लिङ्गेन जनयितव्या स साध्यधर्म'

सहकारिसंपत्तेः पक्षतात्वे सतीत्यर्थः। **कथं पक्षधर्मताविषयक इति।** पक्षताधिकरणवृत्तिर्यो धर्मः त[2]द्विषयकत्वस्य [3]पक्षधर्मताविषयकत्वेन पक्षतायाः परामर्शकालतावश्यं भावादिति भावः॥

नन्वेवं पक्षतायाः परामर्शकालीनत्वेन परामर्शस्य तदविषयकत्वात्तस्य चरमकालत्वेन तदनन्तरं पक्षताज्ञानस्याशक्यशङ्कत्वात्पक्षताज्ञानं न हेतुरिति स्यादित्यत आह—**पक्षताज्ञानं त्विति। त्वन्मतेपीति।** न केवलं मन्मत इत्यर्थः। प्रतिबन्धकाभावरूपत्वात्प्रतिबन्धकाभावस्य च स्वरूपसत एव हेतुत्वादिति भावः॥

नन्वेवं सपक्षादावपि कदाचिदुक्तसहकारिसंपत्तेः संभवात्पक्षेपि कदाचित्तदसंभवादतिव्याप्त्यव्याप्ती स्यातामित्यत आह—**सपक्षेति।**

[1] त्। इत्थम्। लिङ्ग–ग. रा. [2] तत्त्ववि–ट. ठ. [3] यद्धर्मतावि–ट.

इत्युक्तम् । सुधायामपि वस्तुतस्त्वनुमितिविषयः पक्ष इत्युक्तम् । तत्र हि तव्यप्रत्ययेन विषय-शब्देन चोक्तसहकारिसंपत्तिरूपानुमितिविषयत्व[1]-योग्यतैवाभिप्रेता ॥

यद्वा ग्रन्थद्वयेपि व्यापकवत्त्वेनानुमितिविषयत्वं पक्षत्वमाभिप्रेतम् । व्यापकवत्त्वेन विशेषणे[2]न तद्-नुमितिविषयेपि[3] व्यापके व्यापकतावच्छेदकादौ च नातिव्याप्तिः । अस्मिंश्च पक्षे लिङ्गपरामर्श-दशायामपि न पक्षता । किं त्वनुमितिदशायामेव । त्वन्मतेप्यनुमितिदशायां सिद्धिविरहगर्भिता पक्षता नास्त्येव । अस्मिन्पक्षे लिङ्गपरामर्शस्य पक्षधर्म-ताविषयकत्वं तु स्वजन्यफलसमानकालीनपक्ष-ताश्रये व्याप्यवत्त्वविषयकत्वम् ॥

साध्यलक्षणे धीपदेन प्रमितेरविवक्षितत्वाद्द्विपक्षस्यापि ग्रहणं कृतम् । **सुधायामपीति** । भक्तिपादे साध्यासिद्धेरदोषत्वोक्तिप्रस्तावे सुधाया-मित्यर्थः । स्वोक्तं मूलारूढतया दर्शयति— **तत्र हीति** । उदाहृत-वाक्यद्वये हीत्यर्थः । संपत्तिरूपा योग्यतैवेत्यन्वयः । योग्यतापक्ष-माश्रित्यैकं पक्षमुक्त्वा फलोपधानमाश्रित्य लक्षणान्तरमाह— **यद्वेति** ॥

ननूक्तपक्षद्वये कदाचिदेव पक्षता प्राप्ता न तु परामर्शा-त्पूर्वं पश्चाच्चेत्यतस्त्वन्मतेपि तथैव प्रत्युतावश्यकानुमितिवेलायामेव नास्तीत्याह— **त्वन्मतेपीति** । सर्वदा पक्षतासत्त्वप्रकारमाह —

[1] यकत्वे—ग. रा. [2] णादनु—ग. रा. [3] येप्य—क. येव्या—ग. रा.

केचित्तु—ग्रन्थद्वयेऽप्यनुमितिविषयत्वयोग्यतैव पक्षताभिप्रेता । योग्यता च समानाधिकरणाप्रमात्वेनाभिमता या साध्याभावविषया धीस्तदभावः । एवं च जगत्यक्षणिकत्वव[1]दिनि व्यधिकरणायां प्रमात्वेनाभिमतायां क्षणिकत्व[2]वादिनि च समानाधिकरणायां प्रमात्वेनानभिमतायां प्रत्यक्षायामक्षणिकत्वप्रमायां[3] च सत्यामपि क्षणिक[4]वादिनः क्षणिकत्वानुमाने जगतः पक्षता युक्ता ।

---

**केचित्त्विति । समानाधिकरणेति ।** यत्रानुमित्युत्पादस्तदधिकरणवृत्तिरित्यर्थः । प्रमात्वेनाभिमतसमानाधिकरणसाध्याभावबुद्ध्यभाव इत्यर्थः । बुद्ध्यभाव इत्युक्तेऽसंभवः । अभावबुद्ध्यभाव इत्युक्तेपि स एव दोषः । बाधाद्यभावबुद्धेः सत्त्वात् । साध्याभावबुद्ध्यभाव इत्युक्तेपि स एव दोषः । भ्रमरूपसाध्याभावबुद्धेः संशयरूपायाः सत्त्वात् । प्रमारूपेत्युक्तौ वादिप्रतिवादिनिष्ठपरस्परसाध्याभावबुद्धेः प्रमारूपत्वनियमाभावेन तादृशबुद्धौ सत्यामपि पक्षता स्यात्सा माभूदित्यभिमतेत्युक्तम् । प्रमात्वेनाभिमततादृशबुद्ध्यभाव इत्युक्तेपि व्यधिकरणपुरुषान्तरप्रतिवादिबुद्धिमादायासंभव एवेति समानाधिकरणेत्यादि सर्वमर्थवत् ॥

परार्थानुमानस्थले पक्षतालक्षणं लक्ष्यनिष्ठतया दर्शयति । **एवं चेति ।** क्षणिकवादिनः यत्सत्तत्क्षणिकं यथा दीपादि सच्चेदं जगदित्येवंरूपक्षणिकत्वानुमाने जगतः पक्षतायुक्तेत्यन्वयः । प्रत्यभिज्ञारूपा जगत्यक्षणिकत्वधीस्तावत्क्षणिकवादिनोऽक्षणिकवादिनश्चास्ति । तत्र क्षणिक-

[1] क वा—रा. [2] क वा—रा. [3] यां क्षण—ग. रा. [4] कत्व वा—ग.

**धूमानुमाने महानसे सपक्ष[1]व्यवहारस्तु निश्चितव्यापकवत्तया सपक्षत्वस्यापि सत्त्वात् । उक्तरूपायां पक्षतायां सत्यामपि पक्षत्वाव्यवहारोप्यनुमित्यविषयत्वात् । तत्र पक्षतायां सत्यामपि कदाचिदनुमित्यभावश्च त्वन्मते[2] संशयोत्तरप्रत्यक्षस्थल इव लिङ्गपरामर्शादितत्सामग्र्यभावादित्याहुः ॥**

इति स्वमते पक्षलक्षणम् ॥ ६ ॥

---

वादिनः प्रमात्वेनानभिमता । अन्यस्य तु प्रमात्वेनाभिमता । साचानुमातरि क्षणिकवादिनि[3] सत्त्वात्समानाधिकरणा । अक्षणिकवादिनि सत्त्वाद्व्यधिकरणा च । तथाच तादृशसाध्याभावबुद्धौ सत्यामपि समानाधिकरणप्रमात्वाभिमतबुद्ध्यभावात्पक्षतायुक्तेत्यर्थः । अक्षणिकवादिनि क्षणिकवादिनि चेत्यनन्तरं विद्यमानत्वेनेति शेषः । प्रत्यक्षायां प्रत्यभिज्ञानादिसाक्षात्काररूपायामित्यर्थः । नन्वेवं महानसादावप्युक्तरूपानुमितिविषयत्वयोग्यत्वसत्त्वात्पक्षता स्यात् । तथाच तत्कार्याणां सपक्षत्वाव्यवहारपक्षत्वव्यवहारानुमितीनामापात इत्यत आह— **धूमेति** । पक्षत्वाव्यवहारोपीत्यत्र हेतुरनुमित्यविषयत्वादिति । **लिङ्गपरामर्शादीति** । तत्र यथा विशकलितव्याप्तिस्मरणकरादिरूपलिङ्गदर्शनयोर्भावेपि व्याप्तिविशिष्टलिङ्गदर्शनरूपपरामर्शाभावाद्वा परामर्शसत्त्वेपि प्रत्यक्षसामग्रीबलवत्त्वेन वा यथा नानुमितिस्तथेत्यर्थः ॥

अत्र गौरवमरुचिबीजमित्येके । दैवान्महानसादौ सत्यपि परामर्शे प्रत्यक्षसामग्र्यामसत्यां चानुमित्यापत्त्या पक्षत्वव्यवहाराद्यापात इत्यन्ये ॥

इति स्वमते पक्षलक्षणम् ॥ ८ ॥

[1] क्षत्वव्य--क. ग. रा. [2] परमते सं--ग. रा. [3] नो द्विक्षणिकवादिनि सत्वा--ठ.

# अथोपाधिवादः ॥ ३ ॥

## अथ स्वाभिमतोपाधिसामान्यलक्षणम् ॥ ७ ॥

**अथोपाधिज्ञानस्य व्याप्तिज्ञानप्रतिबन्धकत्वादुपाधिर्निरूप्यते । साध्यव्यापकत्वे सति साधनाव्यापक[1] उपाधिः ॥**



# अथोपाधिवादः ॥ ३ ॥

## अथ स्वाभिमतोपाधिसामान्यलक्षणम् ॥ ७ ॥



उपाधिनिरूपणे का पूर्वसङ्गतिरित्याह—**अथोपाधीति** । एवमनुमानोपयुक्तव्याप्त्यादिनिरूपणानन्तरमवसरप्राप्तं प्रतिबन्धकस्वरूपं निरूप्यत इत्यर्थः । एतेन यन्मणौ पक्षतोक्तेः प्रागेवोपाधिनिरूपणं तदनवसरदुस्थमित्युक्तं भवति । उपाधिज्ञानं हि द्वेधा व्याप्तिग्रहणकालीनं व्याप्तिग्रहणानन्तरमनुमानप्रयोगकालीनं चेति । तत्राद्याभिप्रायेणोक्त— **व्याप्तिज्ञानप्रतिबन्धकत्वादिति** । द्वितीय[2]स्य प्रतिपक्षतया दोषत्वेनानुमितिप्रतिबन्धकत्वात् । व्याप्तिज्ञानप्रतिबन्धकत्वप्रकारश्च साध्यव्यापकं परित्यजतो हेतोः साध्यपरित्यागस्यावश्यकत्वादिनोपाधेर्दूषकताबीजोक्तिवादे व्यक्तः ॥

'साध्यव्यापकवैलोम्यमव्याप्तिः साधनस्य तु' ।

इति युक्तिपादीयानुव्याख्यानसुधायुक्तिं हृदि कृत्वोपाधिसामान्यलक्षणमाह—**साध्येति** । अत्र साध्यपदेन पूर्वोक्तदिशा न लिङ्गजन्यधी-

[1] कत्वसु—ग. रा. [2] यं प्रति सत्प्रति—ठ.

ननु—वायुः स्पार्शनः अनुद्भूतरूपानधिकरणत्वे सति प्रत्यक्षस्पर्शाश्रयत्वात् घटवदित्यादौ पक्षधर्मेण द्रव्यत्वेनावच्छिन्न[1]साध्यव्यापके चाक्षुषत्वाद्युपाधौ समवायः समवेतः संबन्धत्वात् संयोगवत् इत्यादौ साधनेन संबन्धत्वेनावच्छिन्न-

विषयत्वरूपं विवक्षितम् । येन व्याप्तिग्रहदशायां महानसीयधूमादेस्तादृशत्वाभावेन तदुपाध्यार्द्रेन्धनादावव्याप्तिः स्यात् । किंतु व्यापकतावच्छेदकधर्मवत्त्वमात्रमित्यग्रे व्यक्तम् । धूमाद्यनुमाने [2]व्यञ्जनवत्त्वादेरुपाधिताव्यावृत्त्यर्थं सत्यन्तम् । तत्रैव प्रमेयत्वादेरुपाधितानिरासाय साधनाव्यापक इत्युक्तिः । साधनेति साधनत्वाभिमतमुच्यते । एवं साध्यपदेनापि । अत्राविनाभावस्यैव व्याप्तित्वोपगमेनानौपाधिकत्वरूपव्याप्तेरनादरान्नान्योन्याश्रयः ॥

उक्तलक्षणस्याव्याप्तत्वशङ्कोत्तरं सुधोक्ते विवरितुमाक्षिपति—**नन्विति ।** स्पार्शनं त्वगिन्द्रियवेद्यः । हेतौ परमाण्वादावव्यभिचाराय प्रत्यक्षेति स्पर्शविशेषणम् । तप्तवारिस्थवह्नावव्यभिचाराय सत्यन्तम् । तन्मात्रस्य गगनादावव्यभिचाराय विशेष्यम् । चाक्षुषत्वाद्युपाधावव्याप्तिरित्यन्वयः । यत्र स्पार्शनत्वं तत्र चाक्षुषत्वमिति स्पर्शगुण एव व्यभिचारेण शुद्धसाध्यव्यापकत्वस्या[3]भावेपि द्रव्यत्वे सति स्पार्शनत्वं यत्र तत्र चाक्षुषत्वमिति घटादौ व्याप्तिदर्शनेन पक्षधर्मावच्छिन्नसाध्यव्यापकत्व[4]स्य सत्त्वात्तत्राव्याप्तिः । तथा यत्र समवेतत्वं तत्र कृतकत्वमित्यस्य

[1] न्नेसा–ग. ग. [2] घटादेरुपाधिता–ठ. [3] त्वाभा–ट. ठ. ड.
[4] त्वसत्त्वा–ठ. ट.

**साध्यव्यापके कृतकत्वाद्युपाधौ चाव्याप्तिः ।**
**तत्र स्पार्शनत्वादेरेव साध्यत्वात् । साध्यपदेन**

जात्यादौ व्यभिचारेण कृतकत्वस्य शुद्धसाध्याव्यापकत्वेपि संबन्धत्वे सति समवेतत्वं यत्र तत्र कृतकत्वमिति व्याप्तेः संयोगे दर्शनेन साधनावच्छिन्नसाध्यव्यापकोपाधौ चाव्याप्तिरित्यर्थः । अत्रावच्छिन्नत्वं समानाधिकरणत्वं ध्येयम् । अव्याप्तिं व्यनक्ति—तत्रेति । उक्तानुमानद्वये[1] न त्ववच्छिन्नं स्पार्शनत्वादिकम् । येनोक्तलक्षणसत्त्वादव्याप्तिर्न स्यादितिभावः ॥

नन्वेतावुपाधित्वेनासंग्राह्यौ । किं तु शुद्धसाध्यव्यापक एवेति चेन्न ॥

"वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलता" ।

इत्यादा 'वथातो ब्रह्मजिज्ञासा' इत्यादि शास्त्रं प्रमाणमनुकूलवक्त्रादिमत्त्वादित्यनुमाने वाक्यत्वाद्यवच्छिन्नसाध्यव्यापकस्याप्तवाक्यत्वादेरुपाधित्वस्वीकाराद्वक्ष्यमाणदूषकताबीजस्यावच्छिन्नानवच्छिन्नसाध्यव्यापकोपाधिसाधारण्याच्चेति भावः ॥

यद्यपि समवायस्याप्रामाणिकत्वेन तत्र साध्यहेत्वोर्बाधा[1]दिनैव तदनुमानस्य दुष्टतया तत्रोपाधेरनङ्गीकारेपि न क्षतिः । तथापि नोदाहरणमादरणीयमिति न्यायेन ध्वंसो विनाशी जन्यत्वादित्यादौ साधनावच्छिन्नसाध्यव्यापकस्य कृतकत्वादे[2]रुपाधित्वेनोदाहरणान्तरसंभवेन च साधनावच्छिन्नसाध्यव्यापकोपाधिप्रदर्शन एव तात्पर्यात् । परमते प्रसिद्धत्वात्सुधायामस्यैवानुवादात्समवायपक्षक एव प्रयोगो दर्शित इत्यदोषः ॥

[1] धेनैव—ट. ठ.　[2] अत्यन्ताभावोविनाशी जन्यत्वादित्यादौ साधनावच्छिन्नसाध्यव्यापकस्य भावत्वस्य इत्याधिकम्—ट. स्याभावस्य—ठ. ड.

पक्षधर्माद्यवच्छिन्नसाध्यविवक्षायां तु विमतो धूमवान् वह्निमत्त्वादित्यादौ शुद्धसाध्यव्यापके आर्द्रेन्धनाद्युपाधौ वैधी हिंसा अधर्मसाधनं हिंसात्वादित्यादौ निषिद्धत्वाद्युपाधौ चाव्याप्तिरिति चेन्न ॥

साध्यपदेन हि व्यापकतावच्छेदकधर्माधिकरणत्वमात्रं विवक्षितम् न तु तदतिरिक्तधर्मा[1]वच्छिन्नत्वमपि । एवं च यथा शुद्धसाध्यं [2]धूमादिकं व्यापकतावच्छेदकधूमत्वादिधर्माधिकरणं तथा द्रव्यत्वसमानाधिकरणं [3]स्पार्शनत्वरूपमपि साध्यं व्यापकतावच्छेदकस्पार्शनत्वत्वाधिकरणमेवेति न कुत्राप्यव्याप्तिः । न हि [4]धवलत्वसमानाधिकरणं[5] गोत्वमगोत्वं भवति ॥

एतदेवाभिप्रेत्योक्तं सुधायाम्—साध्यपदेनासाध्यपदेनावच्छिन्ना[6]नवच्छिन्नसाध्याभिधानादिति ॥

**साध्येति** । सामान्यलक्षणगतसाध्यपदेनेत्यर्थः । **पक्षधर्मेति** । पक्षधर्मावच्छिन्नेत्यर्थः । **व्यापकतावच्छेदकेति** । यस्मिन्प्रयोगे यद्व्यापकतावच्छेदकम् तद्धर्मावच्छिन्नसाध्यव्यापक उपाधिरित्यर्थः । **उक्तं सुधायामिति** । साध्यव्यापकवैलोम्यमित्येतद्व्याख्यानसुधायामि-

[1] र्मानव- ट. नकारपूरणेन शोधितं- ठ. [2] ध्यं धू--रा. [3] णस्पा—क. ग. रा. [4] गन्धवत्त्वस—रा. [5] तथा द्रव्यत्वसमानाधिकरणं इत्यधिकम्—ग. रा. [6] ज्ञाभिधा—ग. न्नसाध्याभा—ट. [7] जन्यत्वसावयवत्वान्यतरत्वेन पर्यवसानात् । कृतकत्वं सावयवत्वं मया उपाधिरुद्भावितः । प्रागभावो जन्यः विनाशित्वादित्यत्र साधनावच्छिन्नसाध्यव्यापकभावत्वमुपाधिरित्यर्थः । इत्यस्ति—ठ.

यद्यप्यवच्छिन्नसाध्य[1]व्यापकोऽवच्छिन्नसाध्य एवोपाधिः । तथापि स्वव्यावृत्त्यावच्छिन्न[2]साध्यं व्यावर्तयन्नवच्छेदकव्यावृत्तेरसंभवादवच्छेद्यशुद्ध - साध्यव्यावृत्तौ पर्यवस्यन्भिक्षुपादप्रसरणन्यायेन शुद्धसाध्यसाधकानुमानेपि दोषो भवति । यथा विशेषणासिद्धो विशिष्टहेत्वसिद्धौ पर्यवस्यन्हेतु-दोषो भवति तथेति नार्थान्तरादिकं व्यञ्जनव-त्त्वा[3]द्यपि महानस[4]त्वाद्यवच्छिन्नवह्निरूपसाध्यव्या-पकत्वात्तत्रोपाधिरेव किंतु धूमानुमानस्यानुकूल-तर्कसनाथत्वेनावच्छेद्यवह्निव्यावृत्तेरसंभवादवच्छे-दकमहानसत्वव्यावृत्तेरेव च संभवाद्वह्निमात्रसाध-कधूमानुमानदूषणे न शक्त इति न तत्र दोष इति भेदः ॥

---

त्यर्थः । ननु शुद्धसाध्यप्रयोगेऽवच्छिन्नसाध्यव्यापकोपाध्युक्तौ प्रकृता-नुपयुक्तान्वितोक्तिरूपार्थान्तरतादोषः स्यादित्याशङ्कामनूद्य शुद्धसाध्य-प्रयोगदूषकत्वस्यापि सत्त्वान्नदोष इति भावेन परिहरति । यद्यपीति ॥

नन्वेवं पर्वतोऽग्निमान्धूमवत्त्वादित्यादिसदनुमानभङ्गप्रसङ्गः । तत्रा-प्युक्तदिशावच्छिन्नसाध्यव्यापकोपाधिसंभवादित्यत आह — व्यञ्जनव-त्त्वादिकमिति । न शक्त इति विभागः । एवं यथाश्रुतं सुधोक्तं समर्थ्य

---

[1] को विह्नसाध्य एवो इत्यस्ति–रा.　[2] न्नं सा–ट. रा.　[3] दिरो–क. ग. ट. रा.　[4] साद्य–रा.

अथवा यो यद्धर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकः स तत्रोपाधिः। साध्यव्यापकत्वेसति साधनाव्यापक उपाधिरिति सुधायामपि साध्यव्यापकपदेनेदमेव विवक्षितम्। एवं चावच्छिन्नसाध्यव्यापके नाव्याप्तिशङ्कापि[1]। नापि शुद्धसाध्यव्यापके आर्द्रेन्धनादौ तस्यापि धूमत्वादिधर्मावच्छिन्नधूमरूपसाध्यव्यापकत्वात्। एवं च सर्वोऽप्युपाधिरवच्छिन्नसाध्यव्यापक एव। सुधायामनवच्छिन्नपदं तु व्यापकतावच्छेदकधर्मान्यधर्मेणानवच्छिन्नत्वाभिप्रायम्॥

यद्वा साध्य[2]पदस्थाने यत्पदप्रक्षेपेण यो यद्व्यापकत्वे सति यदव्यापकः स स्वाव्याप्ये तस्मिन्हेतावुपाधिरित्यस्तु। एवं च द्रव्यत्वावच्छिन्नस्पार्शनत्वस्य दूष्यानुमानसाध्यत्वाभावेऽपि तत्र चाक्षुष[3]त्वोपाधितासिद्धिः। सुधायां साध्यपदं तु प्रायिकाभिप्रायम्। अत एव सुधायां वस्तुतस्तु यो धर्मो यद्व्यापकाव्या[4]पकस्तस्य तेनाव्याप्तिरिति साध्यपदस्थाने यत्पदमेव प्रयुक्तम्॥

अत्र द्वितीयतृतीयपक्षयोरप्य[5]वच्छिन्नसाध्यव्यापकेऽर्थान्तरनिरास आद्यपक्ष[6]वद्द्रष्टव्यः॥

---

प्रकारान्तरेण पक्षद्वयमाह—अथवेति। यद्वेति च। आद्यपक्षवदिति।

---

[1] अपिपदं न—क. ग. ट. रा. [2] ध्यादिप—ग. ट. रा. [3] त्वस्यो—ग. ट. रा. [4] प्य: तस्य—क. ग. ट. रा. [5] अपिपदं न—ग. ट. रा. [6] क्ष एव द्र—ग. रा.

अत्र चाद्ये पक्षे अवच्छिन्नसाध्यमपि साध्यमेव। द्वितीये शुद्धसाध्यमप्यवच्छिन्नसाध्यमेव। तृतीयेऽवच्छिन्नसाध्यस्यासाध्यत्वेपि चाक्षुषत्वस्य तत्रोपाधित्वमिति भेदो द्रष्टव्यः ॥

केचित्तु स्पार्शनत्वादिरूपशुद्धसाध्य एव द्रव्यत्वादिविशि[1]ष्टचाक्षुषत्वाभावस्याभाव उपाधिः। अयं च विशिष्टाभावरूप उपाधिः साध्यवति स्पर्शादौ द्रव्यत्वरूपविशेषणस्याभावेन घटादौ [2]चाक्षुषत्वाभावरूपविशेष्यस्याभावेनानुगत इति शुद्धसाध्यव्यापकः। तदुक्तम्—

"य उपाधिर्लालगीति साध्ये वै यद्विशेषणे।

स्वव्यावृत्त्यावच्छिन्नं साध्यं व्यावर्तयन्नित्यादिनोक्तदिशेति भावः ॥

पक्षाणां विवेकं स्वयमेवाह—अत्र चाद्य इति। साध्यमेवेति। व्यापकतावच्छेदकधर्माधिकरणत्वमात्रस्य साध्यपदेन विवक्षितत्वादिति भावः। उदयनादिमतमाह—केचित्त्विति। साध्यव्यापकत्वं व्यनक्ति—अयं चेति। य इति। य उपाधिश्चाक्षुषत्वाभावस्याभावरूप उपाधिः। साध्ये स्पार्शनत्वरूपसाध्ये द्रव्यत्वरूपयाद्विशेषणे सति लालगीति सम्यक्संबध्नाति तद्विशेषणयुक्ते[3]तस्य द्रव्यत्वविशिष्टचाक्षुषत्वाभावस्याभावः केवले साध्ये व्यापक एव स उपाधिर्भवतीत्यर्थः। एवं [4]तर्हि शास्त्रे शुद्धसाध्यव्यापकरूपैकरूपोपाधिमनुक्त्वावच्छिन्नसाध्यव्यापको[5]क्तिः किमर्थे-

[1] ष्टस्य–क. ग. ट. रा. [2] 'तु' इत्यधिकम्–क. ग. ट. [3] दभावाभूः द्रव्यत्वविशेषणविशिष्ट इत्यस्ति–ठ. [4] एवं हि–ठ. [5] कोपाध्युक्तिः–ठ.

तद्विशेषणयुक्तैतदभावा[1]भूस्तु केवल" ॥

इति । शास्त्रे तु व्यतिरेकव्याप्त्यादिनान्वयव्याप्त्यादि[2]मिवावच्छिन्नसाध्यव्यापकोपाधिनोक्त[3] शुद्धसाध्यव्यापकोपाधिराक्षिप्यत इत्याहुः ॥

अयं[4]प्रकारो वायुः स्पार्शनः स्पर्शत्वादित्य[5]सिद्धिसंकीर्णे द्रव्यत्वावच्छिन्नसाध्यव्यापके चाक्षुषत्वोपाधौ न संभवतीत्यसार्वत्रिकः । तत्र द्रव्यत्वावच्छिन्नचाक्षुषत्वाभावा[6]भावरूपोपाधावुक्तरीत्या स्पार्शनत्वरूपसाध्यव्यापकत्वेपि[7] स्पर्शत्वरूपसाधनाव्यापकत्वस्याभावात्साधनवति स्पर्शे द्रव्यत्वाभावेन द्रव्यत्वविशिष्टस्य चाक्षुषत्वाभावस्याभावेनोपाधेः साधनव्यापकत्वात् ॥

अत एव सुधायां "क्वचित्साध्यावच्छेदकावच्छिन्नस्योपाध्यभावस्य हेतुत्वाद्यथा वायुः स्पार्शनो न द्रव्यत्वे सत्यचाक्षुषत्वा"दिति क्वचित्पदं प्रयुक्तम् ॥

---

त्यत आह—शास्त्रे त्विति । तदाक्षेपार्था तदुक्तिरिति वाक्यशेषः ॥

अत्र पक्षे स्वयमेव दोषमाह—अयं त्विति । न संभवतीत्युक्तासंभवं व्यनक्ति—तत्रेति । स्पर्श[8]रूपेति । कुत इत्यतो विशेषणाभावप्रयुक्तविशिष्टाभावस्य सत्त्वादिति भावेनाह—साधनवतीति ।

---

[1] वोभूत्सकेवलं इत्यस्ति—ट. रा. [2] दिकमि—क. ग. ट. रा. [3] क्तः शु—ग. ट. रा. [4] तुप्र—क. ग. रा. [5] त्यादौह्यसं—ट. [6] वरूपो—ग. रा. [7] सत्त्वेति पूरितं—ट [8] शत्वरू—ठ. ड.

**यत्तु साधनव्यापकोऽपि क्वचिदुपाधिर्यत्र पक्षावृ-त्तिर्हेतुः यथा करका पृथिवी कठिनसंयोगव[1]त्त्वादि-त्यादावनुष्णाशीतस्पर्शवत्त्वमिति । तन्न । अस्यो-**

स्पर्श[2]त्वरूपसाधनवतीत्यर्थः । अत एव असार्वत्रिकत्वादेव[3]सुधायां साध्यव्यापकवैलोम्यमित्यादेर्व्याख्यानसुधायामित्यर्थः । क्वचित्पदं प्रयुक्त-मिति । द्रव्यत्वविशिष्टस्य चाक्षुषत्वस्याभाव उपाधिरिति हि प्रागुक्तम् । एतदभावश्च प्रतिपक्षप्रयोगे हेतूकृत्य क्वचित्पदं प्रयुक्तं चेत्प्रागुक्तविशिष्टा-भावरूपोपाधिप्रकारश्च क्वचिदेवत्युक्तं भवतीति भावः । एतेन सुधावाक्यं केचित्त्वित्युपन्यस्तपक्षाभिप्रायेणेत्युक्तं भवति ॥

क्वचित्साधनव्यापकोऽप्युपाधिर्यत्र पक्षावृत्तिर्हेतुरित्यादिना मण्यु-क्तेः[4]साधनव्यापकस्याप्युपाधित्वात्कथं "साध्यव्यापकवैलोम्यं साध-नस्ये" त्यनुव्याख्यानादौ लक्षणोक्तिरित्यतस्तं पक्षमनूद्य निराह—**यत्त्वित्यादिना** । करकेति पक्षः पृथिवीति साध्यम् । कठिनसंयोगवत्त्वं पाषाणादावेव न तु करकायां अल्पकाल एव द्रवीभावदर्शनात् । पक्षा-वृत्तिश्चायं हेतुः । हेतोः पक्षवृत्तित्वे तद्व्यापकस्योपाधेरपि पक्षवृत्तितया तद्व्यतिरेकस्य स्वरूपासिद्धत्वेन स्वव्याप्यावृत्तिबलेन पक्षात्साध्यव्यावृत्ति-संपादनस्याशक्यतया दूषकत्वमुपाधेर्न स्यात् इति यत्र पक्षावृत्तिर्हेतु-रित्युक्तम् । **अनुष्णेति** । यत्र पृथिवीत्वं घटादौ तत्रानुष्णाशीतस्पर्शवत्त्व-मिति साध्याव्यापकम् । यत्र कठिनसंयोगवत्त्वं घटादावेव तत्रा[5]नुष्णाशी-तस्पर्शवत्त्वमित्यपि नियमात्साधनव्यापकं च । पृथिवीवाय्वोरनुष्णाशी-तस्पर्शवत्त्वोपगमादिति भावः ॥

---

[1] गत्वा—क. ग.  [2] शवत्त्वरू—ठ. ड.  [3] वसाध्य—ट. ठ. ड.
[4] क्तसा—ट. ठ. ड.  [5] त्र पृथिवीत्वमित्यपि—ट. ठ. ड.

पाधित्वे घटः पृथिवी कठिनसंयोगवत्त्वादित्यत्रा-प्युपाधित्वापातात् । न हि स एव धर्मस्तस्मिन्नेव साध्ये पक्षभेदमात्रेणोपाधिरनुपाधिश्च भवति । अनुष्णाशीतस्पर्शाभावस्य साध्याभावसाधकत्वं तु नोपाध्यभावत्वात् । साधनव्यापकस्याप्युपाधित्वेऽतिप्रसङ्गात् । किंतु प्रतिपक्षान्तरवत्स्वत एव साध्याभावव्याप्तत्वात् । न हि सर्वोपि प्रतिपक्ष उपाध्यभावरूपः ॥

इति [1] स्वाभिमतोपाधिसामान्यलक्षणम् ॥ ७ ॥

नन्वेकत्रोपाधित्वेऽन्यत्रापि कुत इत्यत आह—**न हीति** । ननु भवत्वयं [2]पक्षवृत्तिहेतावप्युपाधिः अनुकूलतर्केण तन्निरासो भविष्यतीति चेत्तर्हि करका पृथिवीत्यादावपि तथास्तु । न च तत्रानुकूलतर्को नास्तीति वाच्यम् । तर्हि तत एव तस्य दुष्टत्वे किमनेनालौकिकेन सदनुमानदुष्टतापादकेन साधनव्यापकस्याप्युपाधित्वकल्पनेन । नन्वस्य-[3]पक्षवृत्तिहेतावप्युपाधित्वे घटो न पृथिवी अनुष्णाशीतस्पर्शवत्त्वाभावाज्जलवदिति स्वाभावेन साध्याभावसाधनं न स्यादित्यत आह—**अनुष्णेति** । **अतिप्रसङ्गादिति** । धूमाद्यनुमाने प्रमेयत्वादेरप्युपाधितापातादिति भावः ॥

इति स्वाभिमतोपाधिसामान्यलक्षणम् ॥ ७ ॥

---

[1] स्वमते उ–ट. [2] तत्राप्यु–ठ. ड. [3] स्यानुपाधित्वे करका न पृथिवी अनुष्णाशी इत्यस्ति–ट. ठ.

# अथोदयनाद्युक्तोपाधिलक्षणभङ्गः ॥ ८ ॥

उदयनादयस्तु---साध्यसमव्याप्तत्वे सति सा-

अथोदयनाद्युक्तोपाधिलक्षणभङ्गः ॥ ८ ॥

अनुव्याख्याने साध्यव्यापकवैलोम्यं साधनस्येत्युपाधिलक्षणोक्तिः साध्यसमव्यापकत्व[1]लक्षणनिरासायेत्युक्त्वा सुधायां [2] दूषितम् । तद्वि[3]श-दीकुर्वन्नाह---उदयनादयस्त्विति । यद्यप्येतन्मतं मणाविव पूर्वपक्षे निरस्तम् । तथाप्यधिकदोषविवक्षया सुधावाक्य[4]विवरणचिकीर्षया चात्र पुनरुपन्यासः । समव्याप्तत्वं किं विषमव्याप्तस्योपाधित्वेन शास्त्रकारै रनुपादानादुपादीयते, उत दूषकताबीजस्य समव्याप्त एव संभवेन विषमव्याप्तोपाधेरभावात् । अथ---

स्वसंबन्धेन यः स्वीयं धर्ममन्यत्र दर्शयेत् ।
स उपाधिर्यथा लोके जपादिः स्फटिकादिषु ॥
इहाप्यव्याप्यहेत्वर्थव्याप्त[5]त्वभ्रमहेतुता ।
उपाधेः स्यात् . . . . . . ॥

इत्याद्युक्त्या यः समीपस्थिते हेतौ स्वधर्म[6] व्याप्यत्वमादधातीत्युपाधि-पदस्यान्वर्थत्वसिद्ध्यर्थं, यद्वा पक्षेतरत्व[6]स्योपाधित्वनिवृत्त्यर्थमिति[7] । आद्यं

[1] त्वपक्षाणां--ठ. [2] तद्दू--ट. ठ. ड. [3] द्वितृण्वन्नाह--ठ. [4] क्यं वि-तृण्वन्विकीर्णवाचात्र--ठ. [5] व्याप्यत्व--ट. ठ. [6] रस्यो--ट. ठ. ड. [7] विक-ल्पेति पूरितम्--ट.

धनाव्यापक उपाधिरित्याहुस्तन्न । शास्त्रे पार्थिवपरमाणुरूपादयो नित्याः परमाणुविशेषगुणत्वादाप्यपरमाणुरूपवदित्यादौ पृथिवीविशेषगुणत्वाभावादेर्विषमव्याप्तस्याप्युपाधित्वस्वीकारात् । समव्याप्तत्वभावेपि वक्ष्यमाणरीत्या साध्यव्यापकत्वादिमात्रेण प्रतिपक्षाद्युन्नायकत्वसंभवेन दूषकताबीजसाम्याच्च । साध्यव्याप्यत्वरूपस्वधर्मस्य साधने प्रतिबिम्बजनकत्वरूपावयवार्थाभावेपि लाभाद्युपाधिना कृतमित्यादाविव रूढ्योपाधिपदप्रयोगोपपत्तेश्च ॥

किंच न शास्त्रे लौकिकव्यवहारार्थमुपाधिव्युत्पादनम् । किंत्वनुमानदूषणार्थमिति विषमव्याप्तिके उपाधिशब्दः पारिभाषिकोस्तु । निश्चितसाध्यकादौ सपक्षादिशब्दवत्समव्याप्तेऽवयवार्थस्य सत्त्वे-

निराह—शास्त्र इति । विषमव्याप्तस्येति । यत्र नित्यत्वं तत्र पार्थिवविशेषगुणत्वाभावो जलपरमाण्वादाविवेति साध्यव्यापकत्वमिव यत्र पार्थिवविशेषगुणत्वाभावस्तत्र नित्यत्वमिति नास्ति । घटादौ व्यभिचारादतो विषमव्याप्तस्येत्युक्तम् । द्वितीयं निराह—समेति । वक्ष्यमाणेति । दूषकताबीजोक्तिप्रस्ताव इति भावः । तृतीयं प्रत्याह—साध्येति ॥

ननु—

"भवेतां यदि वृक्षस्य वाजिकर्णौ कथचन ।
अदृष्टां समुदायस्य कः शक्तिं जातु कल्पयेत्" ॥

इति न्यायेनावयवार्थसंभवे रूढिकल्पना न युक्तेत्यतः मण्युक्तदोषान्तरं चाह—किंचेति । सुधोक्तमाह—समव्याप्त इति । चतुर्थे

नान्यत्र गौणो वास्तु । विषमव्याप्तिकस्य दूषणत्व-एव हि[1] ममाभिनिवेशः । न तु तत्रोपाधिशब्दस्य मुख्यत्वेऽपि ॥

ननु विषमव्याप्त[2]स्योपाधित्वे बाधानुन्नीतपक्षेतरोऽप्युपाधिः स्यादिति चेन्न । अनुमाने अनुकूलतर्कासत्त्वे इष्टापत्तेः । तत्सत्त्वे उपाधेः साध्याव्यापकत्वनिश्चयात् । अन्यथा तत्रापि शब्दोऽभिधेयः प्रमेयत्वादित्यादावशब्दत्वादेः समव्याप्त[3]पक्षेतरस्य निरासो न स्यात । अत एवानुव्याख्याने साध्य[4] व्यापकत्वमेवोक्तम् न तु समव्याप्तिः ॥

केचित्तु — व्यतिरेकिधर्मत्वमुपाधिसामान्यलक्षणम् । शुद्धसाध्यव्यापकत्वावच्छिन्नसाध्यव्यापकत्वादीनि तु विशेषलक्षणा[5]नीत्याहुः । तन्न । व्यतिरेकिधर्मत्वस्यात्रायमुपाधिरिति व्यवहाराहेतु-

शङ्कते—नन्विति । बाधस्थले सर्वं तेजोऽनुष्णं पदार्थत्वादित्यादौ अतेजस्त्वादिरूपस्य पक्षेतर[6]त्वस्योपाधित्वस्वीकाराद्बाधानुन्नीतेत्युक्तम् । अनुव्याख्यान इति । साध्यव्यापकवैलोम्यमित्यनुव्याख्याने । व्यतिरेकिधर्मत्वमिति । अभावप्रतियोगिधर्मत्वमित्यर्थः । धर्मत्वमात्रस्य प्रमेयत्वादावपि सत्त्वाद्व्यतिरेकीत्युक्तम् । [7]शुद्धेति । शुद्ध[8]व्यापकत्वव्यापकतावच्छेदकावच्छिन्नसाध्यव्यापकत्वसाधनावच्छिन्नसाध्यव्यापकत्वघटि-

[1] हिपदं न—ग. ट. रा.　[2] प्तिकस्यो—क. ग. ट. रा.　[3] प्तत्वे प—ग. रा.　[4] ध्याव्या—रा.　[5] णादीनि—ग. रा.　[6] रस्यो—ट. ड.　[7] शुद्धेति इति नास्ति—ट. ठ. ड.　[8] साध्येत्यधिकम्—ट. ड.

**त्वात् । अनुमितिप्रतिबन्धकज्ञानविषयतानवच्छेदकत्वाच्च ॥**

**कश्चित्तु—पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः । पर्यवसितत्वं च पक्षधर्मताबललभ्यत्वम् । एवं च शब्दः स्वस्वेतरावृत्तित्वरहितनित्यावृत्तिधर्माधिकरणम् मेयत्वादित्यादौ पर्यवासितेऽनित्यत्वे कृतकत्वमुपाधिः । तत्साधनेऽ-**

---

तानीत्यर्थः[1] । **अनुमितिप्रतिबन्धकेति** । यदवच्छिन्नविषयकं ज्ञानं अनुमितिप्रतिबन्धकं तादृशं ह्युपाधित्वमनुमानदूषणार्थमिह निरूपणीयम् । तादृशं च साध्यव्यापकत्वादिकमेव न तूक्तरूपमिति भावः ॥

रत्नकोशकारमतमाह— **कश्चिदिति** । **पक्षधर्मताबललभ्यत्वमिति** । तथाच बाधानुन्नीतपक्षेतरेपि नातिव्याप्तिः । तस्य पक्षीयसाध्याव्यापकत्वादिति भावः । **स्वेति** । स्वस्मिन्स्वेतरत्र चावृत्तित्वरहितस्तत्रोभयत्र विद्यमान इति यावत् । तादृशो नित्येऽ[2]विद्यमानश्च यो धर्मः तदधिकरणमित्यर्थः । नित्यावृत्तिधर्माधिकरणमित्येवोक्तौ शब्दत्वरूपधर्मवत्त्वेनार्थान्तरं स्यात् । अतो रहितेत्यन्तम् । प्रमेयत्वादिधर्मवत्त्वेनार्थान्तरनिरासाय नित्यावृत्तीत्युक्तम् । **तत्साधन इति** । स्वस्वेतरावृत्तित्वरहिताकृतकावृत्तिधर्माधिकरणमित्येवंरूपेण कृतकत्वसाधन इत्यर्थः । एवं च पक्षधर्मावच्छिन्नसाधनावच्छिन्नसाध्यव्यापकादिसर्वसंग्रहः । तादृशसाध्यस्य पर्यवसितत्वात् ॥

"वाद्युक्तसाध्यनियमच्युतोपि कथकैरुपाधिरुद्भाव्यः ।
पर्यवसितं नियमयन् दूषकताबीजसाम्राज्यात्" ॥

---

[1] घटितपदं न—ट. ठ. ड. [2] अपि पदं अधिकम्—ग.

नित्यत्वमुपाधिरित्याह। तन्न। तथात्वे हि द्व्यणुकस्य सावयवत्वे सिद्धे द्व्यणुकमनित्यद्रव्यासमवेतम् महत्त्वानधिकरणद्रव्यसमवेतत्वादित्यत्र पर्यवासिते नित्यद्रव्यसमवेतत्वे निःस्पर्शद्रव्यसमवेतत्वमुपाधिः स्यात् ॥

किंच पक्षधर्मताबललभ्यसाध्यसिद्धौ निष्फल उपाधिः। तदसिद्धौ कस्य व्यापकः ॥

इत्युदयनाद्युक्तोपाधिलक्षणभङ्गः ॥ ८ ॥

इति तद्वचनादिति भावः। सिद्ध इति। कार्यत्वादिहेतुनेति भावः। असमवेतत्वेन साध्यपर्यवसानवारणाय सावयवत्वे सिद्ध इत्युक्तम्। द्रव्यसमवेतत्वमात्रस्य त्र्यणुकादावव्यभिचाराय महत्त्वानधिकरणेति द्रव्यविशेषणम्। मणौजन्य[1]त्वानधिकरणेत्याद्युक्तावपि जन्यविशेषणस्य व्यर्थत्वात्परित्यागः। निःस्पर्शद्रव्येति। अत्र द्रव्यपदं समव्याप्त्यभिप्रायेणेति ज्ञेयम्। नन्वत्र पक्ष एव साध्याव्यापकत्वात्पर्यवसितसाध्यव्यापकत्वं नास्त्येवेति नातिव्याप्तिरित्यरुचेराह — किंचेति। निष्फल इति। साध्यव्यावृत्त्यर्थत्वादुपाधेः सिद्धस्य च व्यावृत्तेरयोगादिति भावः ॥

इत्युदयनोक्तोपाधिलक्षणभङ्गः ॥ ८ ॥

[1] महत्त्वेत्याधिकम्—ग.

# अथ मण्युक्तोपाधिलक्षणभङ्गः ॥ १ ॥

मणौ तु—पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः। यद्धर्मावच्छेदेन साध्यं प्रसिद्धं तत्पर्यवसितं स च धर्मः क्वचित्साधनमेव क्वचिद्द्रव्यत्वादिः क्वचिन्महानसत्वादिः एवं च वह्निना धूमे साध्ये वस्तुगत्या महानसत्वाद्यवच्छिन्नप्रसिद्धिकस्य धूमस्य व्यापक आर्द्रेन्धनादिर्धूमरूपशुद्धसाध्य एवोपाधिरिति नाव्याप्तिरित्युक्तम्। तत्र[1] धूमेन वह्निसाधनेपि महानसत्वाद्यवच्छिन्नप्रसिद्धिकवह्निव्यापकस्य व्यञ्जनवत्त्वादेर्व-

## अथ मण्युक्तोपाधिलक्षणभङ्गः ॥ १ ॥

मणौत्विति। इत्युक्तमित्यन्वयः। पक्षधर्मतावललभ्यत्वं चेत्पर्यवसितत्वं तदा प्रागुक्तो दोष इत्यत आह—यद्धर्मेति। एतच्च सर्वसंग्राहकमित्याह—स चेति। साध्यप्रसिद्ध्यवच्छेदकीभूतो धर्म इत्यर्थः। ध्वंसो विनाशी जन्यत्वादित्यादौ भावत्वाद्युपाधिस्थले साधनमित्यर्थः। वायुर्बहिरिन्द्रियप्रत्यक्षः प्रमेयत्वादित्यादौ रूपवत्त्वाद्युपाधौ द्रव्यत्वादिः अयं धूमवान्वह्निमत्त्वादित्यादौ व्यञ्जनवत्त्वाद्युपाधौ महानसत्वादीत्यादिः। दूषणसौकर्यायोपाधावुक्तरूपमुपपादयति—एवं चेति। एवमेव साधनाद्यवच्छिन्नस्थलेपि ध्येयमिति भावः। धूमेनेति। पर्वतोग्निमान्धूमवत्त्वादिति सदनुमानेपीत्यर्थः॥

[1] न धू–ग. ट. रा. [2] नत्वा–ग. ट.

द्विरूपशुद्धसाध्य एवोपाधित्वापातात्। यदि च वह्निप्रसिद्धिं प्रति महानसत्वं न्यूनवृत्तीति नावच्छेदकम् तर्हि स्पार्शनत्वप्रसिद्धिं प्रत्यपि द्रव्यत्वं न्यूनवृत्तीति नावच्छेदकं स्यात्॥

अत्र केचिदाहुः—यद्धर्मावच्छिन्नेत्यत्रावच्छेदको धर्मः[1] साधनव्यापकीभूतो विवक्षितः महानसत्वंच साधनस्य धूमस्य न व्यापकमिति न वह्नौ साध्ये व्यञ्जनवत्त्वमुपाधिः। पक्षधर्मो द्रव्यत्वादिस्तु प्रत्यक्षस्पर्शाश्रयत्वादिसाधनव्यापक एव।

ननु—साध्यप्रसिद्ध्यवच्छेदकधर्मेण यावत्त्वं विवक्षितं अतो व्यञ्जनवत्त्वादौ नातिव्याप्तिरिति चेन्न। वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वस्यानुपाधितापत्तेः। साध्यप्रसिद्ध्यवच्छेदकप्रमेयत्वाद्यनवच्छिन्नप्रत्यक्षत्वाव्यापकत्वं न। अतो यत्किञ्चित्त्वमेव वाच्यम्। तथाचोक्तदोष एवेति भावः। यदि चेति। यद्धर्मावच्छेदेनेत्यत्र साध्यप्रसिद्ध्यन्यूनानधिकदेशवृत्तिधर्मस्यैवावच्छेदकधर्मपदेन विवक्षितत्वादिति भावः। स्पार्शनत्वेति। वायुः स्पार्शनः अनुद्भूतरूपानधिकरणत्वे सति प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र चाक्षुषत्वाद्युपाधावित्यर्थः। न्यूनवृत्तीति। स्पर्शगुणेऽपि स्पार्शनत्वसत्त्वेऽपि द्रव्यत्वाभावादिति भावः॥

केचिदिति। यज्ञपत्यादय इत्यर्थः। ननु ध्वंसो विनाशी जन्यत्वादित्यादौ साधनावच्छिन्नसाध्यव्यापकं भावत्वमुपाधिर्न स्यात्।

---

[1] कीभूतो—ग. ट. रा.

अभेदेपि व्यापकत्व[1]सत्त्वेन साधनमपि स्वव्यापकमेव । आर्द्रेन्धनादे[2]रपि साधनीभूतवह्निव्यापकं यत्प्रमेयत्वादिकं तदवच्छिन्नधूमरूपशुद्ध[3]साध्यव्यापक एवेति । तन्न । आर्द्रेन्धनादौ वस्तुगत्या [4]तदुक्तस्य प्रमेयत्वाद्यवच्छिन्नसाध्यव्यापकत्वस्य सत्त्वेपि धूमरूपशुद्धसाध्यव्यापकत्वज्ञानमात्रेणोपाधिव्यवहारादनुमितिप्रतिबन्धनाच्च ॥

किंचैवं स श्यामो मित्रापुत्रत्वादित्यादौ मित्रातनयत्वावच्छिन्नश्यामत्वव्यापकं शाकपाकजत्वमुपाधिर्न स्यात् । अवच्छेदकस्य मित्रातनयत्वस्य मित्रापुत्रकोकिलादावसत्त्वेन साधनाव्यापकत्वात् ॥

एवं वायुः स्पार्शनः प्रमेयत्वादित्यादौ द्रव्यत्वावच्छिन्नसाध्यव्यापकं साधनस्य प्रमेयत्वस्य चाव्यापकं चाक्षुषत्वमुपाधिर्न स्यात् । तत्र द्रव्यत्वस्य प्रमेयत्वरूपसाधनव्यापकत्वाभावात् ॥

---

साधनस्य साधनाव्यापकत्वादित्यत आह—अभेदेपीति । साधनवन्निष्ठा[5]त्यन्ताभावाप्रतियोगित्वरूपव्यापकत्वस्य साध्यादेरिव साधनस्यापि[6] साधनवति साधनात्यन्ताभावाभावादिति भावः ॥

ननु शुद्धसाध्यव्यापकत्वज्ञानमात्रेणानुमितिप्रतिबन्धादौ सत्यप्युक्तलक्षणं संग्राहकमात्रमित्यतो न संग्राहकमप्येतदव्यापकत्वादित्याह—**किंचेति**।

---

[1] त्वस्यस--क. ग. ट. रा. [2] दिरपि—क. ग. ट. रा. [3] शुद्धपदं न-क. ग. ट. रा. [4] त्वदुक्त— क. ग. [5] ष्ठान्योन्याभा—ड. [6] सत्त्वादित्यधिकम्—ट. ठ. ड.

न चात्रायमनुपाधिः, प्रमेयत्व[1]रूपहेतोः स्पार्शनत्वरूपसाध्यविशेषणीभूतद्रव्यत्वव्यभिचारित्वेन प्रमेयत्वं स्पार्शनत्वरूपविशेष्यव्यभिचारि विशेषणाव्यभिचारित्वे सति विशिष्टव्यापकव्यभिचारित्वादिति व्यभिचारसाधकहेतुविशेषणस्य[2] द्रव्यत्वाविशेषणाव्यभिचारित्वस्यासिद्धेरिति वाच्यम्। न ह्युपाध्याहितव्यभिचारे त्वदुक्तमेव लिङ्गम्। प्रमेयत्वं स्पार्शनत्वव्यभिचारि द्रव्ये स्पार्शनत्व[3]-व्यापकोद्भूतरूपवत्त्वव्यभिचारित्वात् द्रव्यत्ववदित्यपि व्यभिचारानुमानसम्भवात्। अत्र च द्रव्य-इति विशेषणं महत्वसमानाधिकरणोद्भूतस्पर्शत्वे[4]

**नचात्रायमनुपाधिरिति** । न चेत्यस्य वाच्यमित्यनेनान्वयः । कुतोऽयमनुपाधिरिति चेत् हेतोः साध्यव्यभिचारित्वोन्नायकत्वेनोपाधेर्दूष[5]कत्वमिति मते शुद्धसाध्यव्यभिचारानुमानासंभवादित्याह— **प्रमेयत्वेति** । **विशेषणाव्यभिचारित्वे सतीति** । द्रव्यत्वरूपविशेषणे त्यर्थः । महत्वसमानाधिकरणोद्भूतस्पर्शत्वे व्यभिचारवारणाय सत्यन्तम् । विशेषणाव्यभिचारित्वे सतीत्यस्यार्थनिर्देशो द्रव्यत्वाव्यभिचारित्वे सतीति। **विशेषणमिति** ॥

[1] रूपपदं न–ग. ट.　[2] ‘द्रव्यत्वरूपविशेषणस्य’ इत्यधिकम्–क.　[3] त्वप्रयोजकोद्भू–क. ग ट. ग.　[4] शवत्त्वे इति शोधितम् -ट.　[5] दोषत्वमिति मते–ट. दोषित्वमते–ङ.

**व्यभिचारवारणार्थम् । त्वन्मतेपि[1] द्रव्यत्वाव्यभिचारित्वे सतीति विशेषणमेतदर्थमेव । त्वन्मते च व्यभिचार[2]उपाधिनियतः ॥**

**किंच[3] व्यञ्जनवत्त्वादेरपि महानसत्वाद्यवच्छिन्नवह्निव्यापकत्वेन तत्रोपाधित्वेपि न दोष इत्युक्तत्वात्तद्व्यावृत्त्यर्थं साधनव्यापकत्वविशेषणं व्यर्थम् ॥**

**अथ मतम्—**

**तद्धर्मावच्छिन्नसाध्यव्यापकत्वे सति तद्धर्मावच्छिन्नसाधनाव्यापकत्वम् वा, यत्र साधनाव्यापकत्वं तद्वृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वं वा, स्वानधिकरणीभूतसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वं वोपाधित्वम् ॥**

ननु मित्रा[4]पुत्रत्वप्रमेयत्वादिहेतावुपाधे[5]रेवमस्त्वित्यत आह— **त्वन्मते चेति । इत्युक्तत्वादिति ।** स्वाभिमतोपाधिलक्षणोक्तिप्रस्तावे व्यञ्जनवत्त्वादिरपि महानसत्वाद्यवच्छिन्नवह्निरूपसाध्यव्यापकत्वात्तत्रोपाधिरेवेत्यादिना ग्रन्थेनोक्तत्वादित्यर्थः ॥

पूर्वोक्तदोषनिरासाय यज्ञपतिनैवोत्प्रेक्षितपक्षान्तराण्याशङ्कते— **अथ मतमिति । यद्धर्मेति ।** येन धर्मेण साध्यव्यापकत्वं तेनैव धर्मेण

[1] पिहिद्र–**ग. ट. रा.** [2] रे उपाधिर्वि–**ग. ट. रा.** [3] किंचेति नास्ति–**ग. ट. रा.** [4] पुत्रत्व–**ठ.** त्रत्वेति शोधितम्–**ड.** [5] धिरेव मास्त्व–**ट. ठ.** धेरेव मास्त्व–**ड.**

**एवं च धूमानुमाने व्यञ्जनवत्त्वादिकं नोपाधिः। [1]तस्य महानसत्वाद्यवच्छिन्नवह्निं प्रतीव तदवच्छिन्नधूमं प्रत्यपि व्यापकत्वेन तद्धर्मावच्छिन्नसाधनाव्यापकत्वाभावात्। व्यञ्जनवत्त्वस्य यत्र पर्वते धूमरूपसाधनाव्यापकत्वं तदवृत्तिमहानसत्वाद्यवच्छिन्नवह्निव्यापकत्वेपि तद्वृत्तिपर्वतत्वाद्यवच्छिन्नवह्न्यव्यापकत्वात्। व्यञ्जनवत्त्वानधिकरणीभूते धूमरूपसाधनाधिकरणे पर्वते वर्तमानो यः पर्वतत्वादिस्तदवच्छिन्नवह्न्यव्यापकत्वाच्च। तस्माद्व्यञ्जनवत्त्वादौ नातिव्याप्तिः॥**

**नाप्यव्याप्तिः। उद्भूतरूपवत्त्वादेर्द्रव्यत्वाद्यवच्छिन्नस्पार्शनत्वरूपसाध्यं प्रति व्यापकत्वेप्यूष्मादौ**

साधनाव्यापकत्वमाद्यलक्षणार्थः। स्वेति [2] व्यञ्जनवत्त्वादिरुपाधिरुच्यते स्वस्यानाधिकरणीभूतं यत्साधनाधिकरणं तद्वृत्तीत्यर्थः। स्वानाधिकरणह्रदवृत्तिह्रदमहानसान्यतरत्वावच्छिन्नव्यापकमेव व्यञ्जनवत्त्वमिति तत्रातिव्याप्तिनिरासाय साधनाधिकरणेति। एतच्च लक्षणत्रयं धूमेन वह्निसाधनस्थले व्यञ्जनवत्त्वाद्युपाधौ नास्तीति नातिव्याप्तिरिति तावत्क्रमेणोपपादयति **एवं चेति**। एवं रूपेण विवक्षायां सत्यामित्यर्थः। **नाप्यव्याप्तिरिति।** वायुः स्पार्शनः प्रत्यक्षस्पर्शाश्रयत्वादित्यादौ द्रव्यत्वावच्छिन्नसाध्यव्यापकोद्भूतरूपवत्त्वाद्युपाधावव्याप्तिर्नास्तीत्यर्थः। क्रमेण तत्र लक्षणत्रयसत्त्वं व्यनक्ति—**उद्भूतत्यादिना**। [3]**ऊष्मादौ व्यभिचारेणेति**। ऊष्म-

[1] इतः 'तस्माद्व्यञ्जनवत्त्वादौ' इति पर्यन्तस्य स्थाने-'तस्य महानसत्वाद्यवच्छिन्नसाध्यव्यापकत्वेपि तद्वृत्तिपर्वतत्वावच्छिन्नवह्न्यव्यापकत्वात्' व्यञ्जनवत्त्वानधिकरणीभूते धूमरूपसाधनाव्यापकत्वेपि तदवृत्तिमहानसत्वाद्यवच्छिन्नवह्निव्यापकत्वाच्च इत्यस्ति-ट. [2] 'व्यञ्जनवत्त्वादिः' इति नास्ति-ट. ठ. ड [3] ऊष्मादौ इतिन-. ठ. ट.

व्यभिचारेण द्रव्यत्वावच्छिन्नप्रत्यक्षस्पर्शाश्रयत्वरूपं साधनं प्रत्यव्यापकत्वात् । यत्रोष्मादौ साधनाव्यापकत्व तद्वृत्तद्रव्यत्वरूपधर्मावच्छिन्नसाध्यव्यापकत्वात् । उद्भूतरूपानधिकरणे प्रत्यक्षस्पर्शाश्रयत्वरूपसाधनाधिकरणे ऊष्मणि वर्तमानद्रव्यत्वावच्छिन्नसाध्यव्यापकत्वाच्चेति ॥

उच्यते—

घटः पृथिवी द्रव्यत्वादित्यत्र घटान्यत्वावच्छिन्नपृथिवीत्वव्यापके पक्ष एव साधनाव्यापके

तप्तवारिस्थवह्न्यादौ प्रत्यक्षस्पर्शाश्रयत्वे सत्यप्युद्भूतरूपवत्त्वाभावादिति भावः ॥

नन्वेवमपि गन्धप्रागभावावच्छिन्नो घटो गन्धवान्पृथिवीत्वादिति साध्य[1]व्यभिचारिणि हेतौ गन्धप्रागभावकालीनत्वावच्छिन्नसाध्यव्यापके गन्धप्रागभावकालीनत्वावच्छिन्नपृथिवीत्ववति पक्षे साधनाव्यापके तत्कालीनरूपवत्त्वाद्युपाधावतिव्याप्तिरेवेति चेन्न । यद्धर्मवति[2] साध्यव्यापकत्वं तद्धर्मवति साधनाव्यापकत्वमित्यस्याभिमतत्वात् ॥

उक्तोपाधिश्च न तथा । तद्धर्मवतिपक्षे सा[3]धनाव्यापकत्वात् । न चैवं स श्यामो मित्रा[4]तनय(पुष्ट)त्वादित्यत्र नरत्वावच्छिन्नश्यामत्वव्यापकंपुष्टहंसादौ साधनाव्यापकं शाकपाकजत्वमुपाधिर्न स्यात्, नरत्ववति साध्यव्यापकस्य तस्य तद्वृति साधनाव्यापकत्वाभावात्, मित्रापुष्टस्य नरस्य सर्वस्यैव शाकपाकजत्वादिति वाच्यम् । नरहंसान्यतरत्वादिक-

[1] ध्याव्य–ड. [2] पक्षधर्मवति इत्यस्ति–ड. [3] ध्याव्या–ट. ड.
[4] त्रापुष्ट–ट. त्रापुत्र–ठ. पुत्रेतिशोधितम्–ड.

**घटावृत्तिगुणवत्त्वरूपोपाधावुक्तलक्षणान्यव्याप्तानि। घटावृत्तिगुणवत्त्वस्य घटान्यत्वावच्छिन्नपृथिवीत्वं प्रतीव तदवच्छिन्नद्रव्यत्वं प्रत्यपि व्यापकत्वात्। घ[1]टात्मपक्षे साधनाव्यापकस्य तस्य घटवृत्तिना घटत्वेन वा द्रव्यत्वादिना वावच्छिन्नपृथिवीत्वव्यापकत्वाभावात्। स्वानाधिकरणीभूते द्रव्यत्वरूपसाधनाधिकरणे घटे वर्तमानघटत्वादिधर्मावच्छिन्नसाध्यव्यापकत्वाभावाच्च ॥**

---

मादाय तत्राप्युक्तलक्षणसत्त्वादिति मन्यन्ते। उक्तलक्षणान्यव्याप्तानीत्युक्तम्। तत्र लक्षणत्रयासत्त्वं क्रमेण व्यनक्ति—**घटावृत्ति गुण[2]वत्त्वस्येत्यादिना। घटान्यत्वेति।** घटान्यस्मिन्पृथिवीत्ववति द्रव्यत्ववति च घटावृत्तिगुणवत्त्वसत्त्वेन यद्धर्मेण साध्यव्यापकत्वं तद्धर्मेण साधनाव्यापकत्वाभावादाद्यमव्याप्तम्। घटवृत्तिनेत्येतद्द्रव्यत्वादिना वेत्यत्राप्यन्वेति ॥

न चायमुपाधिरेव न भवति शुद्धसाध्यव्यभिचारानुन्नायकत्वात्। येनाव्याप्तिर्दोषायेति वाच्यम्। द्रव्यत्वं पृथिवीत्वव्यभिचारि द्रव्यत्वपटत्वप्रमेयत्वानीति प्रतीतिविशेष्यत्वे सति घटावृत्तिगुणवत्त्वव्यभिचारित्वात् प्रमेयत्वादिवदित्यादिक्रमेण तत्संभवात्। अत्र द्रव्यत्वेति स्वरूपासिद्धिवारणाय। न च व्यभिचार[3]वारकत्वेन वैयर्थ्यम्। त्रितयगोचरप्रतीति[4]विशेष्यत्वे व्यर्थत्वशङ्कानवकाशात्। व्यर्थविशेष्यत्वशङ्कानिरासाय पटत्वेति। एवं च पटत्व एव व्यभिचारवारणाय विशेष्यमिति

[1] ट रूपप—क. ग. ट. रा. [2] णत्वस्य—ठ. ड. [3] रावा—ट. ठ. ड.
[4] विषयत्वे—ड.

किंचार्द्रेन्धनाद्युपाधौ धूमत्वावच्छिन्न[1] साध्यव्यापकत्वे सति वह्नित्वावच्छिन्नसाधनाव्यापकत्वमात्रेणोपाधिव्यवहारादनुमितिप्रतिबन्धाच्च नेदमुपाधित्वम्। त्वयापि [2]ह्यनेनैव हेतुद्वयेन व्यतिरेकिधर्मत्वादेरुपाधित्वं निरस्तम् ॥

अपि च व्यञ्जनवत्त्वादेरपि महानसत्वाद्यवच्छिन्नवह्नि[3]व्यापकत्वेनोपाधित्वेपि न दोष इत्युक्तत्वात्तद्व्यावृत्त्यर्थं त्रेधा विशेषणं व्यर्थमेव ॥

अन्येतु पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापक एवोपाधिः । यद्धर्मावच्छेदेन साध्यं प्रसिद्धं तदेव पर्यवसितम्। नचैवं व्यञ्जनवत्त्वादिरपि वह्निरूपशुद्धसाध्य एवोपाधिः स्यादिति[4] वाच्यम् । साधनाव्यापकपदेन सकलसाध्यस्य यद्व्यापकं तद्रहितेऽधिकरणे साधनपरित्यागस्य विवक्षितत्वात् । तस्य च तत्राभावात् । न हि

ज्ञेयम् । व्याप्तिग्रहस्थानार्थं प्रमेयत्वेत्युक्तम् । घटत्वे व्यभिचारवारणाय सत्यन्तम् ॥

अङ्गीकृत्याप्यनुपाधित्वं दोषान्तरमाह—**किंचेति** । **त्वयापीति** । उक्तलक्षणत्रयवादिनापीत्यर्थः । **इत्युक्तत्वादिति** । स्वाभिमतोपाधिलक्षणप्रस्तावे । [5]**त्रिधेति** । तद्धर्मेति, तद्वृत्तीति, स्वानधिकरणीभूतेति, [6]त्रिधेत्यर्थः । तत्राभावादित्युक्तं व्यनक्ति—**न हीति** । अतिव्याप्तिं

[1] न्न साधनाव्या—ग. रा. [2] हि पदं न—ग ट. [3] ह्नावत्रोपा—ग ट. रा. [4] शङ्क्यम्—क. ग. ट ग. [5] त्रेधे—ट. ड. [6] त्रेधे—ट. ड.

व्यञ्जनवत्त्वेन धूमः सकलवह्निव्यापकरहिते परि-त्यज्यते। धूमस्य सदनुमानत्वेन धूमवति यत्किं-चिद्वह्निसत्त्वेन तत्र वह्निव्यापकस्यावश्यकत्वात्। शुद्धसाध्यव्यापकेऽवच्छिन्नसाध्यव्यापके नोपाधौ विवक्षितं साधनाव्यापकत्वमस्त्येव। आर्द्रेन्धनेन सकलधूमव्यापकरहिते तप्तायःपिण्डे वह्नेः परित्य-क्तत्वात्। चाक्षुषत्वेन च सकलानि द्रव्यगुणादि-गतानि यानि [1]स्पार्शनत्वानि तद्व्यापकानि या-न्युद्भूतरूपाधिकरणत्वोद्भूतरूप[2]समानाधिकरणत्वा-दीनि तद्रहिते वायौ प्रत्यक्षस्पर्शाश्रयत्वस्य त्यक्त-त्वादित्याहुः॥

तदपि न। उक्तकुसृष्टियुक्तसाधनाव्यापकत्वा-द्य[3]ज्ञानेपि निषिद्धत्वादावुपाधिपदप्रयोगादनुमि-तिबन्धनाच्च। [4]विशेषणवैयर्थ्यस्योक्तत्वाच्च। एवं कुसृष्ट्यन्तराण्यपि दूष्याणि॥

निरस्याव्याप्तिं च निराह—शुद्धेति। एवं कुसृष्ट्यन्तराणीति। तथाहि—साध्यव्यापकत्वे सति साध्यसमानाधिकरणत्वे सति वा साध्य-व्यभिचारिसाधनाव्यापकत्वमुपाधिलक्षणम्। अत्र निरधिकरणे साध्य-विरुद्धे सर्वदोपाधिव्यवहारविधुरेऽतिव्याप्तिवारणाय सत्यन्तम्। व्यञ्जन-

[1] यानीति नास्ति—ग. रा. [2] सामानाधिकरण्यादीनि—ग. ट. रा. [3] द्य-भावेपि—ग. 'द्य' 'नि' अनयोर्मध्ये लोपो दर्शितः—रा. [4] विवक्षाविशेषवैय—ग. ट. रा.

**एतेन—यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वं स उपाधिः। एवंचावच्छिन्नसाध्यव्यापकः शुद्धसाध्यं प्रत्यव्यापकोपि तत्रोपाधिः। उपाधिव्यभिचारप्रयुक्तव्यभिचारस्य**

---

वत्त्वादेर्धूमादिहेतावुपाधित्वप्रसङ्गवारणाय साध्यव्यभिचारीति विशेषणमित्यादि। तदप्येतेनैव निरस्तम्। एतदज्ञानेप्युपाधिव्यवहारादनुमितिप्रतिबन्धाच्चेत्युक्तहेतुभ्यः॥

न चेदं संग्राहकमात्रमुक्तमिति वाच्यम्। अनुमानदूषणार्थं ह्युपाधिनिरूपणम्। अनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमुपाधित्वमिह निरूप्यमिति मणावप्युक्तेः। अतस्तादृशस्यैव सर्वसंग्राहकस्य ग्रन्थकृदुक्तरीत्या त्रेधा वक्तुं शक्यत्वेनान्यादृशस्याप्य[1]नादरणीयत्वात्। एवं साध्यव्यापकतास्थलातिरिक्ते साधनसमानाधिकरणो यो धर्मस्तदवच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकमित्याद्यपि निरस्तमित्यर्थः॥

यथाश्रुतं मणिवाक्यमनुवदति—**यद्व्यभिचारित्वेनेति**। अनुमीयत इति शेषः। अव्याप्तिनिरासाय सर्वत्रैतदस्तीति पक्षधराद्युक्तदिशोपपादयति—**एवं चेति**। वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वादिः ध्वंसो विनाशी जन्यत्वादित्यादौ भावत्वादिश्चावच्छिन्नसाध्यव्यापकः। **उपाधिव्यभिचारेति**। प्रत्यक्षस्पर्शाश्रयत्वं जन्यत्वं वा प्रत्यक्षत्वव्यभिचारि विनाशित्वव्यभिचारि वा द्रव्यत्वादिरूपविशेषणाव्यभिचारित्वे सति तद्विशिष्टप्रत्यक्षत्वादिव्यापकोद्भूतरूपवत्त्वादिव्यभिचारित्वात् इत्येवंरूपेणोपाधिव्यभिचारप्रयुक्तस्येत्यर्थः।

1 स्यानाद—ठ. ड.

शुद्धसाध्येपि सत्त्वात् । इयांस्तु भेदः। शुद्ध-साध्यव्यापकः शुद्धसाध्य एवोपाधिः । अवच्छिन्नसाध्यव्यापकस्तु शुद्धेऽवच्छिन्ने चोपाधिः । [1] तद्व्यभिचारप्रयोजकव्यभिचारनिरूपकत्वादिति मण्युक्तं लक्षणान्तरमपि निरस्तम् । साध्य-व्यभिचारोन्नायकत्वस्योपाधिशरीरानुप्रवेशे उपाधिर्व्यभिचारोन्नायक इति सिद्धान्तविरोधात् ॥

किंच यद्व्यभिचारत्वेनेत्यनेनोपाधिव्यभिचारस्य किं साध्यव्यभिचारानुमितिजनकत्वमभिप्रेतं किं वा जनकत्वप्रयोजकरूपवत्त्वम् । नाद्यः । व्यभिचारानुमितिदशायामनुपाधिता[2]पातात् । पर्वत आकाशवान् धूमादित्यत्र घटस्योपाधितापाताच्च । शक्यते हि घटव्यभिचारेणाकाशव्यभिचारोऽनुमातुम् । त्वन्मते आकाशात्यन्ताभावस्य केवलान्वयित्वेन वृत्तिमतः सर्वस्याप्याकाशव्यभिचारित्वात् ॥

शुद्धावच्छिन्नसाध्यव्यापके सर्वत्रैकरूप्यमेव किमित्यत आह—**इयांस्त्विति** । **इति सिद्धान्तेति** । उपाधिरित्युक्ते साध्यव्यभिचारोन्नायक इति प्राप्तत्वेन व्यभिचारोन्नायकोव्यभिचारोन्नायक इत्यस्यासंभवेन मणिकृत्सिद्धान्तविरोधादित्यर्थः ॥

फलोपधानं योग्यतावेति विकल्प्य निराह—**किंचेति** । **अनुमितिदशायामिति** । तदानीमनुमितिरूपफलाभावादिति । तथाचोपाधे-

[1] उभयव्यभिचा—क. ट. रा.　　[2] त्वाप—ग. रा. ट.

किंचानुमितिजनकत्वमित्यत्रानुमितिः किं भ्रमसाधारणी विवक्षिता प्रमारूपैव वा । आद्ये धूमेन वह्न्यनुमाने घट उपाधिः स्यात् । संभवति हि घटव्यभिचारित्वेन धूमस्य भ्रमरूपा वह्निव्यभिचारानुमितिः । द्वितीये वह्निना धूमानुमाने ह्रदत्वमुपाधिः स्यात् । ह्रदत्वव्यभिचारित्वेन लिङ्गेनोत्पन्नाया अपि वह्नेर्धूमव्यभिचारानुमितेर्विषयसत्त्वेन प्रमात्वात् ॥

अन्त्येप्युपाधिव्यभिचारस्य साध्यव्यभिचारं प्रति प्रयोजकत्वं किं स्वस्य साध्यव्यभिचारव्याप्यत्वं साधनस्य साध्यव्यापकव्यभिचारित्वमेव वा । नाद्यः । वायुः स्पार्शनः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वोपाधिव्यभिचा[1]रस्य शुद्धसाध्यव्यभिचारित्वव्याप्यत्वाभावेन लक्षणस्याव्याप्तेः । महत्त्वसमानाधिकरणोद्भूतस्पर्शत्त्वस्योद्भूतरूपवत्त्वव्यभिचारित्वेपि स्पार्शनत्वव्यभिचारित्त्वाभावात् ॥

र्नित्यदोषत्वसिद्धान्तभङ्ग इति भावः । ननु साधनस्येत्यत्र साध्यसमानाधिकरणसाधनस्येत्युच्यते । तथाचाकाशसामानाधिकरण्यं धूमे नास्तीति न दोष इति वादिनं प्रत्याह—**किंचेति** । **अन्त्येपीति** । प्रयोजकरूपवत्त्वमिति पक्षेपीत्यर्थः । स्वस्योपाधिव्यभिचारस्य । **लक्षणस्येति** । साध्यव्यभिचारव्याप्यव्यभिचारनिरूपकत्वरूपलक्षणस्योद्भूतरूपवत्त्वोपाधावव्याप्तिरित्यर्थः । व्याप्यत्वाभावंव्यनक्ति—**महत्त्वेति** । परमाण्वादिस्पर्शस्याप्रत्यक्षत्वान्महत्वसमानाधिकरणेत्युक्तम् ।

[1] रित्वस्य-ग. ट. रा.

द्वितीये त्वस्मदुक्तलक्षण एवान्तर्भावः स्यात् । अस्माभिरपि साध्यव्यापकत्वे सति साधनाव्यापक उपाधिरित्यनेन साध्यव्यापकाव्याप्यत्वमेव हेतोः सोपाधिकत्वमित्यभिप्रेतत्वात् ॥

उक्तंह्यनुव्याख्याने—" साध्यव्यापकवैलोम्यमव्याप्तिः साधनस्य चेति " । साधनस्य यत्साध्यव्यापकवैलोम्यं साध्यव्यापकाव्याप्यत्वं साऽव्याप्तिरित्यर्थः । तस्मात्परोक्त[1]लक्षणान्ययुक्तानि॥

इति मण्युक्तोपाधिलक्षणभङ्गः ॥ ९ ॥

## अथोपाधेर्दूषकताबीजम् ॥ १० ॥

उपाधिश्चानुमानप्रवृत्तेः प्राग्व्याप्तिग्रहवेलायाम-

---

दीपप्रभादिस्पर्शस्याप्रत्यक्षत्वादुद्भूतेत्युक्तम् । **द्वितीय इति** । साधनस्येत्याद्युक्तपक्ष इत्यर्थः । अव्याप्तिर्व्याप्त्यभाव इत्यर्थः ॥

इति मण्युक्तोपाधिलक्षणभङ्गः ॥ ९ ॥

अथोपाधेर्दूषकताबीजम् ॥ १० ॥

उपाधेः किंत्वेन दूषकत्वमित्यतः 'साध्यव्यापकवैलोम्य' मिति युक्तिपादीयानुव्याख्यानसुधोक्तिं विवृण्वान आह—**उपाधिश्चेति** ।

[1] क्तानिल-ग. रा.

**व्याप्तेरेवोन्नायकः । साध्यव्यापकं परित्यजतो हेतोः साध्यपरित्यागस्यावश्यकत्वात् । साध्यपरित्यागस्यैवाव्या[1]प्तित्वात् । न तु तदा सत्प्रतिपक्षस्य । पक्षे साध्योपसंहारा[2]त्प्राक्प्रतिपक्षस्यान[3]वसरात् । तदुत्तरकालं[4] प्रतिपक्षस्यैवोन्नायकः ।**

प्रागित्यस्य विवरणं व्याप्तिग्रहेत्यादि । उपस्थित इति शेषः । अव्याप्तेर्व्याप्त्यभावस्य हेतुत्वेनाभिमतं, हिंसात्वं पापसाधनत्वाव्याप्यं तद्व्यापकनिषिद्धत्वाव्याप्यत्वादित्येवंरूपेणोन्नायक इत्यर्थः । तद्व्यापकाव्याप्यत्वे तदव्याप्यत्वं कुत इत्यतः सुधोक्तमेवाह—**साध्येति** । साध्यमपरित्यजतस्तद्व्यापकपरित्यागस्यायोगादिति भावः । तावता साध्यत्यागोन्नायकत्वमेव प्राप्तं न त्वव्याप्त्युन्नायकत्वमित्यत आह—**साध्यपरित्यागस्यैवेति** ॥

एतेनानौपाधिकसंबन्धस्य व्याप्तित्वात्सोपाधिकत्वे लक्षणाभावादव्याप्तिरित्युपपादनं निरस्तम् । व्याप्तिज्ञानाधीनमुपाधिज्ञानं [5]तदधीनं च [6]निरुपाधिकत्वज्ञानं तदायत्तं च व्याप्तिज्ञानमिति चक्रकप्रसङ्गेन तस्य व्याप्तिलक्षणत्वायोगात् ॥

एवकारव्यावर्त्यमाह—**न त्विति** । **तदुत्तरेति** । अनुमानप्रवृत्त्युत्तरकालं त्वित्यर्थः । उपस्थितोपाधिश्चेत्यनुकर्षः । न तु व्याप्त्यभावादेरित्येवकारार्थः । प्रतिपक्षोन्नयनप्रकारश्च प्रतिपक्षप्रयोगोपीत्यादिनाग्रे व्यक्तः ॥

ननु साध्यव्यापकं परित्यजतो हेतोः साध्यपरित्यागस्यावश्यकत्वे साध्यव्यभिचार एव प्राप्तः कथं प्रतिपक्षतेत्यतोऽन्यत्र साध्यपरि-

[1] वचा—**क. ग. रा.** [2] ग्रहा—**ग. रा.** [3] काशात्—**ट. रा.** [4] लन्तु-प्र—**क. ट. रा.** [5] उपाधिज्ञानाधीनं—**ठ.** [6] च इति नास्ति—**ट. ठ.**

**हेतोः साध्यपरित्यागो हि पक्षादन्यत्र वा पक्ष एव वा नाद्यः। स्फुटे व्यभिचारे सति तदर्थमुपाध्यप्रतीक्षणात्। द्वितीये साध्यव्यापकव्यावृत्तिः पक्षे[1] साध्यमपि व्यावर्तयतीति प्रतिपक्षोन्नायकतैव ॥**

**ननु—तदाप्यव्याप्त्युन्नायक एवास्तु। उपाधिव्यावृत्त्या साध्यरहिते पक्षे वर्तमानस्य हेतोर्व्यभिचारावश्यंभावादिति चेन्न। तथात्वे बाधप्रतिरोधयोरपि व्यभिचारोन्नायकत्वापातात्। तत्र-ताभ्यामेवानुमाने दुष्टे किं तदुपजीविना व्यभिचारेणेति चेत्तर्ह्यत्रापि व्यापकव्यावृत्तिरूपप्रतिपक्षेणैवानुमाने दुष्टे किं तदुपजीविना व्यभिचारेण ॥**

---

त्यागे हि तथा पक्ष एव साध्यपरित्यागे तु प्रतिपक्षतैवेतिभावनान्यत्र परित्यागपक्षं दूषयन्नाह—**हेतोः साध्यपरित्यागो हीति**। उपाध्युपस्थितिस्थल इति योज्यम्। व्याप्त्यभावोन्नायकत्वं कथमित्यत आह—**उपाधीति**। परमुखेनैव समाधिं वाचयित्वा सम इत्याह—**तत्र ताभ्यामिति** ॥

ननूपाध्यभावस्य प्रतिपक्षत्वेन दोषत्वे सत्युपाधेरदोषत्वापत्तिः, प्रतिपक्षे उपाध्यनुद्भावनापत्तिः, बाधोन्नीतपक्षतरस्योपाधित्वानापत्तिः पक्षैऽकदेशवर्तिनोऽनुपाधितापत्तिः, पक्षेऽविद्यमानव्यतिरेकप्रतियोगिन उपाधितानापत्तिः, संदिग्धोपाधेरदोषत्वापत्तिः, प्रतिपक्षोद्भावनानवसर, इति दोषसप्तकभावात्कथं प्रतिपक्षोन्नायकत्वमित्यत आद्यं निराह—

[1] क्षात्साध्य–क. ग. ट. रा.

न चोपाध्यभावस्य प्रतिपक्षत्वेन दोषत्वे उपाधेर्दोषत्वं न स्यात् न हि यत्र यदभावो दोषस्तत्र सोपि दोष इति वाच्यम् । उपाधेः स्वव्यावृत्तिमुखेनैव दोषतया स्वरूपेणादोषत्वात् । अन्यथा व्यभिचारोन्नयनपक्षेपि चोद्यं दुष्परिहरम् ॥

न चैवं सत्प्रतिपक्षे उपाध्युद्भावनं न स्यात् । वैयर्थ्यादिति वाच्यम् । स्वपक्षसाधनार्थमेकं परपक्ष[1] साधनप्रतिरोधार्थमपरमिति सार्थक्यात् । अन्याय्यो ह्येकेन बहूनां प्रतिरोधः ॥

उक्तं च—

"द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावतः" ॥

इति । सिद्धं चैतल्लोकशास्त्रयोः । उक्तं हि

न चोपाध्यभावस्येति । चोद्यं दुष्परिहरमिति । उपाध्यभावस्य साध्यव्यभिचारोन्नायकत्वेन दूषकत्वे उपाधिर्दोषो न स्यादिति चोद्यस्य तत्रापि तुल्यत्वादिति भावः । द्वितीयमाशङ्क्य निराह—न चैवमिति । वैयर्थ्यादिति । पाधिः प्रतिपक्षत्वेन दूषक इति वक्तव्यं[2] वादिना प्रागुपन्यस्त हेतोरेव प्रतिपक्षस्य सत्त्वेन पुनरुपाध्यभावरूपप्रतिपक्षस्य कृत्याभावादिति भावः । पूर्वं प्रयुक्तहेतोः पश्चादुक्तोपाध्यभावरूपहेतोश्च द्वयोरपि सार्थक्यमाह—स्वपक्षेति । बहूनामिति । अनेकस्येत्यर्थः[3] । उक्तं चेति । विष्णुतत्त्वनिर्णयोदाहृतब्रह्मतर्कस्मृताविंत्यर्थः । लोके प्रसिद्धमिति तदनुक्त्वा शास्त्रे दर्शयति—उक्तं हीति ॥

---

[1] पक्षपदं न क. ट. ग. [2] तच्च न सम्भवतीत्याधिकम्—ट. [3] 'बहूनामिति' इत्यादिकं नास्ति—ट. ठ. ड.

प्रमाणतोऽर्थप्रतिपत्ताविति न्यायभाष्यव्याख्या[1]ना-वसरे न्यायवार्तिकेऽपि "प्रमाणेन प्रमाणाभ्यां प्रमाणैरिति संप्लवो गम्यत" इति। न्यायटीकायां च "दाढ्यार्थकपरस्परसंवादरूपसंप्लवावसर" इति ॥

एतेन [2]शतमप्यन्धानां न पश्यतीति निरस्तम् ॥

न च बाधोन्नीतपक्षेतर[3]त्वोपाधेर्दोषत्वं नस्यात् प्रतिपक्षेऽसाधारण्यादिति वाच्यम्। तत्रोपाधिव्यतिरेकरूपहेतोरनुकूलतर्कसनाथत्वेनासाधारण्यस्यादोषत्वात् ॥

न च क्षितिद्व्यणुकादिपक्षकेश्वरानुमाने पक्षैकदेशवर्तिनोऽनणुत्वस्योपाधित्वं न स्यात्। तद्व्यतिरेकस्य भागासिद्धेरिति वाच्यम्। तत्रोपाधिरहितपक्षैकदेशस्यैव पक्षीकरणात्। तावतापीश्वरानुमानोद्देशधीविरोधित्वेन प्रतिपक्षत्वोपपत्तेः।

---

नन्वनेकहेतोर्न दाढ्यापादकत्वमित्येतन्निराह—**एतेनेति**। प्रमाणसंप्लवस्याङ्गीकारादित्युक्तत्वेनेत्यर्थः। तृतीयं निराह—**न च बाधेति**। वह्निरनुष्णः पदार्थत्वादित्यादाववह्नित्वादेः। चतुर्थमाशङ्क्य निराह—**न च क्षितीति**। क्षितिद्व्यणुकादिकं सकर्तृकमित्यनुमान इत्यर्थः। **पक्षैकदेशस्येति**। द्व्यणुकादिकं विकर्तृकं अणुत्वादित्येवं रूपेणेत्यर्थः। **ईश्वरेति**। ईश्वरानुमाने उद्देश्या या धीः सर्वकर्तृविषयिणी तद्विरोधित्वे-

---

[1] ख्यावस–क. रा. [2] सहस्रमप्य–क. ग. ट. रा. [3] त्वोपा–ग. ट. रा.

नचान्धकारोद्रव्यं स्वातन्त्र्येण प्रतीयमानत्वादित्यत्राश्रावणत्वस्य पर्वतो धूमवान्वह्निमत्त्वादित्यत्रार्द्रेन्धनादेश्चोपाधित्वं न स्यात्। तद्व्यतिरेकस्य पक्षैकदेशेप्यभावादिति वाच्यम्। व्यभिचारोन्नयनपक्षेपि शब्दे तप्तायःपिण्डे च व्यभिचारस्य स्फुटतयोपाध्यनपेक्षणात्। शब्दादेरपि पक्षत्वेन व्यभिचारस्यास्फुटत्वं [1]चोपाधिव्यतिरेकेणापि तत्रैव साध्याभावः साध्यताम्॥

न च स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वादेः संदिग्धोपाधेर्दोषत्वं न स्यात् तद्व्यतिरेकस्य संदिग्धत्वेन प्रतिपक्षासंभवादिति वाच्यम्। पाक्षिकासिद्ध्यादिनापि सत्प्रतिपक्ष-

---

नेत्यर्थः। पञ्चमं पक्षमनूद्य निराह—**न चान्धकार इति**। मीमांसकानुमाने नैयायिकोक्तश्रावणत्वादेरित्यर्थः। व्यभिचारोन्नयनपक्षेपीत्यपिपदेन न केवलमस्मत्पक्षे किं तु त्वत्पक्षेप्युपाधिर्नापेक्षितः अस्पष्टव्यभिचारस्थले एव व्यभिचारानुमानायोपाध्यपेक्षेति भावः। तथा च तत्रोपाधेरेवाभावेन न तत्र प्रतिपक्षोद्भावनं येनासिद्धिदोषः स्यादिति भावः। **तत्रैवेति**। शब्द एव। तथाच तत्र व्यभिचारः सुज्ञान इति भावः॥

षष्ठमाशङ्क्य निराह—**न च सश्याम इति**। गर्भस्थ इत्यर्थः। **संन्दिग्धेति**। साधनाव्यापकत्वसंदेहेन संदिग्धेत्यर्थः। समबलत्वाभावे

[1] त्वेचो-ट. त्वेन चो-ग. रा.

फलस्य संदेहस्य सिद्धेः । संशया[1]ङ्गत्वमेव च समबलत्वम् ॥

न च पक्षे साध्यसंदेहोऽनुमानाङ्गत्वादुपाधिं विनापि सिद्ध इति वाच्यम् । पक्षे व्यभिचारसंदेहस्यापि[2] तं विना[3]सिद्धेः । उपाध्यायत्तो व्यभिचारसंदेहस्तं विना नेति चेत्तदायत्तः साध्यसंदेहोपि तं विना नेति समम् ॥

किंच त्वयाप्यु[4]पाध्याभासो नाना[5] । असाधारणाविपर्ययः, अप्रसिद्धसाध्यविपर्ययः बाधितसाध्यविपर्ययः इत्यादिरूपेणेतिवदतोपाधेः प्रतिपक्षोन्नायकत्वं स्वीकृतम् । असाधारणा[6]प्रसिद्ध-

कथं प्रतिपक्षतेत्यत आह—संशयेति । प्रतिबन्धोत्तरमाह पक्षेव्यभिचारसंदेहस्येति । तेनैवोत्तरं वाचयित्वा सममित्याह—उपाधीति । परसंमतं चैतदित्याह—किंचत्वयैवेति । मणिकृतैवेत्यर्थः । असाधारणेति । असाधारणो विपर्ययोऽभावो यस्येति बहुव्रीहिः । एवमग्रेप्युपाधिरन्यपदार्थः । यथान्वयव्यतिरेकिणि साध्ये बाधोन्नीतान्यपक्षेतरः । अप्रसिद्धेति । केवलान्वयिनि साध्ये पक्षतरादिः । बाधितेति । वह्निरनुष्णस्तेजस्त्वादित्यत्राकृतकत्वम् । पक्षाव्यावर्तकविपर्ययो यथा क्षित्यादिकं सकर्तृकं कार्यत्वादित्यत्राणुव्यतिरिक्तत्वमित्यादिरूपेणेत्युपाधिवादान्ते वदतेत्यर्थः । स्वीकृतमित्यत्र हेतुः । असाधारण्येति । तद्ग्रन्थ-

[1] यानङ्गत्वमेवचासम–ट. रा. [2] अपिपदं न–क. ग. ट. रा. [3] नापिसि–क. ग. ट. रा. [4] यैवो–ग. ट. रा [5] नामासा–ग. रा. [6] ण्याप्र–क. ग. ट. रा.

विशेषणत्वबाधादीनामनुमानदोषत्वात् ॥

किंच वह्निरूपो हेतुः धूमरूपसाध्यव्यभिचारी तद्व्यापकार्द्रेन्धनरूपोपाध्यभाववद्वृत्तित्वादिति त्वदीयं व्यभिचारानुमानमेव पक्षे साध्याभावसाधकत्वात्प्रतिपक्षः। न ह्यत्रानुमीयमानो व्यभिचारः पक्षादन्यत्र पर्यवसानयोग्यः। यत्र महानसादौ हेतुसाध्ययोः सत्त्वं तत्र व्यभिचारस्य बाधित-

---

व्याख्यातृभिरपि सत्प्रतिपक्षो[1]न्नायकतापक्षमवलम्ब्यैव तदाभासानाहेत्यवतारितत्वाच्चेत्यपि ध्येयम् ॥

ननु—प्राचां रीत्याऽभ्युपेत्य सत्प्रतिपक्षोत्थापकत्वमुपाधेरेते आभासा निरूपिताः वस्तुतस्तु व्यभिचारोन्नायकत्वमेव मणिकृत्सिद्धान्त इत्यतो व्यभिचारानुमानमेव प्रतिपक्षरूपं पक्षादन्यत्र व्यभिचारानुमानासंभवेन पक्ष एव तदनुमानस्यावश्यकत्वादिति भावेनाह—**किं चेति**। पर्वतो धूमवान्वह्निमत्त्वादित्यत्र वह्निरूप[2]हेतुरित्यर्थः। धूमव्यभिचारी धूमाभाववद्वृत्तिरित्यर्थः। उपाधिव्यभिचारित्वादित्यस्यार्थोक्तिरुपाध्यभाववद्वृत्तित्वादिति। **साध्याभावेति**। साध्यव्यभिचारीत्यस्य साध्याभाववद्वृत्ती[3]त्यर्थत्वादित्यर्थः। तत्र च वह्नेर्वृत्तिमत्त्वं सिद्धमिति हेतुमति पक्षे साध्याभावसाधन एव पर्यवसानादिति भावः॥

ननु व्यभिचारानुमाने भवेदेवं पक्षादन्यत्र महानसादावयोगोलकादौ वा तदनुमाने तु न प्रतिपक्षत्वावकाशा[4]दित्यतो निराह—**न हीति**।

---

[1] क्षोत्थापकता—ट. ठ. ड. [2] रूपोहे—ठ. ड. [3] त्तित्वादि—ट. ड त्तित्वरूपत्वादि-ठ. [4] शा इत्येतन्नि—रा. ठ.

त्वात् । यत्र चायोगोलकादौ हेतुसाध्ययोः सत्त्वासत्त्वे तस्योपस्थितौ व्यभिचारस्य स्पष्टत्वेनोपाध्यनपेक्षणात् । अनुपस्थितौ च तत्रापर्यवसानात् ॥

तस्मात्परिशेषान्निश्चितहेतुकत्वेन सन्दिग्धसाध्यकत्वेन चोपस्थिते पक्ष एव साध्याभावं ज्ञात्वा तत्र हेतोः सत्त्वं ज्ञेयमिति व्यभिचारानुमितिः पूर्वं पक्षे साध्याभावं स्पृशन्ती कथं न प्रतिपक्षः । नचैवमुपाध्यभावस्य हेतुताहतिः[1] । उपाध्यभाववद्वृत्तित्वादिति हेतुशरीरे उपाध्यभावप्रवेशात् ॥

ननु—दूष्यानुमानस्य तर्कानुग्रहे उपाधिर्न साध्यव्यापकः । उपाधेस्तदनुग्रहे त्वनुमानस्य बाध एवेति कदा प्रतिपक्षावसर इति चेत् । यदैकत्रा[2]नुकूलतर्कानवतारस्तदेत्यवेहि । अन्यथा—प्रतिपक्षमा-

---

**सत्त्वासत्त्वे इति** । यथाक्रममन्वयः । **कथं न प्रतिपक्ष इति** । उपजीव्यत्वात्प्रतिपक्ष एव वाच्य इत्यर्थः । तथापीष्टसिद्धिर्नेत्याशङ्क्य निराह—**न चैवमिति** । सप्तमं पक्षमाशङ्कते—**नन्विति** ॥

'अनुकूलेन तर्केण सनाथे सति साधने ।
साध्यव्यापकताभङ्गात्पक्षे नोपाधिसम्भवः' ॥

इत्युक्तेरिति भावः । **तदनुग्रहे तु**—अनुकूलतर्कानुग्रहे त्वित्यर्थः । **बाध एवेति** । उपाध्यभावरूपहेतोः प्रबलत्वादिति भावः । **अवेहि** । जानीहीत्यर्थः ॥

[1] क्षतिः—ट. ग. [2] त्राप्यनु—क. ट. ग.

त्रोच्छेदः । न हि प्रतिपक्षो यावज्जीवं प्रतिपक्षः । यस्य हि यदानुकूलतर्कावतारः स तदा बाधकोऽन्यस्तु बाध्य एव भवति ॥

प्रतिपक्ष[1]प्रयोगोपि—शुद्धसाध्यव्यापके वैधी-हिंसा नाधर्मसाधनमनिषिद्धत्वादिति, अवच्छिन्न-साध्यव्यापके तु वायुः द्रव्यत्वे सति स्पार्शनत्वेन

---

अत्रावेहीत्यैकारपाठः साधुः । नत्त्वैकारपाठः । 'अव इहि' इतिस्थिते 'आद्गुण इति गुणेन भाव्यत्वात् । न च आ इहि एहि अव एहीति स्थिते 'वृद्धिरेचीति' वृद्धौ अवैहीति युक्तम् । आङ्पूर्व-स्यागमनार्थत्वेन जानीहीत्येतदर्थकत्वायोगात् । तथापि 'वृद्धिरेची' त्येतद्बाधित्वा 'एङिपररूप' मिति पररूपेण भाव्यत्वाच्च । न च एङि-पररूपमित्येतद्बाधित्वा 'एत्येधत्यूठ्स्वि' ति वृद्धिर्भविष्यतीति वाच्यम् । एतद्वृद्धिमपि बाधित्वा 'ओमाङोश्चेति' पररूपेणैव भाव्यत्वात् । 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरा' निति 'एत्येधत्यूठ्-स्वि' ति सूत्रवृत्तावेवोक्तत्वेन एत्ये[2]धत्यूठ्स्विति सूत्रस्यानन्तरं पठितं 'एङिपररूप' मित्येतद्विधिं प्रत्येव बाधकत्वेन तदनन्तरं पठितमोमा-ङोश्चेत्येतत्प्रत्यबाधकत्वात्[3] ॥

नचैवं नित्यदोषतानापत्तेरित्यतः इष्टापत्तिमुत्तरमाह—**न हि प्रति-पक्ष इति** । एवं प्रतिपक्षोन्नायकत्वं समर्थ्येदानीं तदुन्नयनप्रकारमाह—**प्रतिपक्षेति** । शुद्धसाध्यव्यापके इति कर्तव्यः अवच्छिन्नसाध्यव्यापके तु इति कर्तव्यः इत्येवकर्तव्य इति चान्वयः । **द्रव्यत्वे सतीति** ।

---

[1] क्षप्रतियोगो–ग. रा. क्षयोगो-क. [2] एतीतिसू–ठ. ड. [3] एङि पर-रूपमिति पररूपत्वान्न वृद्धिः इत्यधिकम्–ठ.

हीनोऽचाक्षुषत्वादाकाशवदिति, समवायः संबन्धत्वे सति समवेतत्वेन हीनोकृतकत्वादाकाशवदिति, [1] अवच्छिन्नसाध्यव्यापकोपि शुद्धसाध्य[2] एवोपाधिरिति, चतुर्थपक्षे वायुः स्पार्शनो न द्रव्यत्वे सत्यचाक्षुषत्वादाकाशवदित्येव कर्तव्यः। न तु सर्वत्रापि विमतं व्यापार[3] रहितं व्यापकराहितत्वादिति सामान्येन । व्यापकरहि[4] तत्वस्यानिर्धारितत्वेनासिद्धेः। वह्निमानयं [5] तद्व्याप्यवत्त्वादिति सामान्येन प्रयोगप्रसङ्गाच्च। न च द्वितीय-

---

द्रव्यत्वविशिष्टस्पार्शनत्वहीन इत्यर्थः । हेतोः पक्षधर्मताबलाद्विशिष्ट[6]-राहित्यं सिध्यत् विशेषणराहित्ये बाधाद्विशेष्यराहित्यमादाय पर्यवस्यति दृष्टान्तेप्येवमेवेति भावः । उत्तरप्रयोगेप्येवं—ध्येयम् ॥

एवं शुद्धसाध्यव्यापके पक्षधर्मावच्छिन्नसाध्यव्यापके साधनावच्छिन्नसाध्यव्यापके च प्रतिपक्षप्रकारं क्रमेण प्रदर्श्य केचित्त्वित्यादिनोक्तोपाधिलक्षणेपि तं प्रकारमाह—अवच्छिन्नेति । चतुर्थेति । स्वाभिमतोपाधिलक्षणोक्तिप्रस्तावोक्तचतुर्थपक्ष इत्यर्थः । एवकारः सर्वत्रान्वेतव्य इति भावेन तद्व्यावर्त्यमाह—न तु सर्वत्रापीति । उक्तपक्षचतुष्टयेपीत्यर्थः । व्याप्येति । साध्यरूपव्याप्येत्यर्थः । अनिर्धारितत्वेनेति । अनुकूलतर्कादिना निर्धारितत्वे सत्युपाध्यभावस्य प्रबलतया बाधकत्वेन प्रतिपक्षत्वायोगात् । अनुकूलतर्कानवतारकाल एवोपाध्य-

---

[1] दित्येव कर्तव्यः। न तु स इत्येवमस्ति-ग. रा. [2] ध्यव्यापकोपाधि-ट. [3] प्यर-ट. रा. [4] कत्वस्यानि-ग. ट. रा. [5] अयमितिन-ग. ट. रा. [6] ष्टं रा-ट ड.

तृतीययोः साध्यविशेषणवैयर्थ्यम्। शब्दो न स्पर्शवद्विशेषगुणः अयावद्द्रव्यभावित्वादित्यादाविव व्यभिचारपरिहारार्थत्वात् ॥

ननु—विपक्षे बाध[1]तर्कज्ञाने उपाधेरनवतारः [2]तदज्ञाने तत एव व्याप्तिग्रहप्रतिबन्धात् किमुपाधिनेत्युपाधिचिन्ता वृथैवेति चेन्मैवम्। तर्काज्ञानदशायामुपाधि[3]प्रसङ्गात्। न हि विपक्षे बाधकतर्कज्ञानं व्याप्तिधीहेतुः। व्यभिचारशङ्काभावे तर्कानपेक्षणात्। येन तदज्ञानं व्याप्तिधी[4]प्रतिबन्धकम् स्यात्। किंतु विपक्षे बाधकतर्काभावज्ञानम्। न च

भावस्य प्रतिपक्षेतत्युक्तत्वादिति भावः। **व्यभिचारेति**। अयावद्द्रव्यभावित्वस्यात्मविशेषगुणे ज्ञानादौ भावेन हेतोर्व्यभिचारनिरासाय स्पर्शवदिति साध्यविशेषणम्। तथा चाक्षुषत्वस्य प्रत्यक्षस्पर्शे सत्त्वेन हेतोर्व्यभिचारवारणायैव द्रव्यत्वे सतीति विशेषणम्। द्वितीयप्रयोगेपि अकृतकत्वस्य समवेते जात्यादौ सत्त्वेन व्यभिचारवारणाय संबन्धत्वे सतीति विशेषणमित्यर्थः ॥

ननु—तर्काज्ञानमेव व्याप्ति[5]प्रतिबन्धकमस्तु किमुपाधिज्ञानेनेत्यत आह—**न हीति**। **किंत्विति**। वाक्ये व्याप्तिधीप्रतिबन्धकमित्यनुकर्षः। ननु तर्काज्ञान एव तर्काभावज्ञानं भवतीति तर्काज्ञानमेव प्रतिबन्धकमित्यागतमित्युपाधिर्व्यर्थ एवेत्यत आह—**न चेति**।

[1] धकत–ग. ट. [2] रात्तद–ट. रा. [3] धेरभावात्–क. धेरवतारात्–ग. ट. रा. [4] धी हेतुः प्रति–ग. ट. रा. [5] प्तिधीप्र–ट. ड.

तर्काज्ञानदशायां तर्काभावज्ञाननियमः। अनियतसामग्रीकत्वात् ॥

तस्मादुपाधिर्विप्रतिपत्तितः प्रागव्याप्तेरुन्नायकः । अनन्तरं तु प्रतिपक्षस्य । एवं च- अनुव्याख्याने--

'साध्यव्यापकवैलोम्यमव्याप्तिः साधनस्य च' त्युपाधेरव्याप्त्यन्तर्भावस्योक्तत्वात्, प्रमाणलक्षणे तु [1]स एवोपाधिदोषोपीति प्रतिरोधान्तर्भावस्योक्तत्वाद्विरोध इति निरस्तम् । दशाभेदेनोभयसंभवात् ॥

अत एवसुधायामव्याप्तिः साधनस्य चेत्यनुव्याख्यानस्थ चशब्देन प्रतिरोधोपि संगृहीत इत्युक्तम् । एतदेवाभिप्रेत्य पद्धतौ उपाधिर्विप्रतिपत्तेः प्रागव्याप्त्युन्नायकः विप्रातिपत्युत्तरकालं [2]प्रतिपक्षोन्नायको भवतीत्युक्तम् । यत्तु प्रमाणलक्षणटीकायां स एवेति मूलस्थैवकारस्य व्यभिचार[3]वारकत्वेन व्याख्यानं तदपि

**स एवेति** । प्रतिपक्ष एवेत्यर्थः । **व्यभिचारवारकत्वेनेति** । व्यभिचारस्यैव[4]व्याप्तित्वेन प्रतिपक्ष एवोपाधिदोषो न त्वव्याप्तिरिति प्राप्तत्वा-

[1] तुपदंन–ग. ट. रा.   [2] लंतुप्र–क. ग. ट. रा.   [3] रव्यवच्छेदकत्वेन–ट.   [4] वा व्याप्ति–ट. ड.

विप्रतिपत्त्यनन्तरं तद्व्यवच्छेदकत्वपरमिति न तद्विरोधोपीति[1] ॥

इत्युपाधेर्दूषकताबीजम् ॥ १० ॥

## अथ तार्किकोक्ततृतीयज्ञाननियमभङ्गः ॥ ११ ॥

अथानुमितिकरणं ज्ञानमुच्यते ।

अत्र केचित्—धूमाग्न्योर्महानसादौ व्याप्तिं गृहीतवतः आदौ पक्षे धूमज्ञानम् । अथ व्याप्तिस्मरणम् । अनन्तरमयं धूमो वह्निव्याप्य इति

द्विरोध इति शङ्काभिप्रायः । विप्रतिपत्त्य[2]नन्तरमिति । अनुमानप्रवृत्त्युत्तरकालमव्याप्तिर्नेत्यभिप्राय इत्यर्थः ॥

इत्युपाधेर्दूषकताबीजम ॥ १० ॥

अथ तार्किकोक्ततृतीयज्ञाननियमभङ्गः ॥ ११ ॥

'अनुमा युक्तिरेवोक्ता व्याप्तिरेव तु सास्मृता' इति युक्तिपादीयानुव्याख्यानसुधोक्ति[3] विवृण्वान आह—अथेति । व्याप्तिस्वरूपज्ञानोपायतत्प्रतिबन्धकोक्त्यनन्तरमवसरप्राप्तमित्यर्थः । केचित्—तार्किकाः । पक्षधर्मे व्याप्तिविशिष्टज्ञानं तदनन्तरं विशिष्टवैशिष्ट्यज्ञानं वेति परामर्शवादे[4] मण्युक्तेराह—अयं धूमोवह्निव्याप्य इति वेत्यादि ।

[1] इतिपदंन–ग. ट. रा.    [2] त्यन्तर–ट. ड.    [3] क्तं वि–ट. ड.
[4] दम–ट. ठ. ड.

वह्निव्याप्यधूमवानयमिति वा व्याप्तिपक्षधर्मता-विशिष्टधूमविषयकं प्रतिसन्धानात्मकं लिङ्गपरामर्शसंज्ञकं तृतीयं ज्ञानं तदेवानुमितिजनकमित्याहुः । तन्न । यत्र हि लिङ्गदर्शनादेव व्याप्तिस्मृतिस्तत्रेयं[1] प्रक्रिया । यत्र तु लिङ्गदर्शनं विनैवादृष्टादिहेत्वन्तरेणाप्तवचनेन वा व्याप्तिस्मृतिस्तत्र द्वितीयमेव लिङ्गदर्शनं व्याप्तिस्मृतिसहितात्सन्निकर्षादेवोक्तप्रतिसन्धानात्मकमुदेष्यति। सोऽयमिति प्रत्यभिज्ञावदिति किं तृतीयज्ञानेन ॥

तदुक्तं सुधायाम्—नावश्यंभाविनीयं प्रक्रियेति ॥

इति तार्किकोक्ततृतीयज्ञाननियमभङ्गः ॥ ११ ॥

---

तृतीयज्ञानमिति । व्याप्तिग्रहदशायां लिङ्गदर्शनं प्रथमं पश्चात्पर्वतादौ लिङ्गदर्शनं द्वितीयं व्याप्तिविशिष्टलिङ्गज्ञानं तृतीयमिति तृतीयज्ञानमित्युक्तम् । सन्निकर्षादिति । चक्षुर्धूमादिसंबन्धादित्यर्थः । तथा च कदाचिद्द्वितीयमपि परामर्शरूपं जातमिति किं तृतीयनियमेनेत्यर्थः ॥

इति तार्किकोक्ततृतीयज्ञाननियमभङ्गः ॥ ११ ॥

---

[1] त्रैवेयं—ट. रा.

# अथ प्राभाकरोक्तज्ञानद्वयहेतुत्वभङ्गः

प्राभाकरास्तु—धूमो वह्निव्याप्य इति स्मृतिः पर्वतश्च धूमवा[1]निति ज्ञानद्वयमेवानुमितिहेतुः। ज्ञानद्वयानुमित्योर्मध्ये विशिष्टज्ञाने मानाभावात्। ज्ञानद्वयस्य [2]स्वरूपं पूर्वभावित्वं नियमश्च क्लृप्त एव। विशिष्टज्ञानवादिनापि तद्धेतुत्वेन ज्ञानद्वयस्वीकारात्। अन्यथा सिद्धिमात्रं कल्प्यम्। विशिष्टज्ञाने [3]चतुष्टयं कल्प्यमिति गौरवम्।

अथ प्राभाकरोक्तज्ञानद्वयहेतुत्वभङ्गः ॥ १२ ॥

व्याप्तिरेव तु सा स्मृतेत्येतद्व्याख्यानसुधायां तदन्यो न मन्यत इत्यादिनोक्तं प्राभाकरमततद्दूषणे विवृण्वान आह—**प्राभाकरास्त्विति**। इत्याहुरित्यन्वयः। परामर्शवादपूर्वपक्षे मण्युक्तं निष्कृष्यानुवदति—**धूम इति**। ज्ञानद्वयमेव स्मृत्यनुभवरूपज्ञानद्वयमेवेत्यर्थः। ननु ज्ञानद्वयानन्तरभाविनोऽनुमितिपूर्वभाविनो व्याप्तिविशिष्टपक्षधर्मताज्ञानस्य कुतो न हेतुत्वमित्यतस्तत्स्वरूपमेव नभोनळिनायितमित्याह—**ज्ञानद्वयेति**। ज्ञानद्वयस्य कारणत्वे गौरवं विशिष्टज्ञानस्य हेतुत्वे लाघवमित्यतो विपरीतमेव लाघवमित्याह—**ज्ञानद्वयस्येति**। **नियम इति**। अनुमित्यव्यभिचार इत्यर्थः। कथं त्रितयं क्लृप्तमित्यत आह—**विशिष्टेति**। **अनन्यथेति**। विशिष्ट-

[1] नित्यमनुभ इति—ग. ट. रा. [2] स्यहिस्व—क. ग. ट. रा. [3] ने तु च—ग. रा.

एतेन ज्ञानद्वयादप्येकस्य विशिष्टज्ञानस्य कारणत्वं लघ्विति निरस्तम् । विशिष्टज्ञानस्यैवासिद्धेः । वस्तुद्वये युगपदुपस्थिते हि लाघवगौरवचिन्तेत्याहुः ॥

तन्न । प्रत्यभिज्ञावदनुमित्यादिवच्चानुभवसिद्धस्य विशिष्टज्ञानस्य तद्धेतुभूतज्ञानद्वयेनापलापे प्रत्यभिज्ञायास्तत्तास्मृतीदन्तानुभवरूपज्ञानद्वयेनानुमितेर्वह्निस्मृतिपर्वतानुभवरूपज्ञानद्वयेन व्याप्तिज्ञानस्य तद्धेतुभूतसहचारादिज्ञानेन त्वदुक्तज्ञानद्वयस्य च तत्कारणेनापलापप्रसङ्गात् । भवति हि त्वन्मते भ्रमस्थले[2]ऽसंसर्गाग्रहसहकृतेन ग्रहणस्मरणरूपज्ञानद्वयेने[3]दं रूप्यमिति विशिष्टव्यवहारवत्प्रत्यभिज्ञास्थलेऽनुमितिस्थले चासंसर्गाग्रहसहकृतेनोक्तज्ञानद्वयेन सोयमिति व्यवहारः पर्वतो[4]ऽग्निमानित्यादिव्यवहारश्च । अन्यथा भ्रान्तिरपि स्वीकार्या ॥

---

ज्ञानरूपपरामर्शानुपक्षीणतयाऽनुमित्यंकोपक्षीणत्वमात्रं कल्प्यमित्यर्थः । एकस्य कारणत्वकल्पनं लघ्वित्यत आह— **एतेनेति** । विशिष्टज्ञानमेव नेत्येतन्निराह—**प्रत्यभिज्ञावदित्यादिना** । प्रत्यभिज्ञाया इत्यादि षष्ठ्यन्तानामपलापप्रसङ्गादित्यन्वयः । सहचारादीत्यादिपदेन व्यभिचाराभावज्ञानग्रहः । विशिष्टव्यवहारान्यथानुपपत्त्या प्रत्यभिज्ञादेरेकत्वं सिद्धमित्यत आह—**संभवति हीति** । **अन्यथेति** । विशिष्ट-

---

[1] नाव्या—ग. रा. [2] अगृहीतासंसर्गग्रहणस्म—ग. ट. रा. [3] 'द्वयेन' इत्यादिकः 'सोयमितिव्यवहा' इति पर्यन्तो ग्रन्थः नास्ति—ग. रा. [4] तोवह्निमा—रा.

किञ्च व्याप्तिज्ञानं त्वन्मते सामान्यप्रत्यासत्तेरभावात्सन्निकृष्टधूमव्यक्तिमात्रविषय[1]कम् । पक्षधर्मताज्ञानं त्वगृहीतव्याप्तिकधूमविषय[2]कम् । एवं च किञ्चित्प्रमेयं वह्निव्याप्यं पर्वतश्च प्रमेयवानिति ज्ञानद्वयमिव कश्चिद्धूमो व्याप्यः पर्वतश्च धूमवानिति विशिकलितं परस्परवार्तानभिज्ञं ज्ञानद्वयमपि नानुमितिहेतुः ॥

न च प्रमेयत्वं वह्निव्याप्यतावच्छेदकत्वेन न गृहीतं धूमत्वं तु तदवच्छेदकत्वेन गृहीतमिति वैषम्यमिति वाच्यम् । व्याप्यतावच्छेदकत्वं हि व्याप्यत्वेन सह व्याप्तिः । अन्यस्य प्रकृतानुप-

---

व्यवहारबलेन विशेषणविशेष्यतत्सम्बन्धविषयकरूपविशिष्टज्ञानाङ्गीकारे विशिष्टविषयकैकज्ञानरूपा भ्रान्तिः स्वीकार्येत्यर्थः ॥

ननु संवादबलात्प्रत्यभिज्ञादौ विशिष्टैकज्ञानत्वमुपेयम् । न तु भ्रमस्थल इति वदन्तं प्रत्याह—किञ्चेति । यद्वा विशिष्टज्ञानास्तित्वं समर्थ्य पराभिप्रेत[3]ज्ञानद्वयहेतुत्वं निराह—किञ्चेति । अथवा पूर्वं पर्वतादिनिष्ठधूमव्यक्तिविशेषणत्वेन व्याप्तेरग्रहादन्यत्र गृहीतव्याप्तिविशिष्टज्ञानमन्यत्र कथमुत्पत्तुमर्हति[4]त्यतस्तर्हि ज्ञानद्वयस्यापि हेतुतानापत्तिरित्याह—किञ्चेति ॥

**सन्निकृष्टधूमेति** । महानसीयधूमव्यक्तिमात्रेत्यर्थः । **अन्यस्येति** । अन्यूनानधिकदेशवृत्तित्वादेरित्यर्थः । सर्वधूमव्यक्तिनिष्ठव्याप्ते-

---

[1] यम्–क. ग. रा. [2] यम्–क. ग. ट. रा. [3] तं ज्ञा–ठ. भिमत. ज्ञा–ड. [4] तीत्य–ठ. ड.

योगात्। न च व्याप्तिग्रहणकाले धूमस्याग्निनेव धूमत्वस्य धूमनिष्ठया वह्निव्याप्तया सह व्याप्तिर्गृहीता। एवं च पक्षधर्मे धूमे व्याप्तिग्रहप्रस्तावोक्तरीत्या व्याप्तिग्रहसामग्रीसत्त्वेपि व्याप्तिं न पश्यसि, पश्यसि तु व्याप्तिधूमत्वयोर्व्याप्तिग्रहसामग्रीविरहे[1] व्याप्तिमिति नूनं ते[2] तु चेरविलोचने॥

एतदेवाभिप्रेत्योक्तं सुधायाम्। न खलु विशकलिते व्याप्तिस्मृतिपक्षधर्मताज्ञाने भावयतोऽनुमितिरिति। विशकलिते भिन्नविषय इत्यर्थः॥

---

रेकत्वे मानाभावेन नानात्वेऽवश्यंभाविनि धूमत्वस्य तदनधिकदेशवृत्तित्वाभावा[3]दवच्छित्तिप्रत्ययजनकत्वादेर्जनकत्वस्य व्याप्तिगर्भतयाऽऽत्माश्रयापाताच्चेति भावः। यद्भावच्छेदकत्वं ह्यनुमित्युपयोगितयाभ्युपेयम्। तच्च धूमत्वादेर्व्याप्तिव्याप्यत्वरूपत्वे धूमदर्शने सति व्याप्तिस्मृतिद्वाराऽनुमित्युपयोगि। न त्व[4]धिकदेशवृत्तित्वादि[5]। तज्ज्ञानेन व्याप्तिस्मृतौ बीजाभावादित्यर्थः। **उक्तरीत्या व्याप्तिग्रहसामग्रीति।** सादृश्यादिरूपसामग्रीसत्त्वेपीत्यर्थः। चतुरे कुशले इत्युपहासः। **उक्तमिति।** व्याप्तिरेव तु सा स्मृतत्येतद्व्याख्यावसरे युक्तिपादे॥

[1] हेपि व्या–**ट. रा.** [2] ते रुचिरे वि–**क.** ते चतुरे वि–**ग. ट. रा.**
[3] वात्तद–**ट.** [4] त्वनधिक–**ड.** [5] दीतरतज्ज्ञा–**ठ.**

किंच विशिष्टज्ञानाभावे व्याप्तिज्ञानस्य [1] करणत्वं न स्यात् । निर्व्यापारत्वात् । न च तर्को व्यापारः। तस्यासार्वत्रिकत्वात्। नापि पक्षधर्मताज्ञानं व्यापारः । तस्य व्याप्तिज्ञाना[2]जन्यत्वात् । विशिष्टज्ञानस्य तु तज्जन्यत्वात् ॥

एतदप्युक्तं विशकलित इति । परस्परं जन्यजनकभावरहिते इत्यर्थः ॥

अपि च संशयानन्तरभाविविशेषदर्शनजन्यप्रत्यक्षस्थळे करचरणादौ पुरुषत्वव्याप्तिस्मृतिः पक्षधर्मताज्ञानं चास्तीति त्वन्मतेनुमितिः स्यात् । [3]अस्मन्मते तु विशिष्टज्ञानाभावादनुमितिर्युक्ता । एवं च त्वन्मते प्रत्यक्षसामग्र्या अत्राक्लृप्त[4]सामग्रीतो बलवत्त्वं च न कल्प्यम् ॥

त्वदङ्गीकृतव्याप्तिज्ञानकरणत्वबलादपि विशिष्टज्ञानं मध्ये कारणत्वेनोपेयमित्याह— **किंच विशिष्टज्ञानाभाव इति । असार्वत्रिकत्वादिति** । संशयस्थल एव तर्कावतारस्योक्तत्वादिति भावः । **व्याप्तिज्ञानाजन्यत्वादिति** । तज्जन्यजनकत्वे सति तज्जन्यस्यैवव्यापारत्वादिति भावः । अन्वयव्यभिचाराच्च न ज्ञानद्वयस्य हेतुत्वम् । विशिष्टज्ञानस्य हेतुत्वे तु न व्यभिचार इति भावेनाह— **अपि चेति** । विशिष्टज्ञानहेतुत्वाङ्गीकारेऽन्यदप्यनुकूलितमित्याह— **एवं चेति** ।

[1] कार—**क. ट.** [2] न ज—**ग. ट.** [3] मन्म—**क. ग. ट. रा.** [4] प्तम नुमिति सा—**क. ग.** अन्यत्राक्लृप्तमनु—**ट. रा.**

एतदप्युक्तं—विशकलित इति। उक्तस्थलेऽनुमितिं विनापि स्थिते इत्यर्थः ॥

किंच त्वदुक्ते ज्ञानद्वये सत्यपि पक्षनिष्ठधूमो[1] वह्निव्याप्तो नेति विपर्यये संशये वा सत्यनुमित्यदर्शनात्तयोरनुमितिप्रतिबन्धकता तावद्वक्तव्या। ज्ञानस्य च ज्ञानप्रतिबन्धकत्वं विरोधिविषयत्वेनैव। तच्च द्वेधा। साक्षादनुमितिविषयविरोधिविषयत्वेन वा, तज्जनकज्ञानविषयविरोधिविषयत्वेन वा। तत्राद्यः प्रकृते न संभवति। व्याप्यभेदभ्रमस्य बाधवदनुमितिग्राह्यवह्न्यभावाविषय[2]त्वात्। तथाच व्यभिचारज्ञानस्यानुमितिहेतुव्याप्ति[3]विघटनेनेव व्याप्यभेदभ्रमस्याप्यनुमितिहेतुव्याप्याभेदज्ञानविघटनेनैवानुमितिप्रतिबन्धकत्वं वाच्यमिति सिद्धं व्याप्याभेदज्ञानस्यानुमितिहेतुत्वम् ॥

**स्थिते इत्यर्थ इति।** तथा च तादृशे व्याप्तिस्मृतिपक्षधर्मताज्ञाने भावयतो नानुमितिरिति समग्रवाक्यार्थ इति भावः ॥

व्याप्यभेदविषयकविपर्ययादेः प्रतिबन्धकत्वान्यथानुपपत्त्यापि विशिष्टज्ञानहेतुत्वासिद्धिरि[4]त्याह— **किंच त्वदुक्ते इति। ज्ञानस्य चेति।** व्याप्यभेदगोचरविपर्ययादिरूपज्ञानस्य चेत्यर्थः। **व्याप्यभेदेति।** व्याप्ये धूमे व्याप्यो नेति व्याप्यो वा न वेतीति व्याप्यभेदभ्रमस्येत्यर्थः।

[1] धर्मो वह्निव्याप्यो ने–**ग. ट. रा.** [2] यकत्वा–**ट. रा.** [3] ज्ञानपदमधिकम्–**ट. रा.** [4] त्यत आ–**ट. ठ. ड.**

यदि च विरोध्यविषयकमपि ज्ञानं मण्यादिव-द्विरोधि तर्ह्युपाधिना[1] व्यभिचारो नोन्नीयेत । किंतु मण्याद्यभावो दाह इव उपाधिज्ञानाभाव एवानुमितौ हेतुः स्यात् ॥

न चानुमितिसामग्र्या बलवत्त्वाज्ज्ञानद्वये सत्यनुमितिरेवोत्पद्य[2]ते । न तु प्रत्यक्षो व्याप्य-भेदभ्रम इति वाच्यम् । तस्या बलवत्त्वासंमतेः ॥

किंच यत्र त्वदुक्तज्ञानद्वयानन्तरं भेदभ्रमस्त-त्रैवमस्तु । यत्र[3] धूमो वह्निव्याप्यः पर्वतीयधूमश्च वह्न्यव्याप्य इति[4] पक्षधर्मताज्ञानमेव भेदविषयं त्वन्मते व्याप्यव्याप्ययोर्भिन्न[5]विषयत्वेनाविरोधात्

प्रका[6]रान्तरेण प्रतिबन्धकत्वचोद्यमनूद्य निराह—**यदि चेति** ॥

ननु—व्याप्यभेदभ्रम एव नास्ति यस्य प्रतिबन्धकत्वबलेन विशिष्टज्ञानहेतुत्वसिद्धिरित्याशङ्कां निराह—**न चानुमितीति** ॥

अभ्युपेत्यापि बलवत्त्वमनुमितिसामग्र्यभावस्थळे विपर्ययादि-बलाद्विशिष्टज्ञानहेतुत्वसिद्धिरित्याह—**किंच यत्रेति । एवमस्त्विति ।** अनुमितिसामग्रीबलवत्त्वेन व्याप्यभेदभ्रमानुत्पादोऽस्त्वित्यर्थः । **धूम इति ।** व्याप्तिग्रहणस्थलीय इत्यर्थः । विरोधात्कथमेवं भ्रम इत्यत आह—**त्वन्मत इति ।** सामान्यप्रत्यासत्तेरनङ्गीकारेण पर्वतनिष्ठधूमे व्याप्तेरग्रहेण तत्र व्याप्ये[7] भेदभ्रमे बाधकाभावात् ॥

---

[1] तर्हि-**ट. रा.** [2] द्येत-**ग. रा.** [3] त्रसु धू-**रा. क.** [4] ज्ञानपदम-धिकम्-**रा.** [5] न्न निष्ठत्वेना-**ट. रा.** [6] प्रमाणान्त-**ड.** [7] प्यभे-**ट. ड.**

तत्र भेदज्ञानात्पूर्वं अनुमितिसामग्र्यभावेन तया भेदभ्रमस्य [1] न प्रतिबन्धो युक्तः ॥

न च धूमत्वज्ञानरूपस्य वा धूमो वह्निव्याप्य इति ज्ञानरूपस्य वा विशेषदर्शनस्य सत्त्वान्न व्याप्यभेदभ्रम इति वाच्यम्। स्वरूपेण धूमत्वज्ञानस्याविरोधित्वात्। व्याप्तिव्याप्यत्वेन ज्ञानस्य तु विरोधित्वे [2] तस्यायं धूमवानिति पक्षधर्मताज्ञानेऽभावात्। धूमो वह्निव्याप्य इति ज्ञानस्य च त्वन्मते भिन्नविषयकत्वेनाप्रतिबन्धकत्वात्। न च भिन्नविषयकत्वेपि समानप्रकारकत्वमात्रेण प्रतिबन्धकत्वम्। प्रमेयं घटवदिति ज्ञानेन प्रमेये गृहे घटो नेति धीप्रतिबन्धापातात् ॥

एतदप्युक्तं विशकलित इति [3]। व्याप्य [4] भ्रमेण प्रतिबद्ध इत्यर्थः ॥

सामग्र्यभावेपि विशेषदर्शनमेव भ्रमप्रतिबन्धकमित्याशङ्क्य निराह—**न च धूमत्वेति**। [5] **समानप्रकारकत्वेति**। धूमो वह्निव्याप्य इति ज्ञानस्य पर्वतीयधूमश्च व्याप्यो नेत्यस्य च धूमत्वप्रकारकत्वात्प्रतिबध्यप्रतिबन्धकभाव इत्यर्थः। मात्रपदेन च समानविशेष्यकत्वं व्यावर्त्यते। **इत्यर्थ इति**। समग्रवाक्यार्थः पूर्ववद्द्रष्टव्यः। क्वचिद्विशिष्टज्ञानस्य

[1] न पदं युक्तपदात्प्रागस्ति क. ग. ट. रा.  [2] त्वेपित—ग. ट. रा.
[3] ते इति—ग. ट. रा.  [4] भेदपदमधिकम्—क. ग. ट. रा.  [5] धूमत्वज्ञानरूपस्येत्यर्थः इत्यधिकम्—ठ.

अपि च यत्र धूमदर्शनं विनापि शब्दादिना व्याप्तिस्मृतिमतः पुंसः स्मृतव्याप्तिसन्निकृष्टधूमत्व[1] योर्वैशिष्ट्यं प्रत्यक्षज्ञानेन वह्निव्याप्यधूमवानयमिति शाब्दज्ञानेन च युगपदेव गृह्यते तत्राप्यनुमितिस्तावद्दृश्यते । तत्र च व्याप्यत्वप्रकारकपक्षधर्मताज्ञानत्वेनैव हेतुता वाच्या । लाघवात् । व्याप्यतावच्छेदकत्वस्य व्याप्यतागर्भितत्वेन व्याप्यताया आवश्यकत्वाच्च । न तु व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन । गौरवात् । अनावश्यकत्वाच्च ॥

हेतुतायाः क्लृप्तत्वादन्यत्रापि तथेतिभावेन तस्य क्वचिद्धेतुत्वमाह — **अपि चेति** । ज्ञानद्वयरूपानुमितिसामग्री पराभिमता नेति वक्तुं धूमदर्शनं विनापीत्युक्तम् । **स्मृतेति** । स्मृतव्याप्तिश्च सन्निकृष्टधूमश्च तयोरित्यर्थः ॥

ननु तत्राप्यनुमितिदशायां तावता विशिष्टज्ञानत्वेन न हेतुता किंतु व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेनैव । तथाच ज्ञानद्वयस्थल इवास्मदभिमतकारणतावच्छेदकं तत्राप्यक्षतमेवेत्यत आह— **तत्र चेति** । भवत्पक्षेपि व्याप्यत्वज्ञानमावश्यकमित्याह— **व्याप्यतेति** । अवच्छेदकत्वं हि व्याप्यत्वेनेह व्याप्तिरन्यस्यानुपयोगादित्युक्तदिशा व्याप्यतागर्भितत्वेनेत्यर्थः । एवकारव्यावर्त्यमाह — **नत्विति** । **अनावश्यकत्वाच्चेति** । यथा [2] व्याप्यतावच्छेदकत्वज्ञाने व्याप्यत्वज्ञानमाव-

[1] मयोर्वै ग. ट. रा. [2] यथा अवच्छे- ठ. ड.

ननु व्याप्तावपि व्याप्तिरहितावृत्तित्वरूपं व्याप्यतावच्छेदकत्वमस्तीति व्याप्यतावच्छेदक[1] त्वप्रकारकत्वं सामान्यं व्याप्यताप्रकारकत्वं तु विशेषः न च सामान्यस्य प्रयोजकत्वसम्भवे विशेषस्य तद्युक्तमिति चेन्न। व्याप्तौ तु [2] त्वदुक्तस्य व्याप्यतावच्छेदकत्वस्य सत्त्वेपि व्याप्तित्वेन[3] ज्ञानमात्रेणानुमितिदर्शनेन व्याप्यतावच्छेदकत्वेन व्याप्तिज्ञानस्यानुमित्यहेतुत्वात्। त्वयो[4] पाधिकधर्म[5] रूपस्य व्यापारत्वस्य सामान्यत्वेपि तद्विहाय लाघवेन जातिरूपकृतित्वस्यैवाख्यातशक्यतावच्छेदकत्वस्वीकाराच्च ॥

एतदप्युक्तं सुधायाम्—यदा तु गृहीतव्या-

---

श्यकम् न तथा व्याप्यत्वज्ञाने व्याप्यतावच्छेदकप्रकारकत्व[6]ज्ञानमावश्यकम्। धूमत्वेन धूमस्वरूपविशेष्यकव्याप्यत्वप्रकारकज्ञानविषये तदनुप्रवेशाभावादिति भावः। तदनुप्रवेशमाशङ्कते—**नन्विति**। व्याप्तिरहिते पाषाणादावबृत्तित्वमित्यर्थः। **सामान्यमिति**। व्याप्यत्वप्रकारकज्ञानविषये व्याप्तावपि सत्त्वादिति भावः। **विशेष इति**। अयं[7] धूमवानित्यादिव्याप्यतावच्छेदकधूमत्वप्रकारके ज्ञाने व्याप्यत्वप्रकारकत्वाभावादिति भावः। सामान्यविशेषभावे सत्यपि लाघवाद्विशेषस्यैव प्रयोजकत्वं वाच्यमिति भावेनाह—**त्वयेति**। **एतदप्युक्तमिति**। युक्तिपाद एवापिचेत्यादिनोक्तंप्रमेयमुक्तमित्यर्थः॥

[1] कप्र–**क. ट. रा.** [2] तु इतिन–**ग. ट. रा.** [3] प्यत्वेन–**क.** सत्वेन–**रा.** [4] यासौ–**क. ग.** [5] मस्य व्याप्यत्वस्य–**ग. रा.** [6] कज्ञानत्वमित्यस्ति–**ठ.** ज्ञानपदं–**न. ट.** [7] यंचधू–**ड.**

प्तेर्विनापि लिङ्गदर्शनाद्व[1]ह्न्यादिनैव व्याप्तिस्मृतिरिति ॥

ननु यत्र लिङ्गपक्षादिकमसन्निकृष्टमतीन्द्रियं वा तत्र कथं परामर्शः, प्रत्यक्षस्यासम्भवात् आनुमानिकत्वे चानवस्थानादिति चेत्तवापि कथं तत्र पक्षताज्ञानम् । कथं च स पर्वतो वह्निव्याप्यधूमवान् परमाणुर्नित्यत्वव्याप्यनिरवयवद्रव्यत्ववानिति ज्ञानं तथा व्यवहारश्च ॥

ननु तत्र कविकाव्या[2]दिनिर्माणहेतुभूतज्ञान-

---

विशिष्टज्ञानहेतुतावादे क्वचित्सामग्र्यभावेन तदनुत्पत्तिबाधकमाशङ्क्य प्रतिबन्द्योत्तरयति—**नन्वित्यादिना** । **तवापीति** । ज्ञानद्वयहेतुतावादिनोपीत्यर्थः । न्यायमताशयेनाह—**कथं चेति** । यद्वा तन्मतेपि क्वचिद्विशिष्टज्ञानसत्त्वस्योक्तदिशाङ्गीकारात्तदाशयेनेयमुक्तिः । **परमाणुरिति** । कथंचेत्यनुकर्षः । **तथेति** । व्याप्यधूमवानित्यादिव्यवहारश्चेत्यर्थः । तादृशज्ञानसाध्यत्वाद्व्यवहारस्येति भावः । मण्युक्तदिशा परमुखेनोत्तरं वाचयित्वा सममित्याह—**नन्विति** । कवेः काव्यनिर्माणहेतुभूतज्ञानं यथा मानसं तथा मानान्तरोपनीते पर्वते मानान्तरोपनीतधूमसंसर्गरूपपक्षधर्मताज्ञानं मानसं व्याप्तिस्मरणधूमवत्त्वज्ञानाभ्यां सहकृतेन मनसा च व्याप्यधूमवानितिज्ञानं नित्यत्वस्मृतिमतो निरवयवत्वोपनायकेन तदुपनये च परमाणूपनायकेन परमाणौ चोपनीते मनसा नित्यत्वव्याप्यनिरवयवत्ववानितिज्ञानमस्त्वित्यर्थः ॥

[1] ह्वचनादिनै—**रा.** [2] आदिपदं न—**ग. ट. रा.**

न्मानसममेव पक्षधर्मताज्ञानम्। यद्वानुमानिकत्वेपि क्वचित् स्मृतौ क्वचिच्छब्दे क्वचित्प्रत्यक्षे पर्यवसानान्नानवस्थेति चेत्समं परामर्शेपि। तस्माद्विशिष्टज्ञानमेवानुमितिहेतुः॥

इति प्राभाकरोक्तज्ञानद्वयहेतुत्वभङ्गः॥ १२॥

---

नन्वेवं मनसो बहिरर्थप्रमाहेतुत्वे [1]तदुपनायकज्ञानस्य प्रमाणान्तरत्वं स्यात्। यदसाधारणं कारणमासाद्य मनो बहिर्गोचरप्रमां जनयति तत्प्रमाणान्तरमिति नियमादिति चेन्न। इन्द्रियादेः सन्निकर्षादिवदुप[2]नयस्य नियतव्यापाराभावेन प्रमायामकारणत्वादित्याहुः। अनुमानेन वास्तु पक्षधर्मताज्ञानादि। तावता नानवस्था। तज्जनकानुमाने पक्षधर्मतादिज्ञानस्य स्मृतिरूपत्वेन [3]वाप्तवाक्यरूपशब्दजन्यत्वेन वा प्रत्यक्षजन्यत्वेन वोपपत्तेरित्याह—**आनुमानिकत्वेपीति**। पक्षधर्मतादिज्ञानस्येत्यनुकर्षः। अत एवपद्धतौ न च[4] तथाप्यनुमानस्य व्याप्त्यपेक्षयाऽनवस्था। अन्ततः प्रत्यक्षागममूलत्वादित्युक्तमिति भावः॥

इति प्राभाकरोक्तज्ञानद्वयहेतुत्वभङ्गः॥ १२॥

---

[1] तदिति नास्ति—ट. ठ. ड. [2] नायकस्य—ड. [3] वा इति न—ड.
[4] चेतस्याप्य—ठ. नच तस्याप्य—ट. ड.

## अथ मण्युक्तपरामर्शप्रक्रियाभङ्गः ॥ १३ ॥

मणौ त्वयमालोको [1]धूमो वा उभयथापि वह्निव्याप्य इति ज्ञानात्तावदनुमितिर्दृश्यते । तत्र [2]व्याप्यतावच्छेदकप्रकारकं पक्षधर्मताज्ञानं न संभवति । अवच्छेदकयोर्धूमत्वालोकत्वयोरनिश्चयात् । निश्चितस्य [3]तदन्यान्यत्वस्य गौरवेण व्यभिचारावारकविशेषणत्वेन चानवच्छेदकत्वात् । इत्युक्तम् । तन्न । व्याप्यतावच्छेदकपदेन व्याप्तिनियतधर्मस्य विवक्षितत्वात् । अन्यतरत्वं च गौरवादौ सत्यपि व्याप्तिनैयत्यरूपस्य व्याप्तच्वच्छेदकत्वस्यानपायात् । न हि गुर्वित्येतावता

## अथ मण्युक्तपरामर्शप्रक्रियाभङ्गः ॥ १३ ॥

परामर्शवादसिद्धान्तोक्तप्राभाकरखण्डनप्रकारमनुवदति—**मणौ-त्विति** । इत्युक्तमित्यन्वयः । **तदन्यान्यत्वस्येति** । धूमालोकाभ्यां यदन्यत् तदन्यत्वस्येत्यर्थः । **व्यभिचारेति** । धूमालोकान्यान्यवत्त्वादित्यत्र धूमवत्त्वादालोकवत्त्वादित्यकैकहेतूक्तौ व्यभिचाराभावाद्व्यभि-

[1] वा इत्यधिकम्-**ग. ट. रा.** [2] त्रचव्या- **क. ट. रा.** [3] स्य चत- **क. रा.**

नियतमप्यनियतं भवति । नीलधूमादौ धूमान्या-[1]न्यादौ च वैयर्थ्यमेव दोषः । प्रकृते तु संदिग्धा-सिद्धिवारकत्वान्न वैयर्थ्यमपि ॥

किञ्चान्यतरत्वज्ञानस्य त्वयापि व्याप्तिग्राहक-प्रत्यक्षसहकारित्वं स्वीकृतम् । सहकारित्वं च न भूयोदर्शनादिवत्स्वरूपेण । किं त्वन्यतरत्वस्य व्याप्तिव्याप्यतया तद्दर्शनस्य विशेषदर्शनत्वे-नैवेति कथमन्यतरत्वस्य व्याप्तिव्याप्यत्वाग्रहः ॥

---

चारवारकस्यैव सार्थक्यादिति भावः । गुरुधर्मतया व्याप्तिग्रहानुपयुक्त-विशेषणत्वेन चेत्यर्थ इत्यप्याहुः । अन्यान्यत्व इत्यस्यार्थानुवादोऽन्य-तरत्वे चेति ॥

नन्वेवं पर्वतोऽग्निमान्नीलधूमवत्त्वाद्धूमान्यान्यवत्त्वादित्यादिप्रयो-गोऽपि साधुः स्यात् । नीलधूमत्वादेर्गुरुत्वेऽपि व्याप्तिनियतत्वेन व्याप्य-तावच्छेदकत्वानपायादित्यत आह—**नीलेति । संदिग्धेति ।** धूमवत्त्वा-दिति वा आलोकवत्त्वादिति वोक्तावन्यतरसत्त्वस्यानिश्चयादिति भावः । **त्वयापीति ।** गुरोरप्यन्यान्यत्वज्ञानस्य विशेषदर्शनत्वेन प्रत्यक्षसहकारि-त्वादन्यान्यत्वज्ञानं तत्र व्याप्यताज्ञानोपक्षीणमिति मणावुक्तेरिति भावः ॥

अत एव मणावेतदरुच्यापिचेत्यादिना प्रागस्मदुक्तपक्ष **एव** किंच वह्निव्याप्यवानयमिति शाब्दज्ञान इत्यादिनोपन्यस्त इति ध्येयम् । यदपि संशयस्थलेऽन्यान्यत्वनिश्चयमुपेत्य व्याप्यत्वज्ञानोपक्षीणत्ववचनम् ।

---

[1] न्यत्वादौ—क. ग. ट. रा.

केचित्तु — धूम[1]त्वालोकत्वाभ्यां सन्दिग्धे वस्तुनि धूमालोकान्येभ्योन्यत्वमेव दुर्ग्रहम् । न हि साधनाश्रययोरन्यतरत्वमित्यादौ साधनाश्रययोः साधनत्वाश्रयत्वा[2]ज्ञाने तदन्येभ्योन्यत्वं गृह्यत इत्याहुः । [3]तस्मान्न मण्युक्तं युक्तम् ॥

इति मण्युक्तपरामर्शप्रक्रियाभङ्गः ॥ १३ ॥

## अथ व्यापकत्वपरामर्शस्यानुमितिहेतुत्वभङ्गः ॥

ननु—हेतुसमानाधिकरणात्यन्ताभावा[4]प्रतियोगिसाध्यसामानाधिकरण्यं व्याप्यत्वम् । तच्च व्यापकत्वगर्भितमिति लाघवात्पर्वतवृत्तिधूमव्यापको वह्निरिति व्यापकत्वपरामर्श एवानुमितिहेतुः ।

---

तदप्ययुक्तमित्याह — केचित्त्विति । प्रतियोगितावच्छेदकप्रकारेण प्रतियोगिनोनिश्चये तदन्योन्याभावस्य दुर्ज्ञानत्वादिति भावः ॥

इति मण्युक्तपरामर्शहेतुत्वप्रक्रियाभङ्गः ॥ १३ ॥

## अथ व्यापकत्वपरामर्शस्यानुमितिहेतुत्वभङ्गः ॥ १४ ॥

मणौ परामर्शवादान्ते "अन्ये त्वि" त्यादिनोपन्यस्तमेकदेशिमतमप्याशङ्क्य निराह—नन्वित्यादिना । व्यापकत्वेति । उक्त-

[1] मालो–रा. [2] त्वानिश्चये-क. [3] तस्मादित्यादि नास्ति–ग. ट. [4] वप्र–ग. ट. रा.

न तु वह्निव्याप्यधूमवान्पर्वत इति व्याप्यत्व-परामर्श इति चेन्न । मन्मते साध्यरहितावृत्तित्व-रूपाया अन्यथानुपपत्तिरूपाया वा व्याप्तेर्व्यापक-त्वागर्भितत्वेन गौरवाभावात् ॥

यद्यपि साध्यरहितावृत्तित्वज्ञानं साध्यं विना-नुपपत्तिज्ञानं [2]वा साध्यत्वरूपव्यापकत्वेन ज्ञानं विनानुपपन्नम् । तथापि धूमजातीयस्य वह्निजाती-यरहितावृत्तित्वज्ञानं च [3] वह्निजातीयं विनानुप-पत्तिज्ञानं च वह्नित्वेन वह्निज्ञानमेवापेक्षते । न तु व्यापकत्वेनेति न गौरवम् ॥

इति व्यापकत्वपरामर्शस्यानुमितिहेतुत्वभङ्गः ॥ १४ अ ॥

## अथ लिङ्गपरामर्शस्य करणत्वम् ॥ १४ आ ॥

### लिङ्गज्ञानमेव करणम् । न तु लिङ्गम् ।

रूपाभावाप्रतियोगित्वस्य व्यापकत्वात्तद्गर्भितमित्यर्थः । **साध्यरहितेति** । साध्यरहितेऽवृत्तित्वमित्यर्थः । **अन्यथेति** । साध्येन विनासंभवरूपाया वेत्यर्थः ॥

इति व्यापकत्वपरामर्शस्यानुमितिहेतुत्वभङ्गः ॥ १४ ॥

## अथ लिङ्गपरामर्शस्य करणत्वम् ॥ १५ ॥

यत्तु मणौ लिङ्गकरणतावादे लिङ्गपरामर्शः करणं न तु परा-मृश्यमानं लिङ्गमित्युक्तम् । तदस्माकमनुमतमेव । किं तु परामर्श इत्यत्र तृतीयज्ञानत्वमेव नाभिमतमिति भावेनाह—**लिङ्गज्ञानमेवेति** । लिङ्ग-

[1] त्व–**ग. रा.**　[2] नं च साध्यज्ञानं विनानुप–**ग. ट. रा.**　[3] चपदं न–**ट. रा.**

**स तदा वह्निमान् तदा धूमवत्त्वादित्यादौ धूमाभावेऽपि तज्ज्ञानेनैवानुमितिदर्शनात् । न च तत्र[1] धूमध्वंसादिकं लिङ्गान्तरमस्तीति वाच्यम् । तस्यापरामर्शात् । अपरामृश्यमानस्य हेतुत्वे च मानाभावात् । अत एवोक्तं सुधायाम्—'न धूमादिकमेवानुमानं किं नाम तज्ज्ञान'मिति ॥**

इति लिङ्गपरामर्शस्य करणत्वम् ॥ १४ आ ॥

---

पदेन व्याप्यमुच्यते । प्रत्यक्षेणानुमानेन शब्देन वा जातं यल्लिङ्गज्ञानं तदित्यर्थः । व्याप्तिविशिष्टलिङ्गज्ञानमेवेत्यर्थः । **स इति** । पर्वतादिः । **अत एवोक्तं सुधायामिति** । प्रत्यक्षवच्च प्रामाण्यमित्येतद्व्याख्यानसुधायामित्यर्थः ॥

उपलक्षणमेतत् । अन्यथाख्यातिवादसिद्धान्ते लिङ्गज्ञानस्य करणतयाभ्युपगतत्वादिति[2] सुधोक्तिरपि ग्राह्या । यत्तु पद्धतौ लिङ्गस्य सम्यग्ज्ञानं वा सम्यग्ज्ञातं वा लिङ्गमित्युक्तम् । तत्त्वभ्युपगमवादेन वा लिङ्गसत्त्वस्थलाभिप्रायेण वा नेयम् । वस्तुतस्तु व्याप्तिप्रकारमनुसृत्यानुमितिं जनयतीत्यत्रैव तात्पर्यादना[3]स्थयोक्तावपि सुधानुरोधा[4]ल्लिङ्गज्ञान[5] एव तात्पर्यमिति भावः । अस्मिन्पक्षे क्रियायोगव्यवच्छिन्नत्वमेव करणत्वं न सव्यापारत्वमित्येके । लिङ्गज्ञानं करणं तज्जन्याव्याप्तिस्मृतिर्व्यापारः । शाब्दज्ञाने शक्तिस्मृतिवदित्यन्ये । मन एव

[1] तथा धू-ग. ट. रा. [2] ति युक्तिर-ड. [3] नवस्थयोभयोक्ता-ट. [4] धोलिं-ट. धेन लिं-ठ. [5] न ए-ट.

## अथ तर्कस्यानुमानान्तर्भावः ॥ १५ ॥

अनुमानं द्विविधं साधनानुमानं दूषणानुमानं चेति । तत्राद्यमद्रिरग्निमान् धूमवत्त्वादित्यादि । द्वितीयमपि द्वेधा [1]दुष्टत्वप्रमितिसाधनम् तर्कश्चेति । तत्राद्यं नेदं स्वसाध्यसाधकम् असिद्धत्वादित्यादि । द्वितीयं यदि निरग्निकः स्यात् तर्हि निर्धूमः स्यादित्यादि । अस्य दूषणानुमानत्वं च परोक्तनिरग्निकत्वादिप्रतिक्षेपरूपत्वात् ॥

करणं व्याप्यज्ञानं व्यापारः; न चानुमितेर्मानसप्रत्यक्षत्वापत्तिः संस्कारव्यापारकत्व एव तथात्वात् व्यापारप्राधान्यविवक्षया लिङ्गज्ञानं करणमित्युक्तिरित्यपरे ॥

इति लिङ्गपरामर्शस्य करणत्वम् ॥ १५ ॥

## अथ तर्कस्यानुमानान्तर्भावः ॥ १६ ॥

"तर्काप्रतिष्ठानादप्यन्यथानुमेयमि" ति ब्रह्मसूत्रे सूचितं तर्कस्यानुमाना[2]न्तर्भावं वक्तुं पुनर्द्विविधं साधनानुमानं दूषणानुमानं चेत्यादिपद्धत्युक्तं विवृण्वान आह—**अनुमानमिति** । ननु परोक्तनिरासकस्यैव दूषणानुमानत्वेन तर्कस्य कथं तथात्वमित्यत आह—**अस्येति** । स्वमते तर्कस्वरूपमग्रे लिलक्षयिषुः परोक्ततर्कलक्षणान्यनूद्य

[1] द्विप्र—क. ग. ट. रा.  [2] न प्रमाणान्त—ट. ठ. ड.

तत्र केचित्—व्याप्यारोपेण व्यापकारोपः तर्कः। स च प्रमाणानुग्राहक एव। न तु प्रमाणमित्याहुः। तन्न। बाष्पे धूमभ्रमजन्यभ्रमरूपानुमितावतिव्याप्तेः॥

नापि व्याप्यारोपे व्यापकप्रसञ्जनं तर्कः। प्रसञ्जनस्य तर्कत्वे आत्माश्रयात्। आरोपत्वे उक्तदोषात्॥

न च व्यापकाभाववत्तया ज्ञाते व्याप्यारो[1]पाद्व्यापकारोपस्तर्कः। एवं [2]चानुमित्याभासे ना[3]तिव्याप्तिः। व्यापकाभाववत्तया ज्ञातेऽनुमित्यनुदयात्। तर्कस्तु व्यापकीभूतनिर्धूमत्वाभाव-

---

निराह—[4]अत्र केचिदित्यादिना। तार्किकादय इत्यर्थः। व्याप्यारोप इति निमित्तसप्तमीयम्॥

तत्र[5] किं व्याप्य[6]भ्रमजन्य व्यापकभ्रम[7]स्तर्क इत्यभिमतं, तन्निमित्तक[8]व्यापकप्रसञ्जनं वा, व्यापकाभाववत्तया ज्ञाते व्याप्यारोपनिमित्तकव्यापकभ्रमो वा, व्यापकाभाववत्तयावधृते व्याप्यारोपनिमित्तक व्यापकारोपो वा, तादृशव्यापकाहार्यारोपो वा, अव्य[9]वस्थिताभ्युपगम्यमानको[10]ऽप्युपाधिकानिष्टत्वप्रतिसंधानं वेति [11]षट्कल्पान् क्रमेण मणिकण्ठोक्तदिशा निराह—बाष्प इत्यादिना। शङ्खत्वलिङ्गजन्यानुमिते-

[1] पे व्याप—ग. ट. रा. [2] च नानु—क. ग. ट. रा. [3] न इति न—क. ग. ट. रा. [4] तत्र—ठ. [5] नन्वत्र—ठ. [6] व्याप्तिभ्र—ट. [7] जन्यपदमाधिक—ट. [8] तव्या—ट. ठ. ड. [9] वहिता—ठ. [10] प्याप्युपाधि—ड. [11] षड्वि—ठ.

वत्तया ज्ञात एव भवतीति वाच्यम् । यत्राशङ्खं शङ्खतयावगम्य पीतोयं शङ्खो न शुक्ल इति प्रत्यक्षभ्रमानन्तरं शङ्खत्वाच्छुक्ल इत्यनुमिनोति तस्यामनुमितावातिव्याप्तेः ॥

अथ ज्ञात इत्यस्यावधृत इत्यर्थः । शुक्लत्वानुमितौ तु न शुक्लत्वाभावस्यावधारणम् । शुक्लत्वाभावग्राहकप्रत्यक्षस्यान्यथासिद्धिमुपजीव्यैवानु[1]-मितिप्रवृत्तिरिति चेन्न। तर्केपि निर्धूमत्वरूपव्यापकाभावस्यावधृतत्वेन निर्धूमत्वारोपस्यासंभवात् । आहार्योयमारोपः । स च बाधितेपि भवतीति चेन्न । पुरुषत्वाभावनिश्चयानन्तरं प्रत्यक्षादाहार्यव्याप्यकरचरणाद्यारोपाज्जन्ये प्रत्यक्षे आहार्यपुरुषारोपेतिव्याप्तेः ॥

नापि वर्धमानोक्तरीत्या अव्यवस्थिताभ्युपगम्यमानकोट्युपाधिकानिष्टसत्त्वप्रतिसन्धानं तर्कः । निरग्निकत्वस्याव्यवस्थितत्वं हि संशयो विपर्ययो वा न द्वयमपि । यद्यर्थशिरस्कनिरग्निकत्वज्ञानं

---

व्याप्यज्ञानस्य चारोपत्वसिद्ध्यर्थमाह—**अशङ्खं शङ्खतयावगम्येति** । व्यापकाभाववत्तयावगत इत्यंशोपपादनाय पीतोयमित्यादि । अन्यथासिद्धिरौपाधिकभ्रमत्वम् । **निर्धूमत्वेति** । निर्धूमत्वरूपं यद्वह्न्यभावव्यापकं तदभावस्य धूमसत्त्वस्यावधृतत्वेनेत्यर्थः । तथाचासंभवि लक्षण-

[1] मान प्र—ट. रा.

प्रमेति वक्ष्यमाणत्वात् । एवं प्रतिसन्धानमपि संशयो विपर्ययो वा न द्वयमपि । तर्हि स्यादित्यर्थशिरस्कनिर्धूमत्वज्ञानं प्रमेति वक्ष्यमाणत्वात् ॥

तस्मात्तर्कोऽनुमानविशेष एव । व्याप्तिबलेन गमकत्वात् । संशयोत्तरप्रत्यक्षं व्याप्तिबलेन गमकमपि न व्याप्तिज्ञानकरणकम् ॥

मन्मते त्वङ्गीकृतेन साध्याभावेन सहानङ्गीकृतस्य साधनाभावस्य व्यापकत्वप्रमा [1]वा साध्याभावाङ्गीकारनिमित्तका साधनाभावस्याङ्गीकर्त-

---

मिति भावः । आहार्यो बुद्धिपूर्वकः । **वक्ष्यमाणत्वादिति** । ननु तर्कस्येत्यादिना, कथं तस्य प्रामाण्यमित्यादिना च, ग्रन्थेनेत्यर्थः । **व्याप्तिबलेनेति** । आपाद्यापादकयोर्व्याप्तिबलेन साध्यसाधनयोरविनाभावगमकत्वादनुमानविशेष एवेत्यर्थः । विलक्षणप्रकारत्वाद्विशेषपदप्रयोगः ॥

नन्वेवं यत्र स्थाणुर्वा पुरुषो वेति संशयानन्तरं पुरुषत्वव्याप्यकरादिमानयमिति विशेषदर्शने सति [2] पुरुष एवेति प्रत्यक्षं तदप्यनुमानं प्रसज्यते इत्यत आह --**संशयेति** । अत्र प्रत्यक्षपदेन व्याप्यदर्शनं पुरुष एवेति फलीभूतं प्रत्यक्षं च [3] गृह्यते । तत्राद्यं यत्र करादि तत्र पुरुषत्वमिति व्याप्तिबलेन पुरुषत्वगमकमपि पुरुषत्वप्रत्यक्षं न व्याप्तिज्ञानकरणकं किं तु चक्षुरादिकरणकमेव अतो न तस्यानुमान[4]त्वमिति भावः । साध्या-

---

[1] इतः 'तर्क्यते' इति पर्यन्तं नास्ति—**ग. ट. रा.** [2] यत इत्याधिकम्—**ठ.**
[3] ग्राह्यम्—**ठ** [4] फलपदमधिकम्—**ट. ठ. ड.**

**व्यत्वप्रमा वा तर्क्यतेऽनेनेति[1] व्युत्पत्त्या तर्कः । तत्करणिका साधनस्य साध्येन सह व्याप्त्यनुमितिस्तु तर्कण[2]मिति व्युत्पत्त्या तर्कः ॥**

**एतदेवाभिप्रेत्य पद्धतौ कस्यचिदर्थस्याङ्गीकारेऽर्थान्तरापादनं तर्क इति प्रमाणलक्षणटीकायां च व्याप्याङ्गीकारेऽनिष्टव्यापकप्रसञ्जनं तर्क इत्युक्तम् । स्पष्टयिष्यते चैतदनुपदमेव ॥**

---

भावेन निरग्निकत्वादिरूपेण निर्धूमत्वादिरूपसाधनाभावस्य व्यापकत्वप्रमा तर्क इत्युच्यते । करणव्युत्पत्त्यैवेत्याह—**तर्क्यतेऽनेनेतीति ।** आपादकस्यासिद्धिनिरासायोक्तम् अङ्गीकृतेनेति । इष्टापत्तिनिवृत्त्यर्थं अनङ्गीकृतस्येत्युक्तम् । यदि घट उप[3]यते तर्हि पटोप्यङ्गीकार्य इत्यादावतिव्याप्तिवारणाय साध्याभावसाधनाभावपदोक्तिः । स किं प्रति करणमित्यत आह—**तत्करणिकेति । तर्कणमिति व्युत्पत्त्येति ।** भावव्युत्पत्त्येत्यर्थः । **एतदेवेति ।** पद्धतावापादनमित्यस्य[4] लक्षणटीकायां प्रसञ्जनमित्यस्य च साधनाभावस्य व्यापकत्वप्रमै[5]वेत्यर्थः इति भावः । एतच्चोपलक्षणम् । व्याप्याङ्गीकारेऽनिष्टव्यापकप्रसञ्जनमिति तत्त्वनिर्णये चेत्यपि ध्येयम् ॥

[6]कथं व्याप्त्यनुमितिजनकत्वमस्य तर्कस्येत्यतो वा कथं व्याप्याङ्गीकारेणानिष्टस्य व्यापकत्वप्रमा[7]प्रकार इत्यतो वाह—**स्पष्टयिष्यत इति ।** कथं तस्य प्रामाण्यमित्यादिग्रन्थे[8]न कृतशङ्कानिवृत्त्यर्थमुपोद्धा-

[1] तित-ग. ट. रा. [2] कयामी-ग. रा. [3] उपगम्यते—ठ. ड.
[4] प्रमाणपदमधिकम्—ट. ड. [5] मत्येतदिति भावः—ठ. मेत्यर्थः इति भा—ड.
[6] 'एतदेवेति' इत्यादिकः, एतावान् ग्रन्थः, 'स्पष्टयिष्यत इति' इत्यतः-परमस्ति—ड. तत्राप्येवमेवार्थः इत्यधिकम्—ट. ठ. [7] माकार—ठ. ड. [8] नेत्यर्थः—ठ.

ननु तर्कस्यानुमानत्वे आपादकं निरग्निकत्वं लिङ्गम् आपाद्यं निर्धूमत्वं लिङ्गीति वाच्यम् । तथाच हेतोरसिद्धिर्बाधोऽपसिद्धान्तश्च । सिद्धान्तिना[1] पक्षे निरग्निकत्वनिर्धूमत्वयोरस्वीकारात् । धूमस्य प्रतीतत्वाच्चेति चेन्न ॥

साधनरूपस्यैव लिङ्गस्य असिद्धिर्दोषो न त्वापादकरूपस्य । आपादकत्वव्याघातात् । यद्ध्यापादकं तत्पराभ्युपगतमेव भवति ॥

अत एव व्याप्यस्य पक्षनिष्ठत्वे परा[2]नभ्युपगमनिमित्तकज्ञानविषयव्यतिरेकज्ञानभञ्जनीयत्वमापादकत्वम् । कुलीरस्यैवापादकस्य स्वप्र[3]सूत-

तोक्त्यनन्तरमत्र च निरग्निकत्वप्रमे[4]त्यादिग्रन्थेनेत्यर्थः ।

'प्रसङ्गार्थतया प्रोक्ता न सिद्धान्तस्य दूषकाः' ।

इत्यादिभक्तिपादीयानुव्याख्यानसुधयोरुक्तं विवृण्वान आक्षिपति— नन्विति । असिद्ध्यपसिद्धान्तौ व्यनक्ति—सिद्धान्तिनेति । अनुमानप्रयोक्त्रेत्यर्थः । बाधं व्यनक्ति—धूमस्येति । अत एवेति । पराभ्युपगतस्यापादकत्वादेवेत्यर्थः । व्याप्यस्य निरग्निकत्वादिरूपव्याप्यस्य पर्वतादिनिष्ठत्वे यः पराभ्युपगमः तन्निमित्तकं यज्ज्ञानं निर्धूमत्वज्ञानं तद्विषय[5]स्यस्य निर्धूमत्वादेर्यो व्यतिरेकः धूमवत्त्वं तज्ज्ञानेन भञ्जनीयत्वं[6] यत्तदेवापादकत्वमित्यर्थः । कुत इत्यत आह—कुलीरस्यैवेति । कुलीरस्य जलजन्तुविशेषस्य यथा स्वोत्पन्नापत्यहतत्वं तथैवापादकस्यापि-

[1] सिद्धान्तिनेति नास्ति—ट. [2] राभ्यु—ग. ग. [3] स्वसू—ग. ग.
[4] प्रमापदं न—ट. ठ. [5] यस्य—ट. ठ. ड. [6] व्याप्यस्य अधिकम्—ठ.

युक्त्या[1] प्रतिहतत्वादित्याहुः । भज्यते हि निरग्निकत्वं स्वाभ्युपगमनिमित्तकज्ञानं प्रति विषयस्य निर्धूमत्वस्य व्यतिरेकरूपसधूमत्वस्य ज्ञानेन । कथमन्यथा न चायं निर्धूमः तस्मान्न निरग्निक इति विषय[2] विपर्यवसानम् । तदभावे[3] तर्क एवाभासः स्यात् । न चात्र निरग्निकत्वं साधनत्वेनोपात्तम् । तथात्वे हि यदीति स्यादिति च न स्यात् । किं तु निरग्निकत्वादिति स्यात् ॥

एवं साध्यरूपस्यैव लिङ्गिनो बाधो दोषः । नत्वापाद्यरूपस्यापाद्यत्वव्याघातात् । यद्ध्यापाद्यं[4] तदनिष्टमेव । प्रमाणबाध एवा[5]निष्टत्वम् । अत एवापादकाभिमतभञ्जकज्ञानविषयव्यतिरेकप्रतियो-

स्वोत्पन्ननिर्धूमत्वाभ्युपगमरूपयुक्तिप्रतिहतत्वादित्यर्थः । आहुस्तार्किका इत्यर्थः । उक्तज्ञानभञ्जनीयत्वं व्यनक्ति—**भज्यते हीति** । तदभावे विपर्यये पर्यवसानाभाव इत्यर्थः ॥

"व्याप्तिस्तर्काप्रतिहतिरवसानं विपर्यये ।
अनिष्टाननुकूलत्वमिति तर्काङ्गपञ्चकम् ॥"

इत्युक्ताङ्गपञ्चकमध्ये एकाङ्गविकलत्वादाभासः स्यादित्यर्थः ।

असिद्धिं निरस्य बाधं निराह—**एवमिति** । **अत एवेति** । प्रमाणबाधितस्यैवापाद्यत्वादेवेत्यर्थः । आपादकाभिमतं यन्निरग्निकत्वं

[1] क्त्यपत्य- ग. रा. [2] विपर्ययपर्यव-ग. ट. रा. [3] व चत- ग. ट. रा. [4] तत्प्रमाणबाधितमेव । अनिष्टं ह्यापाद्यम् प्रमाण-ग. ट. रा. [5] वचा-ग. रा.

गित्वमापाद्यत्वामित्याहुः । न चात्र निर्धूमत्वं साध्यम् । तथात्वे हि तर्हीति स्यादिति च न स्यात् । किं तु[1] निर्धूमोयमिति स्यात् । न च निर्धूमोयमिति ज्ञानस्य यावान्विषयस्तावानेव तर्हि निर्धूमः स्यादित्यस्यापि विषयः । अधिकस्य तर्हि स्यादिति शब्दयोरर्थस्याप्युल्लेखात् ॥

अत एव नापसिद्धान्तोपि । स हि सिद्धान्तविरुद्धस्य साधने नत्वापादने । तस्मात्प्रसङ्गरूपानुमानेऽसिद्धिबाधापसिद्धान्ता भूषणान्येव । न तु दूषणानि ॥

अत एवोक्तं साधनानुमानवैधर्म्यादेवास्य प्रसङ्गानुमानत्वम् । दृश्यते च साधनानुमानेष्वपि केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिषु अ-

---

तद्भञ्जक[2]भूतं यज्ज्ञानं सधूमत्वज्ञानं तद्विषयो यो व्यतिरेकः सधूमत्वं तत्प्रतियोगित्वमित्यर्थः । यद्व्यतिरेकज्ञानेनापादकं भज्यते तत्त्वमापाद्यत्वम् । भज्यते हि निर्धूमत्वव्यतिरेकसधूमत्वज्ञानेन निरग्निकत्वम् । न चायं निर्धूमः तस्मान्न निरग्निक इति विपर्यये पर्यवसानात् । अन्यथा तर्कस्याभासत्वापत्तेरिति भावः । ननु निर्धूमत्वसाधने कथं न बाध इत्यत आह—**न चात्रेति** ॥

अपसिद्धान्तदोषं च प्रागुक्तं निराह—**अत एवेति** । निर्धूमोयमित्यसाधनादेवेत्यर्थः । ननु साधनानुमानवैलक्षण्यात्कथमस्यानुमानतेत्यत आह—**अत एवेति** । तस्य विवरणं उक्तात् यदि[3]तर्ह्यादि-

[1] किंच-ग. रा. [2] नां-ङ. कां-ट. ठ. [3] यदीतिन-ठ. ड.

न्योन्यं वैधर्म्यम् । तेष्ववान्तरवैधर्म्येपि व्याप्तिबलेन गमकत्वादनुमानत्वं चैतत्तर्केपि समम् [1] ॥

नन्वेवं [2] बाधादेरदोषत्वे कथं तस्य प्रामाण्यमिति चेच्छृणु । सधूमोपि निरग्निकोस्त्विति शङ्का हि द्वेधा सम्भवति । निरग्निकत्वं प्रति निर्धूमत्वे व्यापकत्वस्यैवाभावेन वा सत्यपि व्यापकत्वे पक्षे निर्धूमत्वस्यापि सत्त्वेन वा ॥

---

शिरस्कत्वादिरूपाद्वैधर्म्यादिति । **वैधर्म्यमिति** । विपक्षशून्यत्वसपक्षशून्यत्वतदुभयवत्त्वादिरूपं वैधर्म्यमित्यर्थः ॥

"सर्वेषु केषुचिद्वापि सपक्षेषु कृतान्वयि ।
विपक्षशून्यं पक्षस्य व्यापकं केवलान्वयि" ॥

इत्यादेरिति भावः । एतेनापादकस्यासिद्धिरदूषणमित्यादि पद्धतिवाक्यम् विवृतं ध्येयम् । अनुमानसामान्यलक्षणोपेतत्वात्केवलान्वय्यादिकमनुमानमेवेत्याशङ्कामनूद्य साम्यमाह—**तेष्विति** । **कथमिति** । निर्धूमत्वज्ञानरूपफलस्य बाधितविषयकस्याप्रमात्वान्निरग्निकत्वज्ञानस्य च करणत्वादप्रमाजनकस्यासिद्धविषयस्य स्वयं भ्रमरूपस्य च प्रमाकरणत्वरूपं प्रामाण्यं कथमित्यर्थः ॥

नैवं फलकरणभावः । किं त्वन्यथैव । तत्र च फलीभूतं करणभूतं द्वयमपि ज्ञानं प्रमारूपमेवेति लक्षणटीकापद्धतिसुधानुसारेण त्रेधा परिहारं अत्र च निरग्निकत्वमित्यादिना विवक्षुरुपोद्घातमाह—**शृण्वित्यादिना** । तर्कः शङ्कावधिरित्युक्तत्वेन तस्य शङ्कानिवर्तकत्वादिति शङ्का हीत्युक्तम् ।

---

[1] इति इत्यधिकम्—**ग. ट. रा.** [2] तर्के इत्यधिकम्—**ग. ट. रा.**

तत्राद्यो निर्धूमत्वस्य व्यापकत्वप्रदर्शकेन यदि निराग्निकस्तर्हि निर्धूम इत्यनेन निरस्यते। यदि गवयो गोसदृशस्तर्हि गौरपि गवयसदृशी यदि जीवन्गृहे नास्ति तर्हि बहिरस्ति, यदि धूमस्तर्हि वह्निरित्यादौ यदि तर्ह्योः स्वसमभिव्याहृतपदार्थेऽन्यथानुपपत्तिरूपव्याप्तिबोधकत्वस्य व्युत्पत्तिसिद्धत्वात् ॥

अत एव सुधायां यदीदं तर्हीदमित्येव व्याप्तिग्रह उक्तः। यदियुक्तेन स्याच्छब्देन तु स्वसम-

तर्कनिवर्त्या शङ्केत्यर्थः। कथमित्यत आह—**यदीति**। गृह्यमाणगतसादृश्यज्ञानात्स्मर्यमाणगतसादृश्यज्ञानमुपमानमिति शाबरोपमानस्योदाहरणम्। **यदि गवय इति**। जीवित्वे सत्त्वे गृहेऽसत्त्वमनुपपद्यमानं बहिःसत्त्वं कल्पयतीत्यर्थापत्तिप्रमाणस्योदाहरणम्—**यदि जीवान्निति**। प्रसिद्धानुमानस्योदाहरणम्—**यदि धूम इति**। आदिपदेन यदि चैत्रमैत्रयोरन्यतरत्वे सति यद्ययं चैत्रस्तर्ह्यन्यो मैत्र इत्यादिग्रहः। **अत एवेति**। यद्यादिशिरस्कस्थले व्याप्तिबोधकत्वस्य व्युत्पत्तिसिद्धत्वादेव ॥

रोहिण्युदय आसन्नः कृत्तिकाभ्युदिता यतः।

इत्युक्ते साधनं[1] नो किं न ह्याज्ञैवात्र साधिका ॥

इति भक्तिपादीयानुव्याख्यानव्याख्यानसुधायां यदीत्येव व्याप्तिग्रह उक्त इत्यर्थः। नन्वेवमापाद्यापादकस्थले[2] स्याच्छब्दद्वयं व्यर्थम्। कृत्याभावादित्यत आह—**यदि युक्तेनेति**। यदिशब्दयुक्तेनेत्यर्थः।

[1] नेनो–ट. [2] स्थस्या–ठ. ड.

भिव्याहृत[1]निरग्निकत्वस्य पक्षे पराभ्युपगममात्रं बोध्यते । तर्हियुक्तेनापि स्याच्छब्देन निर्धूमत्वस्य पक्षेऽनिष्टत्वं बोध्यते । विपर्यये पर्यवसानपर्यन्ते तर्के तथैव व्युत्पत्तेः ॥

तेनैव स्याच्छब्देन द्वितीयोऽपि निरस्तः । यद्यतिथिरागच्छेत्तर्हि भोजयितव्य इति तु विपर्यय[2]पर्यवसानाभावात्संभावनामात्रं न तु तर्क इति तवापि संमतम् । अत्र च निरग्निकत्वं प्रति निर्धूमत्वस्य[3] व्यापकत्वं लिङ्गम् । तज्ज्ञानं करणम् । निरग्निकत्वाभावं प्रति निर्धूमत्वाभावस्य व्याप्यत्वं लिङ्गं तज्ज्ञानं फलम् । द्वयमपि [4]प्रमा-

**तेनैवेति** । तर्हीतिशब्दयुक्तेन स्याच्छब्देन निर्धूमत्वस्य पक्षे सत्त्वमिति पक्षोऽपि निरस्त इत्यर्थः ॥

नन्वेवं तर्हि भोजयितव्य इत्यादावप्यनिष्ट[5]बोधः स्यात् । स्या[6]त्पर्यायस्य तव्यप्रत्ययस्य सत्त्वादित्यत आह— **यद्यतिथिरिति** । **संभावनामात्रमिति** । योग्यतामात्रमित्यर्थः । **तवापीति** । तथैव मणिकण्ठोक्तेरिति भावः । अस्त्वेवं तावता कथं प्रामाण्यमित्यत आह— **अत्र चेति** । **लिङ्गीति** । अनुमेयं वस्त्वित्यर्थः । **द्वयमपीति** । लिङ्गज्ञानं लिङ्गिज्ञानं चेतिद्वयमित्यर्थः ॥

---

[1] तस्य नि–ग. ट. रा. [2] ये प–ग. ट. रा. [3] च इत्यधिकम् –क. ग. ट. रा. [4] पि च प्र–ग. ट. रा. [5] त्व बो–ट. ठ. [6] एकमेव स्यात्पदम्–ट. ठ.

रूपमेव । कारणाभावे कार्याभावनियमात् । व्यापकाभावस्य व्याप्याभावं प्रति व्याप्यत्वाच्च ॥

अत एव प्रसङ्गांशेनैव निर्धूमत्वाभावस्य निरग्निकत्वाभावेन व्याप्तेः सिद्धत्वादेव विपर्यये पर्यवसानेन [1] चायं निर्धूम इत्यनेन तस्य पक्षधर्मतामात्रं प्रदर्श्य तस्मान्न निरग्निक इत्यनेन साध्यमुक्तम् । न तु त्वयाशङ्कितं पक्षे निरग्निकत्वज्ञानम् कारणम् । नापि पक्षे निर्धूमत्वज्ञानं फलम् । येन द्वयोरप्यप्रमात्वं स्यात् ॥

असिद्ध्याद्युक्तिस्तु निरग्निकत्वं प्रति निर्धूम-

---

ननु कथं लिङ्गज्ञानस्य प्रमात्वं तस्यासिद्धत्वात् । न च यदि निरग्निकस्तर्हि निर्धूम इत्यनेनाव्यापकत्वशङ्का निरस्यत इति[2] वाच्यम् । हेत्वभावादित्यत आह — कारणेति । अग्निरूपकारणाभावे[3] कार्याभावनियमात् । यदि निरग्निक इत्यादिना सा शङ्का निरस्यत इति निर्धूमत्वस्य व्यापकत्वरूपं लिङ्गं नासिद्धमिति भावः । ननु तावता व्याप्यत्वरूपलिङ्गिनो ज्ञानं प्रमेति कुतो व्याप्यत्वस्यासिद्धेरित्यत आह— व्यापकाभावस्येति । निर्धूमत्वाभावस्य निरग्निकत्वरूपव्याप्यस्याभावं प्रतीत्यर्थः । तत्र ज्ञापकमाह — अत एवेति ॥

ननु यद्येवमसिद्धिबाधादिकमाशङ्क्य तर्के न दोष इत्युक्तं तत्कथमुक्तरीत्याऽसिद्ध्यादेरभावादित्यत आह— असिद्ध्याद्युक्तिस्त्विति ।

---

[1] न चायं–ग. ट. रा. [2] इति तन्नहे–ट. इति वाच्यम् तत्र हे–ठ.
[3] धूमरूपेत्यधिकम्–ठ. ड. ट.

त्वस्य च [1]व्यापकत्वप्रदर्शनार्थं तर्कवाक्येनोपात्ते ये [2]निरग्निकत्वनिर्धूमत्वरूपे व्याप्यव्यापके तद्भिप्राया ॥

तस्माद्यद्याद्यर्थालिङ्गितस्यार्थस्याबाधान्न तर्कस्याप्रामाण्यम् ॥

एतदेवाभिप्रेत्य सुधायां–यद्यलङ्कृतस्य निरग्निकत्वादेरसिद्धत्वं नास्तीति तथासति यदीति[3] स्यादिति च न स्यादिति चोक्तम् । अयं [4]पक्षः, प्रसङ्गरूपानुमाने च न साध्यवदापाद्यस्य प्रमाणविरोधादि दूषणमिति प्रमाणलक्षणटीकायां प्रसङ्गरूपानुमाने बाधापसिद्धान्तयोरदूषणत्वादिति सुधायां चोक्तः ॥

एतदेवाभिप्रेत्योक्तमनुव्याख्याने—

प्रसङ्गार्थतया प्रोक्ता न सिद्धान्तस्य दूषकाः ॥

इति । प्रसङ्गः अनुग्राह्यानुमानाङ्गभूतान्वयव्याप्तिलिङ्गभूतायाः परानिष्टायाः व्यतिरेकव्याप्तेः प्रदर्शनम् । तदर्थतया तत्प्रयोजनकतया ह्रदादि-

**सुधायामिति** । भक्तिपादीयसुधायामित्यर्थः । **उक्तमिति** । भक्तिपादीयानुव्याख्याने । स्वोक्तपक्षानुगुणतयार्थमाह—**प्रसङ्ग इत्यादिना** ।

[1] च इति न–ग. ट. रा. [2] यन ग. ट. रा. [3] यदीति इति न—स्यादितिचोक्तम्. इत्येवास्ति–ग. ट. रा. [4] च पदमधिकम्–ग. ट. तु-रा.

निष्ठा निरग्निकत्वनिर्धूमत्वादयः प्रोक्ताः न तु पक्षनिष्ठतया प्रोक्ताः। तस्मान्न सिद्धान्तस्य दूषका इत्यर्थः ॥

यत्तु सुधायां प्रसङ्गः अङ्गीकर्तव्यतया ज्ञापनमिति व्याख्यानम् । तद्वक्ष्यमाणतृतीयपक्षस्थत्वात्तदभिप्रायम्। यद्वापादकरूपलिङ्गस्य निरग्निकत्वस्य पक्षे पराभ्युपगतत्वमेव पक्षसंबन्ध इति नासिद्धिः ॥

युक्तं चैतत् । यक्षानुरूपबलिन्यायेन लिङ्गिनो निर्धूमत्वस्यापि पक्षेऽभ्युपगमनीयत्वस्यैव पक्षसंबन्धत्वात् । धूमरसादेः पक्षे संयुक्तत्वसमवेतत्वादिना ज्ञातस्यैवाग्निरूपादिसाधकतया तत्र संयोगसमवायादेरिव निरग्निकत्वस्यापि पक्षे पराभ्युपगतत्वेन ज्ञातस्यैवापादकतयाभ्युपगमस्यैव संबन्धताया उचितत्वात् ॥

---

**वक्ष्यमाणेति।** अथवेत्यादिना वक्ष्यमाणेत्यर्थः । बाधासिद्धी प्रकारान्तरेण निराकुर्वन् परोक्तरीत्या निरग्निकत्वनिर्धूमत्वज्ञानयोः करणत्वफलत्वेऽभ्युपेत्य तर्कस्य प्रामाण्यमाह—**यद्वेति । यक्षानुरूपेति ।** यक्षस्योग्रत्वे तदनुरोध बलिः अत्युग्रत्वे अतिबलिः मृदुत्वे अल्पबलिरिति न्यायेनेत्यर्थः । **धूमेति ।** धूमश्च रसश्च तदादेरित्यर्थः । एवमग्निश्चरूपं च तदादेः अग्निरूपादेः साधकतयेत्यर्थः । यथाक्रममन्वयः ॥

दृश्यते च कृत्तिकोदयाधोदेशनदीपूरादिरूपसाधनानुमानस्यापि रोहिण्युदयोर्ध्वदेशादिरूपपक्षेऽभावेऽपि पक्षनिष्ठसाध्यसमानकालीनत्वपक्षनिरूप्याधोदेशस्थत्वादिः त्वन्मते ज्ञानत्वादिरूपप्रमेयत्वादेरपि पक्षीभूतशब्देन स्वरूपप्रत्यासन्नज्ञानसमवेतत्वादिश्च परंपरासंबन्धः ॥

अस्मिन्पक्षे तर्कस्य प्रामाण्यं निरग्निकत्वनिर्धूमत्वयोः पक्षेऽभ्युपगतत्वाभ्युपगमनीयत्वरू-

---

ननु—संयोगसमवायाभ्यामन्यस्य कथं पक्षधर्म[1]ताघटकसंबन्धत्वं काप्यदर्शनादित्यत आह—**दृश्यते चेति** । कृत्तिकोदयश्चाधोदेशनदीपूरश्च तदादिरूप[2]स्येत्यर्थः । रोहिण्युदय आसन्नः कृत्तिकाया उदितत्वात्, ऊर्ध्वदेशो वृष्टिमान् अधोदेशे नदीपूर[3]वत्त्वात् इत्यादिरूपानुमानस्येत्यर्थः । **पक्षेति** । रोहिण्युदयरूपपक्षनिष्ठासन्नत्वरूपसाध्यसमानकालीनत्वरूपः पक्षसंबन्धः कृत्तिकोदयरूपलिङ्गस्य दृश्यते । ऊर्ध्वदेशरूपपक्षनिरूप्यो यो अधोदेशः तत्स्थत्वरूपपक्षसंबन्धो नदीपूरस्य दृश्यते । अन्यथा न्यायमते तयोरपक्षधर्मताकत्वेन ताभ्यां रोहिण्युदयासत्त्वाद्यनुमित्यनुदयापातः । न चेष्टापत्तिः । अनुभवविरोधादिति भावः । **त्वन्मत इति** । न्यायमते शब्दोऽभिधेयो ज्ञेयत्वादित्यत्र ज्ञेयत्वं नाम शब्दस्य परंपरासंबन्धेन ज्ञानत्वमेव । प्रमेयत्वं च प्रमात्वमेव[4] । न ततोऽन्यत् । तथा च तस्य पक्षधर्मताघटकः ज्ञानस्यार्थस्य च[5] स्वरूपसंबन्धः ज्ञानादिना च ज्ञानत्वादेः समवाय इति परंपरासंबन्धो **दृश्यत** इत्यनुकर्षः । **प्रामाण्यमिति** । युक्तमित्यन्वयः । प्रसङ्गार्थतयेत्यत्र

[1] तादि घ-ट. [2] पेत्य-ट. ड. [3] त्वा-ट. रादित्य-ठ. [4] प्रमेयत्वं चेत्यादिकं नास्ति-ठ. [5] च इति न-ट. ठ.

पेण सत्त्वात्तेन च रूपेण तद्विषययोर्निरग्निकत्वनिर्धूमत्वज्ञानरूपयोः करणफलयोः प्रमात्वाद्युक्तम् ॥

अयं च पक्षः पराभ्युपगममात्रस्य तत्र सिद्धिपदार्थत्वादिति पद्धत्युक्तः । अथवा यदि निरग्निकः स्यादित्यस्य यदि निरग्निकत्वाङ्गीकार इत्यर्थः । तथाङ्गीकारश्च सिद्ध एव । अन्यथा तर्कस्याप्यनुत्थानात् । एवं तर्हि निर्धूमः स्यादित्यस्य निर्धूमत्वेनाङ्गीकर्तव्य इत्यर्थः । आपादनं हि अङ्गीकर्तव्यतया ज्ञापनम् । न पुनः सद्भावप्रतिपादनम् । यदि विषं भक्ष[1]यिष्यसि तर्हि मरिष्यसीत्यादिवत् । नचानङ्गीकारे स्वक्रियाविरोधा[2]दिरूपाङ्गीकारयोग्यता बाधिता ॥

---

सुधोक्तिमनुरुध्याह—अथवेति । नन्वङ्गीकर्तव्यताज्ञापनेपि कथं बाधितत्वानिरास इत्यत आह—न चेति । निर्धूमत्वस्याङ्गीकर्तव्यता ह्यङ्गीकारयोग्यता [3]स्वक्रियाविरोधरूपा[4] धूमरूपकार्यमङ्गीकृत्याग्निरूपकारणाभावाङ्गीकारे कार्योद्देशेन कारणे[5] प्रवृत्तिरूपस्वक्रियाविरोध इत्येतन्निर्धूमत्वमङ्गीकार्यमिति भङ्ग्यन्तरेणो[6]च्यते । तथा च सा न प्रमाणबाधितेत्यर्थः । यद्वाङ्गीकर्तव्यताज्ञापनं कथमनिष्टम् । अनिष्टस्यैवापाद्यत्वादित्यत आह—न चेति । पूर्वं धूमोस्त्वित्युक्तत्वेन निर्धूमत्वाङ्गीकारे स्वक्रियाविरोधरूपाङ्गीकारायोग्यता न च बाधिता । येनानिष्टापादनं न स्यादित्यर्थः ॥

[1] क्षयसि-ग. ट. रा. [2] आदिपदं न-ग. ट. रा. [3] सा इत्यधिकम्-ट. [4] स्वक्रिया विरोधजिज्ञासा इत्यधिकम्-ट. [5] ण प्र-ट. [6] णोद्भाव्यते-ट.

एवं च पर्वतो निर्धूमत्वेनाङ्गीकर्तव्यः निरग्निकत्वेनाङ्गीकृतत्वात् ह्रदवत् इत्यनुमानमेव तर्क इति साधनानुमान इव तर्केऽप्यसिद्ध्यादिकं दोष एवेति न तर्कस्य साधनानुमानाद्वैषम्यमपि ॥

अत्र च द्वितीये पक्षे निरग्निकत्वमेव लिङ्गम् । अभ्युपगमस्तु तस्य पक्षेण संबन्धः । तृतीये त्वभ्युपगम एव लिङ्गमिति भेदः ॥

अयमपि पक्ष "आपादनं नामाङ्गीकर्तव्यतया ज्ञापनम् । न[1] तत्प्रमाणविरुद्ध" मित्यादिसुधायामेवोक्तः ॥

या तु—

स्वन्यायैः साधनं कार्यं परन्यायैश्च[2] दूषणम् ।

इत्यनुव्याख्याने, स्वासिद्धैः साधनं परसिद्धैर्दूषण-

---

अस्मिन्पक्षे प्रामाण्यमुपपादयितुं तत्स्वरूपमवधारयति **एवंचेति ।** अङ्गीकारार्थत्वे सतीत्यर्थः । **असिद्ध्यादिकं दोष एवेति ।** यत्र व्यापकाभावस्य परेणा[3]नङ्गीकारेऽप्यङ्गीकृतत्वादिदमङ्गीकर्तव्यमित्युच्यते-तादृशस्थल एव । तादृशस्य तु प्रामाण्यमस्माभिर्नेष्यत एव । यत्र पुनरङ्गीकारो व्यापकाभावस्य सिद्धस्तादृशस्यैवासिद्ध्यादिशून्यस्य प्रामाण्यमुपेयत इति भावः ॥

ननु यद्वत्युक्तद्वितीयपक्षेऽपि पराभ्युपगमेनैवासिद्ध्यादिपरिहारा तृतीयस्य ततः को भेद इत्यत आह—**अत्र चेति ।** अयमपि तृतीयोऽपि । सुधायां भक्तिपादीयसुधायाम् । ननु तर्केऽप्यसिद्ध्यादेर्दोषत्वे तददोषत्वोक्तिर्विरुद्धेत्यत आह—**या त्विति । इत्यनुव्याख्यान इति ।**

[1] न च त—ग. ट. रा.　[2] स्तु—रा.　[3] णाङ्गी—ट. ट.

मतो न दूषणेऽपसिद्धान्तादीति प्रमाणलक्षणे च, साधनदूषणानुमानयोर्व्यवस्थोक्तिः सा न तृतीयपक्षे । तत्र प्रसङ्गानुमानस्य साधनानुमानाद्वैषम्यस्योक्तत्वात् । किंत्वितरपक्षयोः । आद्योक्ताया [1]असिद्ध्याद्यदोषताया, द्वितीयोक्ताया अभ्युपगमस्यैव सिद्धिताया‌श्च साधनानुमाने क्वाप्यदर्शनात् ॥

यद्वा तृतीयोक्ताया अभ्युपगमायोग्याभ्युपगमस्य लिङ्गताया अपि साधनानुमाने क्वाप्यदर्शनात् व्यवस्थोक्तिः पक्षत्रयसाधारणीति ज्ञेयम् ॥

एतेन विपर्यय पर्यवसानरूपानुमाननिरपेक्षस्य तर्कस्य न प्रामाण्यमिति निबन्धादावुदयनाद्युक्तं निरस्तम् । तन्निरपेक्षस्यैव प्रसङ्गस्य प्रामाण्योपपादनात् ॥

या तु अनिष्टापादनं विपर्यय पर्यवसानं चोभयं

---

भक्तिपादीये । अत इत्यादि ग्रन्थकारवाक्यम् स्वसिद्धे[3]रित्यादि वाक्यद्वया[4]भिप्राय विवरणम् । **व्यवस्थेति** । स्वसिद्धत्वपरसिद्धत्वरूपव्यवस्थेत्यर्थः । इतरयोः पक्षयोरेव व्यवस्थेत्युक्तं व्यनक्ति **आद्येति । अभ्युपगमायोग्येति** । निरग्निकत्वस्याभ्युपगमायोग्यस्य योऽभ्युपगमस्तस्य लिङ्गताया इत्यर्थः । **एतेनेति** । एवं त्रेधा प्रामाण्योपपादनेनेत्यर्थः । तदेव व्यनक्ति—**तन्निरपेक्षस्यैवेति** । एवं हि पद्धतिविरोध इत्यतो द्वेधा समाधिमाह —**यात्विति** । [5]सेत्यन्वयः ॥

[1] व्याप्या–ग. ट ग. [2] यप–ग. [3] द्विरि–ट. [4] यमभि–ट. सेत्यर्थः–ट.

मिलितमेवानुमितिसाधनं भवतीति तर्कस्य प्रामाण्यमिति पद्धतिः, सा निर्धूमतयाङ्गीकर्तव्यतासाधनस्य सिद्धसाधनताशङ्कानिरासार्थं, स्यादित्यनेन बोधितप्रमाणविरोधोपपादनार्थं च तर्क[1]स्याङ्गभूतविपर्यय[2]पर्यवसानसापेक्षत्वमात्रेण वा धूमस्य वह्निव्याप्तिप्रमायां अङ्गीकर्तव्यताप्रमायां च[3] निरपेक्षत्वेपि तदुद्देश्यायां न निराग्निक इति प्रमायां पर्यवसानसापेक्षत्वेन वेति ज्ञेयम् ॥

किंच तर्करूपं हि ज्ञानं न तावत्संशयः । एककोटिकत्वात् । नापि विपर्ययः । निरस्तत्वात् । तस्मात्प्रमाणमेव ॥

किंच तर्कज्ञानस्याप्रमाणत्वेन[4] तर्कवाक्यमसदुत्तरं स्यात् । यदि विषं भक्षयसि[5] तर्हि

---

आद्यपक्षद्वयानुरोधेनाह—धूमस्य वह्निव्याप्तिप्रमायां[6] चेति । अथवेत्युक्तान्त्यपक्षानुरोधेनाह—अङ्गीकर्तव्यताप्रमायां चेति । तदुद्देश्यायामिति । व्याप्तिप्रमाङ्गीकर्तव्यताप्रमाभ्यामुद्देश्यायां तयोः फलभूतायामित्यर्थः ॥

तर्कः प्रमाणं न चेदप्रमाणं स्यात् । उभयबहिर्भावायोगात् । अप्रामाण्यं च संशयत्वेन विपर्ययत्वेन ; न द्वयमप्यतोऽप्रामाण्यायोगात्प्रामाण्यमेव युक्तमिति परिशेषेणापि प्रामाण्यमाह—किं चेति । विपक्षबाधकेनापि तर्कस्य प्रामाण्यमाह—किं च तर्कज्ञानस्येति ॥

[1] तर्काङ्ग—क. ग. ट. रा. [2] यये ।—ग. रा. [3] वा—ग. रा. [4] त्वेत—ट. रा. [5] यिष्यसि—क. ग. [6] चेति—ठ.

मरिष्यसीत्याद्याप्तवाक्यं, यदि हरिश्चन्द्रोऽनृतं ब्रूयात्तर्ह्यग्निरपि शीतः स्यादित्यादिस्मृतिश्चाप्रमाणं स्यात्। अनुभवविरोधश्च स्यात्। यद्याद्यर्थशिरस्कस्य[1] तर्कस्य बाधाननुभवात्॥

किंच [2]प्रमात्वेनानाशङ्किते धूमरूपविशेष्यस्य[3] साक्षात्कारे सति कथं निर्धूमत्वस्यारोपः॥

न च तर्कस्य प्रतिमायां नारायणबुद्धिवदाहार्यारोपरूपत्वाद्विशेषदर्शनं न विरोधीति वाच्यम्। तस्य फलानुसन्धानसापेक्षत्वाद्व्याप्तिज्ञाननिरपेक्षत्वाच्च। तर्कस्य फलानुसन्धाननिरपेक्षत्वात्। व्याप्तिज्ञानसापेक्षत्वाच्च। प्रतिमायां नारायण[4]ध्यानस्येव पर्वते निर्धूमत्वध्यानस्याननुभवाच्च॥

एतेन—तर्कः संशयात्प्रच्युतो निर्णयं चाप्राप्त इत्युदयनोक्तमव्यवस्थितनिरग्निकत्वाभ्युपगमोपा-

न केवलमतिप्रसङ्गभयात्तर्कस्याभ्रमत्वमुपेयं किं तु विशेषदर्शनरूपविरोधिसत्त्वेप्यु[5]पपन्नत्वान्न भ्रमत्वं तस्योपेतुं शक्यमित्याह—**किंचाप्रमात्वेनेति**। अप्रमात्वकोटिकशङ्काशून्ये व्याप्यदर्शने सतीत्यर्थः। **कथं निर्धूमत्वारोप इति**। किंत्वस्मदुक्तदिशा प्रमारूप एव वाच्य इति भावः। आहार्यत्वात्संभवतीत्याशङ्क्य निराह—**न चेति**। **फलेति**। अदृष्टफलेत्यर्थः। प्रतिमायां नारायणरूप[6]बुद्धिर्ध्यानरूपा। न ह्येवं प्रकृत इत्याह—**प्रतिमायामिति**। उदयनोक्तं वर्धमानाद्युक्तमित्यनयोरपि निरस्तमित्यनेनान्वयः। **अव्यवस्थितेति**। अप्रमीयमाणेत्यर्थः।

[1] स्या बाधाननुभवात्-क. ग. ट. रा. [2] चाप्र—ट. रा. [3] शेषस्य—ट. रा. [4] णत्वध्या—ग. ट. रा. [5] प्युत्पन्न—ठ. ड. [6] रूपपदं न—ट. ड.

धिकानिष्टप्रतिसन्धानरूपत्वात्तर्कज्ञानस्याप्रामाण्यमिति वर्धमानाद्युक्तं; तर्कः संदेहविपर्ययप्रमाविजातीयं ज्ञानान्तरं साच जातिः तर्कयामि न तु निश्चिनोमि इत्यनुव्यवसायसाक्षिकेति मणिकण्ठोक्तं च निरस्तम्। यद्यर्थाशिरस्के प्रमाणत्वस्योक्तत्वात्॥

किं च तर्कत्वस्य जातित्वे तर्कस्य त्वदङ्गीकृतं संशयनिवर्तकत्वं न स्यात्। ज्ञानस्य विरोधिविषयत्वेनैव[1] निवर्तकत्वात्॥

किञ्च जात्यैव निवर्तकत्वेऽ[2]नुमानानुग्राहकस्तर्को निरग्निकत्वानुमानस्य[3] च प्रतिबन्धिकामपि शङ्कां निवर्तयेत्। जातेः साधारण्यात्। न हि गौः किंचित्प्रत्यगौर्भवति। न च मण्यादि[4]वत्प्रतिनि-

संदेहेति। संशयविपर्ययप्रमाभ्यः विजातीयमित्यर्थः। उक्तत्वादिति। श्रृण्वित्यादिना ग्रन्थेनेति भावः। मणिकण्ठपक्षे दोषान्तरमप्याह—किं च त[5]र्कत्वस्येति। संशयेति। व्यभिचारसंशयेत्यर्थः॥

ननु तर्करूपज्ञानस्य जात्यैव संशयनिवर्तकत्वमास्त्विति वक्तारं प्रत्याह—किंचेति। ननु—जात्यैव निवर्तकत्वेपि मण्यादिकं जात्या प्रतिबन्धकमपि यथा दाहस्यैव न त्वन्यस्य एवं तत्तदीयतर्कस्तत्तदीय शङ्कानिवर्तको न सर्वसाधारण इत्याशङ्क्य निराह—न च मण्यादीति।

---

[1] तन्नि—क. ग. ट. रा.　[2] त्वेप्यनु—क. ट. रा.　[3] शब्दानित्यत्वानुमानस्य इत्यधिकम् क. ग. ट. रा.　[4] वज्जालेव प्र—ग ट. रा.　[5] र्कस्ये— ट. ड.

यतप्रतिबन्धकत्वम् । तत्रोद्देश[1] दाहत्वस्यैवात्र शङ्कात्वस्यैव प्रतिबध्यतावच्छेदकत्वं[2] चेदुक्तातिप्रसङ्गात् । तर्कविषय[3] विरोधिविषयशङ्कात्वस्य [4]तथात्वे तर्कस्यापि क्लृप्तेन शङ्काविषयविरोधिविषयत्वेनैव प्रतिबन्धकताया न्याय्यत्वात् । अन्यथा [5]घटज्ञानत्वादिकमपि जातिः स्यात् ॥

तस्मात्तर्कः [6]प्रमाणमेव । तत्रापि व्याप्तिसापेक्षत्वेन शाब्दत्वप्रत्यक्षत्वयोरसंभवेन परिशेषादनुमानमेव । परार्थे तर्के वादिवाक्यापेक्षा तु परार्थानुमान इव व्याप्त्यादिस्मारकत्वेन । न त्वागमत्वेनेति ॥

इति तर्कस्यानुमानान्तर्भावः ॥ १९ ॥

**तर्कविषयविरोधीति** । शङ्का व्यभिचारविषयिणी तर्कस्त्वव्यभिचारविषय इति विरोधिविषयशङ्कात्वस्येत्युक्तम् । **व्याघातत्वेति** । स्वक्रियाविरोधत्वादिकमित्यर्थः । तर्को ह्यनुमानवत्स्वार्थपरार्थभेदेन द्विविधः । स्वस्योत्पन्नशङ्कानिवर्तकः स्वार्थः । परस्य शङ्कानिवृत्तये प्रयुक्तः परार्थः । तत्र तर्कप्रयोक्तृवाक्यसापेक्षत्वात्तर्करूपज्ञानस्य शाब्दत्वं कुतो नेत्यत आह— **परार्थ इति**

इति तर्कस्यानुमानान्तर्भावः ॥ १९ ॥

[1] श्य–क. ग. रा. [2] त्वे उक्ता–ग. ट. रा. [3] यक–ग. रा. पुनर्विषयेत्यधिकम्–क. [4] स्य च–ग. ट. रा. [5] व्याघातत्वादि–ग. ट. रा. [6] र्कज्ञानं प्र–ग. ट. रा.

# अथ स्वमते तर्कस्योपयोगः ॥ १६ ॥

तर्कस्योपयोगस्त्वित्थम्—

तर्कनिवर्त्याप्रयोजकत्वशङ्का हि द्वेधा। पक्षतदितरसाधारण्येन सधूमोपि कश्चिन्निरग्निकोस्त्विति वा, पक्षादन्यत्र नियमेपि पक्षे समबलस्य प्रबलस्य वा साध्याभावप्रमाणस्याभिमानेन पक्ष एव सधूमो निरग्निकोस्त्विति वा। तत्राद्या व्यभिचारशङ्कारूपा लिङ्गपरामर्शात्प्राचीना द्वितीया तु प्रतिप्रमाणशङ्कारूपा तस्मादर्वाचीना॥

यद्यपि द्वितीयापि फलतो व्यभिचारशङ्कैव। तथाप्याद्या, पार्थिवत्वलोहलेख्यत्वादौ भूयोदर्शनादिके सत्यपि व्यभिचारदर्शनात्तन्निमित्तका स्वारसिकी[1]। पक्षतदितरसाधारणी च। द्वितीया

## अथ स्वमते तर्कस्योपयोगः ॥ १७ ॥

पद्धत्युक्तमुपयोगं विवृण्वान आह—**तर्कस्येति**। **तस्मादर्वाचीनेति**। परामर्शा[2]दनन्तरभाविनीत्यर्थः। उक्तयोः पक्षयो[3]रभेदमाशङ्क्य स्वारसिकत्वाधेयत्वाभ्यां भेदं साधयति—**यद्यपीत्यादिना**। **फलत इति**। हेतुमति साध्याभावशङ्कायां साध्याभाववति हेतुसत्त्वरूपव्यभिचारस्य फलितत्वादित्यर्थः[4]। **तन्निमित्तकेति**। बहुशः सहच-

[1] कपक्ष–ग. ग. [2] र्शानं–ट. ठ. [3] योः भेदमाक्षिप्य–ट. ठ. भेदमाशङ्कय–ड. [4] दिति भावः–ठ. ड.

तु प्रतिप्रमाणशङ्कानिमित्तकाधेया पक्षासाधारणीचेति भेदः ॥

द्विविधापि [1]तदाशङ्का तर्केण निरस्यते । अन्यथोपपत्तिविषयया शङ्कया प्रतिप्रमाणेन च [2]साक्षादनुपपत्तिप्रमापकस्य तर्कस्य विषयकृतविरोधस्य सत्त्वात् । तर्कस्य व्याघातपर्यन्ततया दृढमूलत्त्वेन शङ्काप्रतिप्रमाणाभासाभ्यां प्राबल्याच्च ॥

---

रितयोरपि यत्कचिद्व्यभिचारदर्शनं तेन निमित्तेनात्रापि धूमादौ तथेति ज्ञायमानेत्यर्थः । आधेया बलादुत्पाद्या । स्वरसवाहिन्याः परामर्शरूपविशेषदर्शननिरस्तत्वादिति भावः । **द्विविधापि शङ्का [3] तर्केण निरस्यत इति ।** केवलान्वयिसाध्यके साध्याभावाप्रसिद्धेरेवं शङ्कायाः एवानुदयात्तत्र तर्कस्योपयोगासंभवो न शङ्क्यः । सर्वस्य व्यतिरेकिधर्मत्वेन सिद्धान्ते केवलान्वयिनोऽभावादिति भावः ॥

निरासे को हेतुरित्यतो न मणिकण्ठोक्तदिशा जात्या, किंतु विरोधिविषय[1]त्वेनेति भावेनाह—**अन्यथोपपत्तीति** । साध्येन विना या उपपत्तिः संभवः तद्विषययेत्यर्थः । पक्षतदितरसाधारण्येन वा पक्ष एव वेति भावः । **विषयकृतेति** । अन्यथोपपत्त्यन्यथानुपपत्तिरूपविषयकृतेत्यर्थः । विरोधिविषयकत्वमात्रेण कथं निवर्तकत्वमित्यत आह—**तर्कस्येति** । तर्कस्य शङ्कापर्यन्तत्वाच्छङ्काया व्याघातपर्यन्तत्वाद्व्याघात-

---

[1] पिशङ्का—ग. ट. रा. [2] सहान्यथानुपपत्ति—ग. ट. रा. [3] शङ्कापदं न—ट ठ. [4] यकत्वे—ट. ड.

**निवर्त्यभेदान्निवर्तकस्तर्कोऽपि द्वेधा। तत्राद्योऽनुमितिकरणनिष्पादको द्वितीयस्तु निष्पन्नेन करणेन प्रतिप्रमाणशङ्कानिरासार्थमपेक्षितत्वेन फलोपकारकत्वादनुमानानुग्राहकः ॥**

**एतदेवाभिप्रेत्योक्तं पद्धतौ—'सोयं क्वचिद्विपरीतशङ्कानिरसनद्वारेण [1]करणस्यानुग्राहकोऽपि भवतीति। [2]क्वचिद्दशाविशेषे करणनिष्पत्तेरर्वाक् प्रतिप्रमाणशङ्कानिरसनद्वारेण करणश[3]रीरनिष्पादकश्च भवतीत्यर्थः ॥**

पर्यन्ततयेत्युक्तम्। शङ्का च प्रतिप्रमाणाभासश्च ताभ्यामित्यर्थः। **अनुमितिकरणेति।** व्याप्तिविशिष्टलिङ्गज्ञानरूपकरणेत्यर्थः। व्यभिचारशङ्कानिवृत्तौ व्याप्तिनिश्चयसंभवादिति भावः। **फलेति।** अनुमितिरूपफलोपकारकत्वात्। उपकारकत्वं प्रतिबन्धकनिवर्तकत्वम्। **एतदेवेति।** उक्तपक्षद्वयमेव। **प्रमाणान्तरेति।** [4]लिङ्गपरामर्शरूपप्रमाणान्तरेत्यर्थः ॥

नन्वत्र वाक्ये द्वितीयपक्षे[5] द्वितीयपक्ष एव प्रतिभाति न त्वाद्य इत्यत आह—अपीति। प्रमाणान्तरेत्यस्य प्रत्यक्षादि[6]कमर्थमुप-

[1] प्रमाणान्तरानु—क. ग. ट. रा. [2] 'अपिशब्दात् क्वचित्' इति, ततः "करणशरीर" इत्यादिकं चास्ति—क. ट. रा. [3] णस्यानुग्राहको भवति- अपिशब्दात्ततःप्राक् व्यभिचार शङ्कानिरसनद्वारेण शरीरनिष्पादकश्च (न) भवतीत्यर्थः—क. [4] ङ्गदर्शनरूपप्रमा—ड. [5] द्वितीयपक्ष इति नास्ति—ट. ठ. ड. [6] अशब्दरूपप्रमाणद्वयमर्थमुपे—ट. क्षमर्थमु—ठ.

यद्वा क्वचित्प्रत्यक्षादावनुग्राहको भवति । तत्र करण[1]निष्पादकत्वासंभवात् । अपिशब्दादनुमान उक्तरीत्योभयात्मकश्च भवतीत्यर्थः ॥

यद्वा क्वचिद्व्यभिचारस्य प्रतिप्रमाणस्य वा शङ्कायामनुग्राहकः करणनिष्पादनेन वा[2] निष्पन्नस्य[3] करणस्य सहकारितया वोपकारको भवति । अपिशब्दाच्छङ्काया अभावेन[4] तन्निवर्तकस्य तर्कस्यानपेक्षितत्वादननुग्राहकश्च भवतीत्यर्थः ॥

यद्वा क्वचिदद्रिरग्निमान्धूमवत्त्वादितिप्रयोग उक्तरीत्यानुग्राहको भवति । अपिशब्दात्क्वचित्स्व-

त्याह—**यद्वेति** । क्वचिदित्यनुवादः । प्रत्यक्षादाविति व्याख्या । अनुग्राहकपदमस्मिन्पक्षे युक्तमित्याह—**तत्रेति** । प्रत्यक्षशब्दयोरित्यर्थः । प्रमाणान्तरपदस्या[5]नुमानस्येत्यर्थमुपेत्य प्रकारान्तरेण पद्धत्यर्थमाह—**यद्वा क्वचिद्व्यभिचारस्येति** । क्वचिदित्यस्य शङ्कायामित्यन्वयः । सधूमो निरग्निकोऽस्त्विति व्यभिचारशङ्कायामित्यर्थः । द्वितीयपक्षानुरोधेनाह—**प्रतिप्रमाणस्य वेति**[6] । क्वचिदित्यस्यार्थमुक्त्वानुग्राहक इत्यस्यार्थमाह—**करणेति** । परामर्शरूपकरणेत्यर्थः । सहकारितया प्रतिबन्धकनिवर्तकतयेत्यर्थः । **उक्तरीत्येति** । करणनिष्पादनेन वेत्यादि-

---

[1] णानि—**क.** णशरीरनि—**ग. ट. रा.** [2] वानिष्पादनेन वा निष्प—**क.**
[3] न्नक—**ग. ट. रा.** [4] वेत—**ग. ट. रा.** [5] पक्षस्यानुवादस्यानुमानस्येत्यर्थमुपे—**ट.**
[6] स्यैवे—**ट. ठ.**

तन्त्रोऽपि भवति। अद्रिरग्निमान्न वेति विप्रतिपत्तौ साधनानुमानं विनैव यदि निरग्निकः स्यात्तर्हि निर्धूमः स्यान्न चायं निर्धूम इति तर्करूपानुमानेनैवाग्निसिद्धेः। न हि विधिमुखेन साधयित्वैव निषेधमुखेन साधनीयमिति कुलधर्म इत्यर्थः। उक्तं च टीकाकारैर्दूषणानुमानविभागप्रस्तावे। नायं निरग्निकोऽनिर्धूमत्वादिति। यद्वा क्वचिदुद्देश्यायां तस्मान्न निरग्निक इति प्रमायां साध्यायामनुग्राहको भवति। अपिशब्दान्निर्धूमत्वेनाङ्गीकर्तव्य इति प्रमायां वा [1]व्याप्तिप्रमायां वा

नोक्तरीत्यत्यर्थः। स्वातन्त्र्यं व्यनक्ति—अद्रिरिति। साधनेति अद्रिरग्निमान्धूमवत्त्वादित्यादिप्रकारं विनैवेत्यर्थः॥

नन्वाग्निमान्धूमवत्त्वादिति विधिमुखेनासाधयित्वा कथं निषेधमुखेनैव साधनमित्यत आह—न हीति। इत्यर्थ इति। अपिशब्दात्पद्धतिवाक्य[2]स्येत्यादिवाक्यव्याख्यावसर इति भावः। उक्तं चेति। प्रमाणलक्षणटीकाया[3]मात्माश्रये[4] योज्यम्। अनुग्राहको भवतीति। शङ्कानिवृत्तिद्वारेति भावः। प्रागुक्ताद्यान्त्यपक्षद्वयाभिप्रायेण क्रमेणाह—व्याप्तिप्रमायामिति[5]। इति प्रमायां वेति। ननु धूमवत्त्वादिसाधना-

[1] अत्र 'व्याप्तिप्रमायां वा' इत्यस्ति—क. ग. ट. ञ. [2] क्यस्येतियोज्यम् उक्तं च ञ. ठ. स्येति भावः—ड. [3] 'यां' इति, ततः अनुग्राहक इत्यादिकमेवास्ति—ड. [4]येत्यादिवाक्यव्याख्यावसरे—ट. श्रय इत्यादिवा—ड. [5] 'अङ्गीकर्तव्य इति' इत्यस्ति—ठ.

साध्यायां स्वतन्त्रश्च भवतीत्यर्थः । तस्माद्यथा-प्रमाणसंप्लवे द्वितीयं प्रमाणभूतमेव प्रथमप्रमाण-दार्ढ्यहेतुत्वेन प्रथमानुग्राहकम् । तथा तर्कोपि स्वयं प्रमाणमेव प्रमाणस्यानुग्राहकः । साधकं बाधकं वा प्रमाणमेव हि शङ्कानिवर्तकम् । न त्वप्रमाणम् । तर्कज्ञानस्य भ्रमत्वे हि व्याप्तियो-ग्यतादिभ्रमजन्यानुमितिशाब्दज्ञानादेरिव धारा-वाहिकभ्रमे द्वितीयानुगृहीतस्य प्रथमस्येव वा[1] प्रमाणतर्कानुगृहीतानुमितेरेवाप्रमात्वं स्यात् । अ-प्रमाणतर्कबाधितस्य प्रत्यनुमानस्यैव च प्रामाण्यं स्यात् ॥

इति स्वमते तर्कस्योपयोगः ॥ १६ ॥

---

नुमानफलभूतामग्निमत्त्वादिप्रमामेव विपर्यये पर्यवसानमुखेन जनयतस्त-र्कस्य कथं प्रामाण्यमित्याशङ्कां सदृष्टान्तं परिहरन्नुपसंहरति—**तस्मा-दिति** ॥

यद्वोक्तदिशा प्रमाणानुग्राहकस्य कथं प्रामाण्यम् । तथात्वेऽनु-ग्राहकत्वमेव न स्यादित्याशङ्कां सदृष्टान्तं[2] निरस्यन्नुपसंहरति—**तस्मादिति** । उक्तरीत्या प्रमाजनकत्वादित्यर्थः । शङ्कानिवर्तकत्वान्य-थानुपपत्त्या च तर्कस्य प्रामाण्यमित्याह—**साधकं हीति** । अप्रा-माण्ये[3] बाधकं चाह—**तर्कज्ञानस्येति** ॥

इति स्वमते तर्कस्योपयोगः ॥ १७ ॥

---

[1] व चाप्र–क. ट. रा. [2] परिहरन्नुप–ड. [3] ण्यबाध–ट. ट.

## अथ परमते तर्कोपयोगासंभवः ॥ १७ ॥

किञ्च परमते तर्कस्य किं विषय[1] विशोधन उपयोगः किं वा व्याप्तिग्रहे, आद्येपि किमुदयनरीत्या अनिष्टप्रसञ्जनत्वमात्रेणोपयोगः, किं वा वर्धमानरीत्या साध्याभावसन्देहनिवर्तनेन, यद्वा तज्जन्यसाध्याभावजिज्ञासानिवर्तनेन, अथवा तज्जन्यसाध्यजिज्ञासोज्जीवनेन। नाद्यः। अनिष्टप्रसञ्जनत्वमात्रेण तर्कोपयोगे शङ्काभावेऽपि तर्कापेक्षाप्रसङ्गात्। न द्वितीयः। सन्देहस्य तज्जन्यजिज्ञासयैव निवृत्तेः। निर्धूमत्वज्ञानस्य निरग्निकत्वसन्देहेन सह विषयकृतविरोधाभावेन तदनिवर्तकत्वाच्च। प्रत्युत निर्धूमत्वस्य साग्निकत्व-

---

### अथ परमते तर्कोपयोगासंभवः ॥ १८ ॥

नन्वस्तु भवदुक्तरीत्या तर्कस्योपयोगे सति प्रमाणत्वम्। न त्वेवम्। किं त्वन्यथैवोपयोगः। तत्र च तर्कस्याप्रामाण्येपि न दोष इत्यतस्तदुक्तोपयोगं खण्डयितुमाह—**किञ्चेति**। व्याप्तिग्राहकस्य विषयपरिशोधकस्य वेति परामर्शवादान्ते मण्युक्तेराह—**किं विषयेति**। **तज्जन्येति**। साध्याभावसंन्देहजन्येत्यर्थः। **तज्जन्य जिज्ञासयैवेति**।

---

[1] यपरिशोधने उ—**क. ग. रा.**

**निरग्निकत्वरूपकोटिद्वयसाधारण्येन तज्ज्ञानं सन्देहोपोद्बलकमेव। मन्मते तु विषयकृतविरोधः प्रागेवोक्तः ॥**

**किंच वह्निव्याप्ते[1] धूमे दृष्टे कथं वह्न्यभावसंदेहः। न च विशेषदर्शने सति स्वारसिकस्य वह्न्यभावसंदेहस्यासंभवेपि प्रतिप्रमाणाहिता तच्छङ्का युक्तेति वाच्यम्। प्रतिप्रमाणेऽनन्यथासिद्धे जाग्रति तर्कसहस्रेणापि तदाहितशङ्कानिवृत्त्ययोगात्। न च तर्कादेव प्रतिप्रमाणस्यान्यथासिद्धिः। त्वन्मते विषयकृतविरोधाभावादित्युक्तत्वात् ॥**

उत्तरात्मविशेषगुणानां पूर्वगुणनिवर्तकत्वादिति भावः। **कोटिद्वयसाधारण्येनेति**। निर्धूमत्वस्यायोगोलकादाविव साग्निकत्वेपि ह्रदादाविव निरग्निकत्वेपि सम्भवात् साधारण्येनेत्युक्तम्। भवन्मतेपि तर्हि निर्धूमत्वज्ञानाच्छङ्कानिवृत्तिर्न स्यादित्यत आह—**मन्मतेत्विति**। अन्यथोपपत्त्यन्यथानुपपत्तिरूपविषयकृतविरोधस्य संदेहतर्कयोः पूर्ववादे प्रतिपादितत्वादित्यर्थः। नन्वन्यथोपपन्नत्वशङ्काया धूमादिविषयायास्तर्केण निर्धूमत्वापादनरूपेण निरासेपि भिन्नविषयकसाध्यसन्देहस्य कथं निवृत्तिरित्यतो हेतोरन्यथोपपत्तिशङ्कानिवृत्त्यैव तदाहितः साध्यसंदेहो निवर्तत एव। प्रत्युत त्वन्मत एव तन्निवृत्तिरयुक्तेति भावेनाह—**किञ्चेति** ॥

यद्वा तर्कजन्यनिर्धूमत्वज्ञानं किं स्वारसिकसाध्यसंदेहनिवर्तनेनोपयुज्यते अथाहितसंदेहनिवर्तनेन नाद्यः। तस्यैवानुदयात्। नान्त्यः। विरोधिविषयत्वाभावात्। इत्याह—**किंचेति**। **उक्तत्वादिति**।

[1] प्येधू—**ट. रा.**

**न तृतीयः। ज्ञानस्य हीच्छानिवर्तकत्वमनिष्टतावच्छेदकधर्मप्रकारकत्वेनैव । अन्यथा प्रमेयत्वादिप्रकारकमपि विषा[1]दिज्ञानं तन्निवर्तकं स्यात् । न च निर्धूमत्वज्ञानं त्वन्मते निर्धूमतां तदापादकत्वेनानिष्टां निरग्नितां वाऽनिष्ट[2]तावच्छेदकधर्मतयोल्लिखति । तथात्वे तर्कस्य प्रामाण्यापातात् । किं तु पक्षनिष्ठतयैवेति कथं तर्केण निरग्निकत्वजिज्ञासानिवृत्तिः ॥**

---

प्रत्युतेत्यादिग्रन्थेनोक्तत्वादित्यर्थः । प्रतिप्रमाणं—साध्याभावविषयं तर्कज्ञानं तु निर्धूमत्वविषयमिति विरोधिविषयकत्वं नेति भावः । साध्याभावजिज्ञासानिवर्तनेनेति पक्षं निराह—**न तृतीय इति** । जिज्ञासा हि ज्ञानेच्छा । निर्धूमत्वज्ञानेन जिज्ञासानिवृत्तौ निवृत्तिप्रयोजकधर्माभावान्न सामर्थ्यमिति सामान्यन्यायोक्तिपूर्वमाह—**ज्ञानस्य हीति** । अनिष्टतायां यदवच्छेदकं अहित्वविषत्वकण्टकत्वादिकं तत्प्रकारकत्वे[3] नैवेत्यर्थः । अस्त्वेतदपि ज्ञानं तथेत्यत आह—**न चेति** । निर्धूमतामित्यत्राप्यनिष्टामित्यन्वेति । **नचोल्लिखतीति** । प्रमाणाविरुद्धत्वा[4]दरनिष्टतावच्छेदक[5]स्फुरणस्याननुभवादिति भावः । विपक्षे बाधकं चाह—**तथात्व इति** । अनिष्टमनिष्टता[6]वच्छेदकेनोल्लेखे सति वह्नित्वादिना वह्न्याद्युल्लेखिज्ञानस्येव प्रामाण्यं स्यादित्यर्थः ॥

ननु धूमं पश्यतः कथं निर्धूमत्वादिज्ञाने प्रमाणविरुद्धत्वादिकं न भायात् । न चैवं प्रामाण्यापातः अविद्यमानपक्षनिष्ठत्वभानादप्रामाण्य-

---

[1] षर्यादिज्ञा–**ग. ट. रा.** [2] त्वावच्छेदक धर्मवत्तया–**ग. रा.** [3] नेत्य–**ट. ड.** [4] द्यनिष्ट–**ठ.** [5] कत्वस्फु–**ठ.** [6] त्वाव–**ट. ठ. ड.**

किंच प्रमाणाविरुद्धनिर्धूमत्वापादकतया निरग्निकत्वमेवानिष्टं न तु तज्ज्ञानम्। तस्यारोपरूपत्वेन तदनापादकत्वात्। तथा च निरग्निकत्वविषयेच्छाया एव निवृत्तिः स्यात्। न तु तज्ज्ञानविषयेच्छारूपजिज्ञासायाः॥

किंचेच्छाविच्छेदकमनिष्टत्वं दुःखतत्साधनान्यतरत्वरूपं नत्वप्रामाणिकतदापकान्यतरत्वरूपम्। आप्तवाक्यादिना स्वस्य दारिद्र्यं निश्चितवतोपि धने औत्कण्ठ्यदर्शनात्। तथाचाप्रामाणि-

मस्त्विति चेदेवमपि निर्धूमत्वज्ञानेन निरग्निकत्वेच्छैव निवर्त्या नतु तज्ज्ञानेच्छारूपा जिज्ञासेत्याह---**किंचेति**। अनिष्टतावच्छेदकप्रकारकं ज्ञानमनिष्टविषयेच्छां निवर्तयति। सा च निरग्निकत्वेच्छैव। तस्या अनिष्टत्वात्। न तु तज्ज्ञानेच्छारूपा। जिज्ञास्यज्ञानस्यानिष्टत्वाभावादित्यर्थः॥

नन्वनिष्टविषयकत्वान्निरग्निकत्वज्ञानमप्यनिष्टमेवत्यतो विषयस्याप्यनिष्टत्वमभ्युपेत्योक्तम्। वस्तुतस्तदपि नेत्याह—**किंचेच्छेति**। **नचा**[1]**प्रामाणिकेति**। अप्रामाणिकत्वं वा, तदापादकत्वं वा, येन निर्धूमत्वमप्रामाणिकमिति निरग्निकत्वं च तदापादकमित्युभयमनिष्टं स्यादित्यर्थः। **धन इति**। तस्य स्वस्मिन्नप्रामाणिकत्वानिश्चयेप्यनिष्टत्वाभावात्प्रत्युतौत्कण्ठ्यरूपेच्छाविषयत्वेनेष्टत्वस्यैव दर्शनादित्यर्थः।

[1] न त्वप्रा–ठ.ड.

कनिर्धूमत्वापादके निराग्निकत्वे कथं शब्दसाम्यमात्रेणेच्छाविच्छेदं ब्रूषे ॥

किंच साध्याभावजिज्ञासा न साध्यानुमिति प्रतिबन्धिका। येन तन्निवृत्तये तर्कोऽपेक्ष्येत। सा हि साध्याभावविषयकज्ञानविषयिणी। न च साध्याभावविषयविषयकमपि साध्यज्ञानविरोधि। तथात्वे हि पक्षे साध्याभाव[1]ज्ञानमिति ज्ञानेनाप्यनुमितिः प्रतिबध्येत ॥

**शब्दसाम्यमात्रेणेति।** दुःखं तत्साधनं वा यथानिष्टमुच्यते तथा [2]प्रामाणिके तदापदके वाङ्गीकारानर्हत्वमात्रेणानिष्टपदमस्तीति शब्दसाम्यमात्रेणेत्यर्थः। निर्धूमत्वादिज्ञानेन ह्यनुमितिप्रतिबन्धकं निरस्यम्। साध्याभावजिज्ञासा तु न प्रतिबन्धकेति तन्निरासायासो व्यर्थ एवेत्याह—**किंचेति। इति ज्ञानेनापीति।** साध्याभावज्ञानविषयकज्ञानस्यापि स्वविषयज्ञानद्वारा साध्याभावविषयकत्वादिति भावः ॥

[3]मणिकण्ठे तु—साध्याभावमात्रविषयकजिज्ञासा ह्यनुमितिप्रतिबन्धिका। न तु साध्यतदभावोभयविषया। संशयेन चोभयकोटिकैव जिज्ञासा जन्यते। न तु साध्याभावमात्रकोटिका जिज्ञासा। तस्मिन्काले साध्याभावमात्रजिज्ञासोत्पत्तौ कारणाभावात्किं तन्निवर्तकतर्केणेत्युक्तम्। तत्र साध्याभावमात्रजिज्ञासाया अप्युक्तादिशा प्रतिबन्धकत्वाभावो ध्येयः ॥

---

[1] व विषयज्ञानेनापि—**ट**. वे ज्ञानमिति ज्ञानेना—**रा**. [2] था अ—**ड**. [3] अत एवेत्यधिकम्—**ठ**.

नापि चतुर्थः । निर्धूमत्वविषयस्य तर्कस्य भिन्नविषयत्वेनाग्निविषयकजिज्ञासोज्जीवकत्वायो - गात् । एतेन व्याप्तिग्रहे उपयोग इति द्वितीयोपि निरस्तः । निर्धूमत्वज्ञानस्य विषयकृतविरोधाभावादारोप[1]त्वेन ज्ञातत्वाच्च निरग्निकोस्त्विति शङ्कां प्रत्यविरोधित्वादिति दिक् ॥

एतदेवाभिप्रेत्योक्तं पद्धतौ विपरीतशङ्कानिरसनद्वारेणेति । न तूदयनादिरीत्यानिष्टप्रसञ्जकत्वा-

साध्याभावसंशयजन्यसाध्यजिज्ञासोज्जीवकत्वेन तर्कस्योपयोग इति पक्षं निराह—**नापि चतुर्थ इति । द्वितीयोपि [2]निरस्त इति ।** धूमत्वज्ञानं हि धूमस्य निरग्निकत्वरूपसाध्याभावसामानाधिकरण्यरूप-व्यभिचारज्ञाननिवृत्तिद्वाराऽव्यभिचरितसामानाधिकरण्यरूपव्याप्तिग्रहोप - योगीति वाच्यम् । ज्ञानस्य व्यभिचारज्ञाननिवर्तकत्वं तद्विरोधिविषयत्वेनैव । न च निर्धूमत्वज्ञानं साध्याभावसामानाधिकरण्यविरोधिविषयकं येन व्याप्तिग्रहोपयोगि स्यादिति भावेनाह—**निर्धूमत्वज्ञानस्येति ॥**

किंच त्वन्मते केवलान्वयिसाध्यकहेतुप्रयोगस्थळे साध्याभावाप्रसिद्ध्या मास्तु प्रमेयत्वमित्यादिशङ्कानुदयेन तत्र तन्निवर्तनासंभवात्कथं तत्र तर्कस्योपयोगः । अपि च तर्कस्यापि व्याप्तिसापेक्षत्वेन तर्काङ्गव्याप्तिज्ञानेपि तर्कापेक्षायामनवस्थापातेन न व्याप्तिग्रहोपयोगित्वं तर्कस्य स्यात् । यदि क्वचित्तर्केण विनापि व्याप्तिग्रहस्तर्हि व्यभिचारात्कथं तर्कस्य तदुपयोगित्वम् । सिद्धान्ते तु स्वतन्त्रप्रमाणत्वान्न व्याप्तिग्रह एवोपयोगः । उपयोगोपि बहुप्रकारेण प्रागेवोपपादित इत्याद्यनुसन्धायाह—**दिगिति ।**

---

[1] पितत्वेन–ग. ट. रा.

दिनेत्यर्थः । अत्र विपरीतशब्देन परमते स्वमत इव निवर्त्यायाः शङ्काया निवर्तकेन तर्केण सह विषयकृतो विरोधो नेति दर्शितम् ॥

इति परमते तर्कोपयोगासंभवः ॥ १७ ॥

## अथ परोक्तकेवलान्वयित्वलक्षणभङ्गः ॥१८॥

यच्च मणौ व्याप्तिर्द्वे[1]धा अन्वयव्यतिरेकभेदात् । ततश्चानुमानमपि केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात्त्रिविधम् । तत्र वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् । गगनात्यन्ताभावस्य केवलान्वयित्वार्थं वृत्तिमत्पद-

स्वमत इवांते । अन्यथापपत्त्यन्यथानुपपत्तिरूपाविरुद्धाविषयकत्वं यथा स्वमते तथा न परमत इत्यर्थः ॥

इति परमते तर्कोपयोगासंभवः ॥ १८ ॥

## अथ परोक्तकेवलान्वयिलक्षणभङ्गः ॥ १९ ॥

यत्तु पद्धतौ केवनान्वयिकेवलव्यतिरेकीत्यादिना परोक्तानुमानत्रैविध्यमनूद्य निरस्तं तद्विवरितुकामः तच्चानुमानं त्रिविधमित्यादिनामण्युक्तं निरसितुमाह—**यच्चेति** । **वृत्तिमदिति** । वृत्तिमान्यो[2]यमत्यन्ताभावस्तदप्रतियोगित्वमित्यर्थः । अत्र वृत्तिमानित्यनेन स्वसामानाधि-

[1] द्विविधा—ग. ट. रा. [2] न्योत्यन्ता—ट. ठ.

**मिति तन्न । गगनस्य केवलान्वय्यत्यन्ताभावप्रतियोगित्वे तुच्छत्वापातात् । न हि शशशृङ्गादेरपीतोन्यदसत्त्वमस्ति[1] । विस्तृतं चैतन्न्यायामृते ॥**

इति परोक्तकेवलान्वयित्व[2]लक्षणभङ्गः ॥ १८ ॥

---

करण्याविरोधिनीं या वृत्तिस्तद्वान्विवक्षितः । तेन संयोगात्यन्ताभावे नाव्याप्तिः । संयोगवृत्तेस्तदत्यन्ताभावसामानाधिकरण्याविरोधित्वादित्याहुः । एतच्च प्रमेयत्वाभिधेयत्वादावस्ति । तदत्यन्ताभावस्य[3] व्याघातभयेन क्वाप्यङ्गीकर्तुमशक्यत्वात् । सर्वस्याप्यन्योन्याभावप्रतियोगित्वादसंभववारणायात्यन्तपदम् । तर्हि तावदेवाऽस्त्वित्यतो दूषणसौकर्याय विशेषणकृत्यमाह—**गगनेति** । भावाभावयोरन्योन्यविरहरूपतया गगनात्यन्ताभावोपि गगनरूपात्यन्ताभावप्रतियोगीति तत्राव्याप्तं लक्षणं स्यादतो वृतिमादिति । गगनं चावृत्तिपदार्थस्तन्मत इति वृत्तिमदत्यन्ताभावो न गगनरूपः । किं तु घटात्यन्ताभाव एव । तथा च तदप्रतियोगित्वं गगनात्यन्ताभावेऽस्तीति नाव्याप्तिरिति । तस्यापि केवलान्वयित्वसिद्ध्यर्थं वृत्तिमत्पदमित्यर्थः । **न्यायामृत इति** । मिथ्यात्वनिरुक्तिभङ्गे प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वखण्डनप्रस्तावे तथा—

त्रिकालसर्वदेशीयनिषेधाप्रतियोगिता ।
सत्ताच्यतेऽध्यस्ततुच्छे तं प्रतिप्रतियोगिनी ॥

इति सत्त्वनिरुक्तिप्रस्तावे, असतोऽत्यन्ताभावप्रतियोगित्वसमर्थनप्रस्तावे चेति । भावः ॥

इति परोक्तकेवलान्वयि[4]लक्षणभङ्गः ॥ १९ ॥

---

[1] मपि–ग. रा. [2] यिल–ट. रा. [3] वव्या–ट. ड. [4] यित्वल–ट. ठ.

## अथ केवलव्यतिरेकिभङ्गः ॥ १९ ॥

केवलव्यतिरेक्यनुमानं च न युक्तम् । त्वन्मते व्याप्तिग्रहार्थं प्रतिज्ञावाक्यस्याबोधकत्वपरिहारार्थं [1]च विशिष्टज्ञानं विशेषणज्ञानपूर्वकमिति नियमार्थं [2]साध्यप्रसिद्धेरावश्यकत्वात् । केवलव्यतिरेकिणि च तस्या अभावात् ॥

---

## अथ केवलव्यतिरेकिभङ्गः ॥ २० ॥

केवलान्वयिधर्मलक्षणखण्डनेनैव केवलान्वयिसाध्यकमनुमानं निरस्तं मत्वाह—**केवलव्यतिरेकीति**[3] । यस्य धर्मस्य केवलं व्यतिरेको अभाव एव प्रसिद्धः न तु भावः स धर्मः केवलव्यतिरेकीति तादृशधर्मसाध्यकमनुमानमपि केवलव्यतिरेक्यनुमानमित्यर्थः । **व्याप्तीति** । साध्याप्रसिद्धौ तन्निरूपिततत्सामानाधिकरण्या[4]दिरूपव्याप्तिग्रहासंभवादिति भावः । **अबोधकत्वेति** । साध्यधर्मस्याप्रसिद्धौ तत्र शब्दस्य शक्तिग्रहायोगेनाव्युत्पन्नसाध्यपदघटितप्रतिज्ञावाक्यस्य बोधकत्वायोगादिति भावः । **विशिष्टेति** । व्यतिरेकिहेतुनोत्पन्नसाध्यविशेषण[5]कपक्षविशेष्यकविशिष्टज्ञानमनुमितेः पूर्वं साध्याप्रसिद्धौ विशेषणज्ञानपूर्वकं न स्यात् । तथा च तत्पूर्वकत्वनियमश्च निर्विकल्पकज्ञानवादिना त्वयाङ्गीकृत इति तद्रक्षार्थं साध्यप्रसिद्धिरावश्यकीत्यर्थः ॥

[1] च इति नास्ति–ट. रा. [2] च इत्यधिकम्–ट. रा. [3] क्यपीति–ट. क्यनुमानमपीति–ठ. [4] ण्यरू–ड. [5] णप–ट. ड.

**तत्र साध्यप्रसिद्धि[1]र्नैतावत्पक्षे केवलव्यतिरेकिवैयर्थ्यात् । नाप्यन्यत्र । तत्र हेतोर्वृत्तावन्वयित्वस्यावृत्ता[2]वसाधारण्यस्य [3]चापातात् ॥**

**नापि पक्षैकदेशे तेन नासाधारण्यम् पक्षादन्यत्र तदप्रसिद्धेः, नापि केवलव्यतिरेकवैयर्थ्यम् तस्य कृत्स्ने पक्षे साध्यप्रतीत्यर्थत्वादिति वाच्यम् । पृथिवीतराभिन्ने[4]त्यादौ पक्षस्यैकदेशसत्त्वेपि गगनमितर[5]भिन्नमित्यादौ तदभावात् । अंशे सिद्धसाधनाच्च । अभेदानुमान इव पक्षैकदेशस्य[6] निश्चितसाध्यकतयाऽन्वयदृष्टान्तत्वसम्भवेन केवलव्यतिरेकित्वभङ्गाच्च । पक्षभिन्नत्वेन विशेषणे च गौरवम् ॥**

---

कथमभाव इत्यतो भक्तिपादे साध्याप्रसिद्धेरदोषत्वोक्तिप्रस्तावे सुधोक्तरीत्याह—**तत्रेति** । केवलव्यतिरेकिणीत्यर्थः । व्यतिरेकवादे मणौ सिद्धान्ते कथितं निराह—**नापीति** । **इतरेति** । जलादी[7]न्यष्टद्रव्याणि गुणकर्मसामान्यविशेषसमवायाः पञ्चेतित्रयोदशपदार्था इतरपदार्थाः । **तदभावादिति** । तस्याखण्डत्वोपगमात्तार्किकैरिति भावः । **अभेदेति** । अयमेत[8]द्भिन्न एतद्वृक्षत्वादेतद्वृक्षवदित्यनुमान इवेत्यर्थः ॥

ननु पक्षादन्यत्र निश्चितसाध्यकत्वमेव दृष्टान्तत्वे प्रयोजकमित्यत आह—**पक्षेति** । नन्वस्तूक्तदिशा व्यतिरेकिणोन्वयित्वं तथापि न

---

[1] द्धिर्नता-ग. ट. रा. [2] त्तौ चासा-ट. ग. [3] स्यापा-ट. ग.
[4] न्नत्यत्र प-ग. ट. रा. [5] रेभ्योभि-क. [6] स्यैव-क. ग. ट. रा.
[7] दयोष्ट-ट. द्यष्ट-ठ. [8] तदभि-ठ. ड.

न चान्वयाप्रतिसन्धानदशायां केवलव्यतिरेकित्वमिति वाच्यम् । तथात्वेऽन्वयव्यतिरेकि[1]ण्यपि तत्प्रसङ्गात् । अन्वयाप्रतिसन्धाने स्वनिरूपितव्याप्तिज्ञानाभावेनानुमितिरेव नास्तीति वक्ष्यमाणत्वाच्च ॥

न च यत्रानित्ये वाङ्मनसे इत्यादौ पक्षतावच्छेदकनानात्वं तत्रैवांशे सिद्धसाधनम् । इह तु तदवच्छेदकं पृथिवीत्वमेकमेवेति वाच्यम् । उद्देश्यप्रतीतिसिद्ध्यसिद्ध्योरेव सिद्धसाधनतदभावौ प्रति तन्त्रतयास्य परिभाषामात्रत्वात् ॥

न च तह्युद्देश्यायाः पृथिवीत्वावच्छेदेनेतरभेदबुद्धेरंशेऽप्यभावान्नांशे सिद्धसाधनमिति वाच्यम् ।

केवलव्यतिरेकित्वभङ्ग इत्याशङ्क्य प्रत्याह—**न चान्वयेति** । इष्टापत्तिमन्वानं प्रत्याह—**अन्वयेति** । **स्वेति** । साध्यनिरूपितेत्यर्थः । **वक्ष्यमाणत्वादिति** । अत्रैवोत्तरत्र किंचाभावगतया व्यतिरेकव्याप्त्या कथं भावस्य गमकत्वमित्यादिनेति भावः । मण्याद्युक्तमेवांशतः सिद्धसाधनतादोषोद्धारमाशङ्क्य निराह—**न च यत्रेति** । **तत्रैवेति** । पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिर्ह्यनुमानफलम् । नानात्वस्थले चैकावच्छेदेन साध्यसिद्धावप्यनुमानफलस्य जातत्वात्पुनरन्यावच्छेदेनाप्यनुमित्युत्पादनार्थमनुमानाप्रवृत्तेरिति भावः । **एकमिति** । तथा च घटाद्यंशे घटत्वाद्यवच्छेदेन साध्यसिद्धावपि पृथिवीत्वरूपपक्षतावच्छे-

[1] किणोपि—ट. रा.

निश्चितसाध्यकत्वेन संदेहसिषाधयिषयोरभावेनैक-देशस्य त्वन्मते पक्षत्वायोगात् ॥

न च घटस्य घटत्वेनेतरभेदनिश्चयेपि पृथिवी-त्वेन तत्संदेहादिकमिति[1] वाच्यम् । विशेषाकारे-णेतरभेदनिश्चये सति सामन्याकारेण तत्संदेहस्य तद्विशेषेतरविशेषविषयत्वनियमात्। अन्यथैतत्पर्व-तत्वेन वह्निमत्तया निश्चये[2]पि पर्वते पर्वतत्वेन तत्संदेहापत्त्या तत्र वह्न्यर्थिनो निष्कम्पप्रवृत्तिर्न स्यात् ॥

नापि पक्ष एव संदेहरूपा साध्यप्रसिद्धिः

दकसामानाधिकरण्येनेतरभेदरूपसाध्यासिद्ध्या तत्रानुमित्युदयार्थमनुमान-प्रवृत्तिसंभवान्न तत्र दोष इति भावः । पक्षत्वायोगादिति । तथाच केवलव्यतिरेकिणोऽन्वयित्वमेव प्राप्तमिति भावः । संदेहसिषाधयिषयो-रभावेनेत्ययुक्तमित्याशङ्क्य निराह —न चेति । यद्यपत्युक्तमेव दोष-माह—विशेषेति । तद्विशेषेतरेति । घटादिरूप[3]विशेषेतरपृथिवी-विषयकत्वनियमादित्यर्थः । ज्ञानयोः समानप्रकारकत्वेनैव निवर्त्यनिव-र्तकभाव इति न्यायस्य सामान्यविशेषप्रकारान्यपरत्वमिति भावः ॥

एवं मणिकृदभिमतं पक्षैकदेशसाध्यप्रसिद्धिपक्षं निरस्योद-यनाद्यभिमतं मणावनूद्य निरस्तमपि मण्युक्तदोषे तद्व्याख्यातॄणां वि-वादभावात्स्वयं दृढदोषविवक्षया संशयरूपसाध्यप्रसिद्धिपक्षमाशङ्क्य निराह —नापीति । जलादित्रयोदशपदार्थान्योन्याभावानामेकत्राप्र-

[1] कमस्तीति—क. ग. ट ञ. [2] श्चेतापि—ट ग. [3] 'पृथिवी' इत्य-धिकम्—ग.

**एवं च नान्वयित्वादेकम् पक्षैकदेशेऽप साध्यानिश्चयात् नाप्यसाधारण्यम् सपक्षाभावात् नापि व्यतिरेकिवैयर्थ्यम् तस्य निश्चयार्थत्वादिति वाच्यम्। साध्यकोटेरप्रसिद्ध्या संदेहस्यैवायोगात्॥**

**न च तेजोभिन्ना पृथिवी जलादिद्वादशभिन्ना न वेति तेजोभिन्नधर्मिकजलादिद्वादशभिन्नत्वकोटिकसंशयेनार्थात्त्रयोदशभिन्नत्वरूपसाध्यप्रसिद्धिर्युक्तेति वाच्यम्। संशयस्यासार्वत्रिकत्वात्। संशयरूपसाध्यप्रसिद्धेर्मयापि स्वीकाराच्च[1]। शशीय**

सिद्ध्या संदेहायोगेऽपि तेष्वभावेष्वेकस्तेजोन्योन्याभावो जले प्रसिद्धः, पृथिवी तेजोभिन्ना न वेति संशयेन पृथिव्यामेव वा प्रसिद्धः। जलादि तेजोन्यद्वादशपदार्थान्योन्याभावास्तेजसि प्रसिद्धाः। एवं च तत्रैकं पक्षभूतधर्मिविशेषणं कृत्वान्यकोटिकसंशयोत्पादे किमपि न बाधकमित्याशङ्क्य निराह **न च तेजोभिन्नेति। असार्वत्रिकत्वादिति।** तथा च यत्र न संदेहस्तत्राप्रसिद्धिर्दुर्वारेति भावः।

ननु संदिग्धे न्यायप्रवृत्तेः संशयः सार्वत्रिक इति चेत्। सिद्धेऽपि सिषाधयिषयानुमानप्रवृत्तेः। एवमपि[2] त्वदुक्तरीत्या संशयस्य सात्मकत्वाद्यखण्डसाध्ये[3]ऽयोगाच्च। घनगर्जितादिस्थळे[4] संदेहाभावेऽप्यनुमितिदर्शनाच्चेति भावः। **मयापीति।** व्यतिरेकी नेति वदतापीत्यर्थः। यद्वा व्यतिरेकिणि साध्यप्रसिद्धिवादिनापीत्यर्थः। तथा च

[1] कृतत्वाच्च—क. ट. रा.　[2] वंचत्व—ट. वंत्व—ठ.　[3] ध्येतदयो—ठ.
[4] ळे असंदेहे—ठ.

कर्णादौ शशीयमिदं शृङ्गं न वेति संदेहेन शशशृङ्गस्यापि प्रसिद्धिप्रसङ्गाच्च । विशेषणनिश्चयजन्यविशिष्टनिश्चयरूपानुमित्यङ्गभूतायाः साध्यतावच्छेदकत्रयोदशभिन्नत्वप्रकारिकाया निश्चयरूपप्रसिद्धेरभावाच्च ॥

न च तर्हि पक्षादन्यत्रैव त्रयोदशसु त्रयोदशभेदानां विशकलितानां निश्चयरूपा प्रसिद्धिरस्तीति नाप्रसिद्धाविशेषणत्वादीति वाच्यम् । जीवच्छरीरजातं सात्मकमित्यादावखण्डसाध्यक उक्तप्रकारासंभावात्[1] । त्रयोदशसु साध्यप्रसिद्धौ तत्र साध्या-

---

तादृशं प्रति निश्चयरूपसाध्यप्रसिद्धिरेव वाच्येति भावः । **शशशृङ्गस्यापीति** । भूतलं शशशृङ्गवदित्यप्यनुमानं स्यादिति भावः । **साध्यतेति**[2] । साध्यतावच्छेदकं यत्त्रयोदशाभिन्नत्वं तत्प्रकारिकाया इत्यर्थः । अथवेत्यादिना मण्युक्तं पक्षान्तरमाशङ्क्य निराह—**न चतर्हीति** । त्रयोदशसु जलादिसमवायान्तेषु त्रयोदशस्वित्यर्थः । **विशकलितानामिति** । जले तेजःप्रभृतिद्वादशान्योन्याभावाः प्रसिद्धाः । जलान्योन्याभावश्च तेजःप्रभृतिषु । तथा जलादिद्वादशान्योन्याभावास्तेजसि । तेजोन्योन्याभावोन्यत्रेत्येवंरूपेणेत्यर्थः । यद्वा त्रयोदशपदार्थानामन्योन्याभावानां जलभेदस्तेजसि तेजोभेदो जले इत्येवंरूपेण प्रसिद्धिरित्यर्थः । आदिपदेन व्याप्त्यग्रहादिग्रहः । **तत्र साध्याभावस्यासत्त्वेनेति** ।

[1] 'शशशृङ्गोल्लिखितावयीत्यादावपि विशकलितानां शशादीनां प्रसिद्धत्वाच्च'—इत्यधिकम्—**ग.** 'शशशृङ्गोल्लिखिता भूरित्यादावपि विशकलितानां प्रसिद्धेः सुवचत्वात्' इत्यस्ति—**ट.** [2] साध्यतेति इति न—**ट. ठ.**

**भावस्यासत्त्वेन व्यतिरेकव्याप्तिग्रहासंभवाच्च ॥**

**किंचैकेनैव लिङ्गेनैकदा साध्यमाना अपि [1]त्रयोदशभेदाः प्रत्येकनिरूपितत्रयोदशव्याप्तिभिरेव साधनीयाः। न तु मिलितानिरूपितैकव्याप्त्या। मिलिताप्रसिद्धौ तदज्ञानात्। तथा च प्रत्येक-**

यत्र त्रयोदशानामन्योन्याभावानामभावस्तत्र पृथिवीत्वाभाव इति हि व्यतिरेकव्याप्तिर्जलादौ प्रदर्शनीया। तत्र जले जलान्योन्याभावाभावस्य सत्त्वेति तेजःप्रभृतिप्रतियोगिकानां द्वादशभेदानामभावस्यासत्त्वेन साध्याभावस्याभावात्। एवं तेजःप्रभृतिष्वपीति कथं व्यतिरेकव्याप्तिग्रह इत्यर्थः ॥

नन्वेकसत्त्वेपि द्वयमिह नास्तीति प्रतीत्या द्वित्वावच्छिन्नप्रतियोगिताकाभाववत्त्रयोदशत्वावच्छिन्नजलाद्यन्योन्याभावनिष्ठप्रतियोगिता—काभावो जलादौ भविष्यतीति नानुपपत्तिरिति चेन्न। व्यासज्यधर्मावच्छिन्नप्रतियोगिताकाभावस्य व्याप्तिवादे मणिकृता निरासेन मणिकृन्मते तदभावात्। प्रतीतेरन्यतराभावविषयत्वेनोपपत्तावतिरिक्ताभावकल्पनायोगाच्च ॥

ननु—यन्मते तादृशाभावस्वीकारस्तन्मतरीत्यायं पक्षो मणावुक्त इति चेन्न। तन्मतस्यैव गौरवेण दूष्यत्वादिति भावः। अभ्युपेत्यापि दोषमाह—**किंचेति**। प्रत्येकप्रतियोगिकाभावनिरूपितेत्यर्थः। व्यतिरेकिण्यन्वयव्याप्तेरभावात् मिलितनिरूपितेति। यत्र त्रयोदशान्योन्याभावानामभावस्तत्र पृथिवीत्वाभाव इत्येवं रूपेण मिलितप्रतियोगिकाभावनिरूपितैकव्याप्तयेत्यर्थः। **तदज्ञानादिति**। मिलिताप्रसिद्धौ मिलि-

[1] पिहित्र—क. ट. रा.

मेव साध्यता विश्रान्तेत्येकैकभेदरूपसाध्यवतो जलादेरेव सपक्षत्वेन ततो व्यावृत्तत्वेन[1] हेतोरसाधारण्यतादवस्थ्यम् ॥

ननु—प्रत्येकव्याप्त्या प्रत्येकभेदसाधनेपि नासाधारण्यम् । अनुमितिविषयसाध्यवद्व्यावृत्त्या हि तद्भवति । अन्यथा दृष्यानुमित्यविरोधित्वेनासाधारण्यस्य प्रतिपक्षोन्नायकत्वं न स्यात् । न च प्रकृतेऽनुमितिविषय[2] मिलितभेदरूपसाध्यवानन्योस्ति । येन तद्व्यावृत्त्याऽसाधारण्यं स्यादिति चेन्न । [3]प्रत्येकभेदवद्व्यावृत्तेरपि स्वसाधितप्रत्येक-

तत्प्रतियोगिकाभावव्याप्त्यज्ञानादित्यर्थः । यद्वा व्यतिरेकव्याप्तिरेतादृशस्थळे न वाच्या । किं त्वन्वयव्याप्तिरेव । न च मिलितसाध्याप्रसिद्ध्या तन्निरूपितैकव्याप्त्यज्ञानमिति वाच्यम् । प्रत्यकाभावानां प्रत्येकनिरूपितान्वयव्याप्तिभिरेव तावतां भेदानां साध्यत्वादिति भावेनायं ग्रन्थः प्रवृत्त इति यथान्यास एव ग्रन्थः साधुरिति [4]ज्ञेयम् ॥

पक्षधरमतमाशङ्कते — **नन्विति** । **अन्यथेति** । अनुमिति विषयैकदेशवद्व्यावृत्तिमात्रेण [5]साधारण्येऽनुमितिविषयाभावविषयकत्वात्सत्प्रतिपक्षतया दोषत्वं न स्यादित्यर्थः । अनुमितिविषयवतो व्यावृत्तत्वमेव पृथिवीत्वहेतोरस्त्वित्यत आह — **न च प्रकृत इति** ॥

नरहर्याद्युक्तदोषेण निराह — **प्रत्येकेति** । साध्यतावच्छेदकं व्यासज्यवृत्तिधर्ममादायासाधारण्याभावमाशङ्क्याप्रसिद्धविशेषणत्वेन

---

[1] त्तस्य हे—ग. ट. रा. [2] यभे—ग. ट. [3] 'प्रत्यक्षभेदवचनप्रवृत्तेरपि स्वसा' इत्यस्ति—ग. रा. [4] ध्येयम्—ड. [5] णासा—ठ. ड.

भेदाभावद्वारेण भेदमेलनाविघटकतया दूष्यानुमितिविरुद्धत्वात् ॥

किंचास्मिन्पक्षे भेदमेलनं पक्षधर्मताबललभ्यम्। न च तद्बललभ्यसाध्यवद्व्यावृत्त्याऽसाधारण्यं युक्तम् । तथात्वेऽनुमानफलस्य निष्पन्नतया[1]साधारण्यस्याकिंचित्करत्वापातात् ॥

अथ — साध्यतावच्छेदकावच्छिन्नसाध्यवद्व्यावृत्त्यैवासाधारण्यम् । प्रकृते च साध्यतावच्छेदकं भेदगतं व्यासज्यवृत्तित्रयोदशत्वम् । तच्च न प्रत्येक[2]परिसमाप्तम् । ततः प्रत्येकभेदवद्व्यावृत्तावपि नासाधारण्यमिति चेन्न । एवमसाधारण्यपरिहारेपि त्रयोदशत्वपर्याप्त्यधिकरणत्वरूपसाध्यतावच्छेदकावच्छिन्नसाध्याप्रसिद्धेरप्रसिद्धविशेषणत्वतादवस्थ्यात् । जलादौ स्वस्माद्भेदाभावेपि तेज आदिद्वादशभेदानां सत्त्वेन त्रयोदशभेदाभावरूपसाध्यव्यतिरेकाभावेन व्यतिरेकव्याप्तिग्रहानुपपत्तेश्च ॥

ननु घटस्य सत्त्वेपिपटाभावेन घटपटौ न स्त इतिवज्जले द्वादशभेदेषु सत्स्वपि जलाद्भेदाभावेन व्यासज्यवृत्तिप्रतियोगिताकत्रयोदशभेदाभावोस्ती-

निराह—अथेत्यादिना । व्यासज्यवृत्तिप्रतियोगिकाभावोन्यो नेत्युपेत्य व्याप्यत्वभावदोषं चाह—जलादाविति । व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावोऽन्योस्तीतिवादी शङ्कते—नन्विति । व्यासज्येति ।

[1] तथा अ-ट. [2] पर्याप्तमिति शोधितमस्ति-ट.

ति चेन्न । पृथिव्यां जलात्मकत्वे सत्यपि तेज आद्यनात्मकत्वमात्रेण त्रयोदशान्योन्याभावोपपत्त्यार्थान्तरात् । लाघवेन प्रतियोगिसत्त्वमात्रमभावविरोधी[1]ति वदता त्वयैव व्यासज्यवृत्ति[2]प्रतियोगिकाभावानङ्गीकाराच्च । घटे सत्यपि घटपटौ नस्त इति धीस्तु घटे पटसाहित्याभावविषयेति त्वयैवोक्तम् ॥

तस्मादप्रसिद्धविशेषणत्वांशे[3] सिद्धसाधनत्वा[4]न्वयित्वासाधारण्यानामन्यतरद्दुर्वारम् ॥

व्यासज्यवृत्तिः अनुगतवृत्तिमान्यः तादृशधर्मावच्छिन्ना प्रतियोगिता यस्य तादृशो यस्त्रयोदशभेदानामभाव इत्यर्थः । **जलात्मकत्वे सत्यपीति ।** पृथिव्यां जलादित्रयोदशपदार्थतादात्म्याभावरूपास्त्रयोदशभेदाः साध्यन्ते तत्सिद्धिर्न स्यात् । जलतादात्म्ये सत्यपि तेजःप्रभृतिद्वादशपदार्थतादात्म्यानामभावमात्रेण त्रयोदशत्वरूपव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्रयोदशतादात्म्यानामभावसिद्ध्यापि साध्यपर्यवसानसंभवेन जलभेदासिद्ध्याऽर्थान्तरदोषः स्यात् । अतो न तादृशोऽभावोऽङ्गीकर्तुं शक्य इति प्रागुक्तव्याप्तिग्रहानुपपत्तिः सुस्थेति भावः । किंच प्रतियोगिसत्त्वस्थले तादृशाभावो विरोधान्नाङ्गीकार्यः । न च यावत्प्रतियोगिसत्त्वमभावविरोधि, नत्वेकप्रतियोगिसत्त्वं, व्यासज्यवृत्तिस्थळे चैकप्रतियोगिसत्त्वमेवेति वाच्यम् । तस्य गुरुत्वादिति भावेनाह---**लाघवेनेति । इति वदतेति ।** व्याप्तिवादे । त्वया मणिकृता । **अन्यतरदिति ॥**

[1] घटे सत्यपि घटपटौ नस्त इति धीस्तु घटपटसाहित्याभाव विषयेति वदता त्वयैव व्यासज्यप्रतियोगिताकाभावानङ्गीकाराच्च तस्मादप्र इत्यस्ति--**ग. रा. क.**
[2] धर्मेत्यधिकम्--**क.** [3] शासि--**ग. रा.** [4] अन्वयित्वेति नास्ति--**ग. ट. रा.**

न चासाधारण्यस्य सत्प्रतिपक्षवाद्विपक्षे बाधकाभावदशायामेव दोषत्वात्प्रकृते च विपक्षे बाधकस्य सत्त्वा[1]त्तस्यादोषत्वमिति वाच्यम् । तथापि सपक्ष[2]सत्त्वेनाविद्यमानसपक्षत्वरूपकेवलव्यतिरेकित्वभङ्गात् ॥

एतेन जलत्वादित्रयोदशधर्मसंसर्गात्यन्ताभावाः साध्याः । ते च पक्षैकदेशे घटादौ मिळिता वा पक्षादन्यत्र विशकलिता वा घटादौ जलत्वं नेत्यादिप्रत्यक्षेण सिद्धा इति निरस्तम् । उक्तरीत्यान्वयित्वासाधारण्यान्यतरापत्तेर्दुर्वारत्वात् ॥

यद्यप्यन्यतममिति वक्तव्यम् । द्वयोरेव डतरचो विधानात् । अन्यतरान्यतमशब्दयोरखण्डत्वेपि द्विबहुविषयत्वेन व्यवस्थितत्वस्य पस्पशाह्निके कैय्यटेऽभिधानात् । तथापि त्रयाणां मध्ये द्वयमे[4]कीकृत्य द्वित्वसंपादनेनान्यतरदिति साध्विति ध्येयम् ॥

असाधारण्यदोषोद्धारमाशङ्क्य दोषान्तरमाह—**न चेति । प्रकृते चेति**[5] । इतरभेदसाध्यकपृथिवीत्वहेतौ हेतूच्छित्त्यादिविपक्षबाधकस्येत्यर्थः । **सपक्षस्येति** । प्रत्येकं त्रयोदशाभावानां साध्यत्वेनाभिमतानां जलादित्रयोदशसु प्रसिद्धत्वेन तेषामेव सपक्षत्वादिति भावः । योपि मणावन्येत्वित्यादिना तत्तदसाधारणधर्मात्यन्ताभावाः साध्या इत्यत्यन्ताभावसाध्यकपक्ष उक्तः तमपि निराह—**एतेनेति । सिद्धा इति** । अतो नाप्रसिद्धविशेषणत्वमिति भावः । **उक्तरीत्येति** । "पक्षैकदेशस्य

---

[1] त्वान्न तस्य दोषत्वमि–क. ग. ट. रा.　[2] क्षस्य स–ट. रा.
[3] त्वादि–ट.　[4] मेकराशी–ठ. ड.　[5] प्रकृते चेति इति न–ठ.

**ननु तर्हि जलं[1] तेजःप्रभृतिद्वादशभिन्ननिष्ठ-भेदप्रतियोगि द्रव्यत्वात्तेजोवदित्यनुमानेन वा व्याघातदण्डभयेन वा सामान्यतः [2]प्रसिद्धं त्रयोदशभिन्नत्वं पृथिव्यां साध्यते। ततो नान्वयि-**

घटादेर्निश्चितसाध्यकतयाऽन्वयदृष्टान्तत्वसंभवेने" त्यादिनोक्तरीत्यान्वयि-त्वस्य, तथा 'किंचैकेनैव लिङ्गेने'त्यादिनोक्तरीत्यासाधारण्यस्य[3] चेत्यर्थः। प्रत्येकमेवात्यन्ताभावानां साध्यत्वात्तेषां च प्रत्येकं जलादावेव प्रसिद्धेस्तत्र च हेतोरवृत्तेः। अनुमितिविषयसाध्यवद्व्यावृत्त्याह्यसाधारण्यमिति जयदेव-पक्षस्य च निरासादिति भावः। यदपि मणौ' 'यद्वा जलं तेजः प्रभृति-द्वादशभिन्नप्रतियोगिकान्योन्याभाववदित्या"दिना सामान्यतः [4]प्रसिद्धि-संपादकमनुमानमुक्तम् तदप्याशङ्क्य निराह—**ननु तर्हीत्यादिना** ॥

यद्यपि मणावन्यथैव साध्यनिर्देशः कृतः तथापि तत्र यथाश्रुते तेजःप्रभृतिद्वादशनिरूपितभेदाधिकरणे जलभेदासिद्ध्या सिषाधयिषितत्र-योदशपदार्थनिरूपितभेदानामेकत्राप्रसिद्धे(द्धि)रेव। अतस्तद्व्याख्यातृभि-र्व्यत्यासेन योजितस्य साध्यनिर्देशस्यायमनुवाद इत्यदोषः। तेजःप्रभृतयो ये द्वादशपदार्थास्तद्भिन्नं यद्वस्तु तन्निष्ठो यो भेदस्तत्प्रतियोगीति साध्यार्थः। तथा च जलभेदस्तेजःप्रभृतिद्वादशपदार्थभेदाश्चैकत्रैव सामान्यतः सिद्धा इति अनुमानेन वा सिद्धं त्रयोदशभिन्नत्वमित्यन्वयः। प्रामाण्यवादे प्रामाण्यानुमितिसिद्ध्यर्थं प्रामाण्यप्रसिद्धिसंपादकतया मण्याद्युक्तं तुल्य-न्यायत्वादिहाप्याशङ्कते—**व्याघातेति**। साध्याप्रसिद्धौ त्रयोदशा-न्योन्याभावरूपसाध्यं न प्रसिद्धमितिनिषेधायोगेन निषेधता पुरुषेण साध्यं सामान्यतोऽवगतमेवेति न प्रसिद्धमित्युक्ताविदं नाभिधेयमित्युक्ति-

[1] लेते—**ट. रा.** [2] तः सि—**ग. ट. रा.** [3] स्येत्यर्थः—**ठ.** [4] न्य प्र—**ट. ड.**

त्वमसाधारण्यं वा । सांमुग्ध्येन साध्यसिद्धावपि पक्षो वा पक्षादन्यो वाय साध्यवानिति व्यक्ति-विशेष[1]निश्चयाभावादिति चेन्न । व्यक्तिविशेषा-निश्चयेपि व्यतिरेकिप्रवृत्तेः प्रा[2]कश्चित्साध्यवानिति निश्चये तस्यैव सपक्षत्वेन व्यतिरेकित्वभङ्गात् । अन्यथोपाधि[3]ना क्वचिद्व्याप्तिभङ्ग इति निश्चयेपि अत्रेति व्याप्तिभङ्गस्थळाविशेषस्यानिश्चयात् सोपा-धिकोपि सद्धेतुः स्यात् ॥

अथ–यदनङ्गीकारेऽनिष्टप्रसक्तिः तत्प्रामाणिक-मिति नियमात् प्रकृतसाध्यानङ्गीकारे चानिष्ट-प्रसक्तेः सत्त्वात् साध्यस्य सामान्येन प्रामाणिकत्वे सिद्धे प्रमाणविशेषजिज्ञासायां व्यतिरेक्युपन्यास इति नकोपि दोष इति चेन्न । प्रामाणिकत्वेनैवार्थे

वद्व्याघातरूपदण्डभयेनेत्यर्थः । कथं नान्वयित्वादिकमित्यतो मण्युक्त-रीत्यैव व्यनक्ति–सांमुग्ध्येनेति । अयं पृथिव्यादिरित्यर्थः । अन्वयित्वा-साधारण्ययोरभावेपि यदसपक्षत्वं व्यतिरेक्यनुमानस्य लक्षणमुक्तं तद्भम-मित्याह–व्यक्तिविशेषेति । अनिष्टप्रसक्तेरिति । जलादिवैधर्म्य-गन्धाद्युपलम्भहानिरूपानिष्टप्रसक्तेरिति, पृथिवीरूपवस्तुहानिरूपानिष्ट-प्रसक्तेरिति वार्थः ॥

एवं मण्याद्युक्तसाध्यप्रसिद्धिप्रकारं अनुसृत्य व्यतिरेक्यनुमानं निरस्येदानीं व्यतिरेकव्याप्तेः प्रकृतसाद्ध्यसिद्धौ अनुपयोगा " न हि भावेन भावसाधने अभावेनाभावस्य व्याप्तिरुपयुज्यते " इत्यादि पद्धत्या-

[1] षानिश्चयादि–ग. ट. रा. [2] क्वचि–ट. रा. [3] धेने–ट.

[1]निश्चिते प्रमाणविशेषजिज्ञासायाः विशेषगतविशेषजिज्ञासाया इव वैयर्थ्यात्। प्रमाणसामान्येन साध्यवत्तया निश्चितस्यापि सपक्षत्वेन केवलव्यतिरेकित्वभङ्गाच्च ॥

तस्मान्न व्यतिरेक्यनुमानं युक्तम्। किंचाभावगतया व्यतिरेकव्याप्त्या कथं भावस्य गमकत्वम् ॥

ननु गमकत्वेऽन्वयव्यतिरेकव्याप्त्यनुगतं व्याप्तित्वमेव तन्त्रम्। नत्वन्वयव्याप्तित्वम्। गौरवात् इति चेन्न। तथात्वे धूमगतया वह्निव्याप्त्या कृतकत्वस्यानित्यत्वगमकत्वापत्त्या स्वानिष्ठव्याप्तित्व तन्त्रमिति वक्तव्यत्वेनाभावनिष्ठव्याप्त्या भावस्य गमकत्वायोगात् ॥

नन्वन्वयिनि स्वनिष्ठा व्याप्तिस्तन्त्रम्। व्यतिरेकिणि त्वभावगता। न चातिप्रसङ्गः। प्रतियोग्यनुयोगिभावस्य नियामकत्वादिति चेन्न। व्याप्यं लिङ्गमिति लिङ्गलक्षणस्य व्यतिरेकिण्य [2]व्याप्त्यापातात् ॥

यु[3]क्तं हृदिकृत्वा प्रकारान्तरेण व्यतिरेकिणं निराह—**किं चाभावगतयेति**। **न चातिप्रसङ्ग इति**। धूमनिष्ठया व्याप्त्या कृतकत्वस्यानित्यत्वगमकत्वप्रसङ्ग इत्यर्थः। **प्रतियोगीति**। व्याप्यव्यापकभावापन्नाभावयोर्हेतुसाध्ययोश्च प्रतियोग्यनुयोगिभावस्येत्यर्थः। **व्यतिरेकिणीति**।

[1] निश्चिते इति नास्ति—**ग. ट. रा.** [2] व्याप्यव्या—**ग.** [3] युक्ति—**ठ. ड.**

[1]न च स्वनिरूपितव्यभिचारविरोधित्वरूपं वा स्वनिरूपितव्याभिचारधीप्रतिबन्धकधीविषयत्वरूपं वा व्याप्तिमत्त्वमुभयानुगतमिति वाच्यम्। स्वनिरूपितव्याप्त्यपेक्षयाऽस्य गुरुत्वात्। [2]एतदज्ञानेप्यनुमित्युत्पत्तेरनुभवा[3]च्च। साध्यसाधनसामानाधिकरण्यगर्भितत्वेन त्वन्मतेऽस्य व्याप्तित्वायोगाच्च॥

किंच व्याप्तिविशिष्टपक्षधर्मताज्ञानरूपलिङ्गपरामर्शोऽनुमितिमात्रे हेतुः। व्यतिरेकिणि [4]च स न युक्तः। व्याप्तिपक्षधर्मतयोर्वैयधिकरण्यात्॥

केवलव्यतिरेकि[5]साध्यकपृथिवीत्वादिहेतावित्यर्थः। [6]साध्याभावस्यैवव्याप्यत्वाद्धेतुत्वेनाभिमतपृथिवीत्वादेरव्याप्यत्वादिति भावः। व्याप्तिद्वयस्याप्यनुगमकमाशङ्क्य निराह—**न च स्वेति**। व्यतिरेकोन्वयश्च स्वशब्दार्थः। व्यतिरेकनिरूपितो व्यभिचारो हेत्वभाववति साध्यासत्त्वं तद्विरोधित्वं व्यतिरेकव्याप्तेरस्ति। साध्याभाववति हेतुसत्त्वमन्वयव्यभिचारः। तद्विरोधित्वमन्वयव्याप्तेरस्तीति स्वनिरूपितव्यभिचारविरोधित्वमुभयव्याप्तेरस्ति। एवं धीपक्षेपीत्यनुगतव्याप्तिज्ञानरूपं करणमुभयत्रास्तीति तद्विशिष्टपरामर्शो व्यतिरेकिण्यपि युक्त इति भावः। **त्वन्मत इति**। सामानाधिकरण्यगर्भितव्याप्तिवादिनो मत इत्यर्थः।

1 'किं च व्याप्तिविशिष्टपक्षधर्मताज्ञानरूपलिङ्गपरामर्शो अनुमितिमात्रहेतुः। व्यतिरेकिणि च स न युक्तः। व्याप्तिपक्षधर्मतयोर्वैयधिकरण्यात्। इत्यधिकम्-**ग. ट. रा.** 2 स्वनिरूपितेत्यादि नास्ति-**ग. ट. रा.** 3 च इति नास्ति-**ग. ट. रा.** 4 णि साध्याभावव्याप्तिपक्षधर्मतयो-**क.** 5 किणीतरभेदसा-**ठ.** 6 तत्रेत्यधिकम् **ठ. ड.**

[1]न चान्वयिनि लिङ्गपरामर्शो व्यतिरेकिणि साध्याभावव्यापकाभावप्रतियोगित्वज्ञानं अनुमितिमात्रे तु पक्षधर्मताधी[2]र्हेतुरिति वाच्यम्। [3]तृणारणिमणिजन्यवह्निष्विव लिङ्गपरामर्शादिरूपोक्तकारणद्वयजन्यानुमितिष्ववान्तरविशेषस्याननुभवात्। तत्कल्पनस्य [4]चान्योन्याश्रयेण योग्यानुपलब्धि[5]बाधेन चायुक्तत्वात् ॥

**अवान्तरवैजात्यस्येति।** तदवश्यमङ्गीकर्तव्यम्। अन्यथा सामग्रीद्वयस्य परस्परव्यतिरेकव्यभिचारेणानुमितिं प्रति हेतुत्वासिद्ध्यापातात्तृणारणिमणिजन्यवह्निष्वपि वह्नित्वव्याप्यतत्तज्जन्य[6]तावच्छेदकावान्तरजातिर्नोपेया स्यात्। न चासौ जातिरनुभूयते। अतो नैवं कल्पना युक्तेति भावः। तृणारणिमणिजन्यवह्निष्विवेति पररीत्या व्यतिरेकदृष्टान्तः। तत्राप्यवान्तरजातेर्द्वितीयपरिच्छेदे निरासात्। स्वमतेनान्वयदृष्टान्त एवायमित्यन्ये। अननुभूयमानापि सामग्रीवैजात्यात्कल्प्यत इत्यत आह—**तत्कल्पनस्येति।** सिद्धे वैजात्ये विशेषसामग्रीद्वयकल्पनं सामग्रीद्वयसिद्धौ वैजात्यकल्पनमित्यन्योन्याश्रयेणेत्यर्थः। व्यतिरेकिणि त्वदुक्तगमकत्वस्याद्याप्यसिद्धेरिति भावः ॥

ननु व्यतिरेकिणोपि शास्त्रे तत्रतत्र संव्यवहारात्तदन्यथानुपपत्त्या व्यतिरेकव्याप्तेरप्यनुमितिसामग्रीत्वं क्लृप्तमिति चेन्न। परंपरयैवानुमित्युपयोगाभिप्रायेण[7] तत्संव्यवहार इति भावेन साक्षादुपयोगं निराह—

1 किंचेत्यादिग्रन्थो नास्ति—ग. ट. रा. 2 धी पदं न—ग. रा. 3 तरणिमणि इत्यस्ति- ग. 4 च इति न—ग. ट. रा. 5 मात्रेणेत्यधिकम्—ट. 6 न्यव्याप्यता—ड. 7 णेति भावेन सा—ठ.

किंच व्यतिरेकव्याप्तेः साक्षाद्गमकत्वे व्यर्थविशेषणत्वस्य त्वदभिमतं व्याप्तिज्ञानप्रतिबन्धद्वाराऽनुमितिप्रतिबन्धकत्वं न स्यात् । वैयर्थ्येनान्वयव्याप्तिविघटनेपि व्यतिरेकस्याखण्डाभावतया वैयर्थ्याभावेन व्यतिरेकव्याप्त्यविघटनात् ॥

अपि चैवं विरुद्धस्य साध्यव्यापकाभावप्रतियोगित्वं दूषकताबीजमिति त्वदभिमतं न सिध्येत् । तथाहि—उक्तप्रतियोगित्वस्य ज्ञानं किमव्यभिचारज्ञानप्रतिबन्धद्वाराऽनुमितिप्रतिबन्धकम् । किं वा सहचारज्ञानप्रतिबन्धद्वारा । नाद्यः । विरुद्धस्य

**किंचेति** । गमकत्वेऽनुमितिजनकत्व इत्यर्थः । **व्यर्थविशेषणत्वस्येति** । पर्वतोग्निमान्नीलधूमवत्त्वादित्यादौ व्यर्थविशेषणत्वस्य वह्निनिरूपितधूमनिष्ठव्याप्तिज्ञानप्रतिबन्धद्वाराऽनुमितिप्रतिबन्धकत्वेपि यत्र वह्न्यभावस्तत्र नीलधूमाभाव इति व्यतिरेकव्याप्तेरप्रतिबन्धेनानुमितिः स्यादेव । नीलधूमरूपविशिष्टाभावस्य व्यापकत्वे व्यर्थविशेषणत्वाभावात् । अभावस्याखण्डत्वादित्यर्थः ॥

ननु [1]व्यतिरेकव्याप्तिः केवलव्यतिरेकिण्येव साक्षाद्गमिका । अन्यत्र तु व्यभिचारज्ञाननिवृत्तिद्वारोपयुज्यते न साक्षादिति वदन्तं प्रत्याह— **अपि चेति** । **एवमिति** । व्यतिरेकव्याप्तेः साक्षाद्गमकत्व इत्यर्थः । **त्वदभिमतमिति** । हेत्वाभासग्रन्थे तथैवोक्तेरिति भावः । **किमव्यभिचारेति** । बाधप्रतिपक्षौ हि ग्राह्याभावावगाहितया साक्षादनुमितिप्रतिबन्धकौ । विरुद्धासिद्धव्यभिचारास्त्रयोऽनुमितिकरणपरामर्श-

[1] नु केवल—ङ.

साधारणान्तर्भावापातात् । न द्वितीयः । सकलसाध्यवति हेत्वभावज्ञानस्यान्वयसहचारज्ञानविघटकत्वेपिव्यतिरेकसहचारज्ञानविघटकस्य सकलसाध्याभाववति साधनमितिज्ञानस्याभावेन तदविघटनात् ॥

तस्मान्न व्यतिरेक्यनुमानं युक्तम् ॥

परीक्षकाणां व्यतिरेकव्याप्त्युपन्यासस्तु—यथोपाधिसिद्धिसाध्यसाधनवैकल्यादेरनुमानदूषकव्यभिचारादिसाधन[1]तयोपन्यासो न तु साक्षाद्दूषक-

विघटकत्वेनानुमितिप्रतिबन्धकाः । परामर्शविघटकत्वं[2] च तद्विषयाभावविषयकत्वेन । तद्विषयश्च व्याप्तिः पक्षधर्मता चेति द्वयम् । तत्रासिद्धिः पक्षधर्मताविरोधित्वेन । अन्यद्द्वयं व्याप्तिविरोधित्वेन । व्याप्तिश्चाव्यभिचारः सहचारश्चेति दलद्वयम् । तत्र विरुद्धस्थळे साध्यव्यापकीभूताभावप्रतियोगित्वज्ञानं किमव्यभिचारज्ञानप्रतिबन्धद्वाराथसहचारज्ञानप्रतिबन्धद्वारेत्यर्थः । **साधारणेति** । साधारणानैकान्तिकेत्यर्थः । विरुद्धत्वज्ञानस्येत्यस्य विवरणेन निर्देशः—**सकलसाध्यवति हेत्वभावज्ञानस्येति** । **अन्वयसहचारेति** । हेतौ साध्यसामानाधिकरण्यरूपसहचारेत्यर्थः । **तदविघटनादिति** । तथाच तत्र व्यतिरेकसहचाराप्रतिबन्धेनाव्यभिचारज्ञानप्रतिबन्धकस्यान्यस्य कस्यचिदभावाद्विरुद्धस्थळेऽपि व्यतिरेकव्याप्तिज्ञानसंभवेनानुमितिः स्यादेवेति भावः । कथं तर्हि शास्त्रे तदुपन्यासस्तत्रतत्र क्रियत इत्यत आह—**परीक्षकाणामिति** । [3]उपा-

[1] कतया—क. ग. ट. रा. [2] कंच—ट. ठ. [3] व्याप्तीति व्यतिरेकव्याप्तीत्यर्थः इत्यधिकम्—ट. ठ.

तया। यथा वा दृष्टान्तस्यानुमानाङ्गव्याप्तिप्रदर्शकतयोपन्यासः न तु साक्षादङ्गतया। तथानुमानाङ्गान्वयव्याप्तिसाधकतया न तु साक्षादङ्गतयेति द्रष्टव्यम् ॥

यद्यप्यन्वयव्यतिरेकिणि व्यतिरेकव्याप्तिर्नान्वयव्याप्तिसाधिका। तत्रान्वयव्याप्तेरन्यत एव सिद्धेः। तथापि स्पष्टव्यभिचारेष्यनुमाने उपाधिवन्मूकीभूता वा अन्वयव्याप्तेरेव व्यभिचारशङ्कां निराकुर्वन्ती वावतिष्ठते[1] ॥

यत्तु सुधायां व्यतिरेकि नानुमानं पञ्चरूपतावैधुर्यादित्येतत्परिशेषादिरूपानुमानेष्वनैकान्तिकमिति व्यतिरेकिणस्तटस्थाशङ्कितानुमानत्वनिराकरणं तदप्रसिद्धविशेषणत्वस्य दोषत्वे व्यतिरेकिप्रामाण्यं न स्यादिति परंप्रत्यापादनस्य तत्र प्रस्तु-

धिश्च सिद्धसाधनं च साध्यवैकल्यं च तदादेरित्यर्थः। व्यभिचारादीत्यादिपदेन सिद्धसाधनमाश्रयासिद्धिसाधकतया साध्यवैकल्यं व्याप्यत्वासिद्धिसाधकतयेत्येवं ग्राह्यम्। एवं हि धूमादावन्वयव्यतिरेकिणि व्यतिरेकोपन्यासो व्यर्थ इति शङ्कामनूद्यान्वयव्यतिरेकिणि तु व्यतिरेकव्याप्तिरनुपयुक्तैवेत्यादिपद्धतिवाक्यं हृदि कृत्वा परिहारमाह– यद्यपीति। भक्तिपादीयसुधाविरोधमाशङ्क्य[2] त्रिधा तात्पर्योक्त्या निराह–यात्विति[3] ॥

इति केवलव्यतिरेकिभङ्गः ॥ २० ॥

[1] तिष्ठति-ग. ट. रा　　[2] त्रेधा–ट. ठ. ड.　　[3] यत्त्विति इति स्यात्.

तत्वात्परीतिमाश्रित्य वा [1]व्यतिरेकिव्याप्ति-साधकतयोपयुज्यत इत्यभिप्रेत्य वा, पञ्चरूपता-वैधुर्यादननुमानत्वं न किं तु व्याप्तिपक्षधर्मतयो-वैयाधिकरण्यादेवेत्यभिप्रेत्य वेति द्रष्टव्यम् ॥

अन्यथा व्यतिरेकव्याप्तेरनुमानानङ्गत्वादित्या-दितद्वाक्यविरोधात् । तस्माद्व्याप्तेर्द्वैविध्यमनुमा-नस्य त्रैविध्यं चायुक्त[2]मिति ॥

इति केवलव्यतिरेकिभङ्गः ॥ १९ ॥

## अथ पञ्चावयवादिनियमभङ्गः ॥ २० ॥

पुनरप्यनुमानं द्विविधम् । स्वार्थं परार्थं च[3] । तत्र परोपदेशानपेक्षं स्वार्थम् । तत्सापेक्षं परार्थम् ।

---

अथ पञ्चावयवादिनियमभङ्गः ॥ २१ ॥

पुनरनुमानं द्विविधम् स्वार्थं परार्थं चेत्यादिना पद्धत्युक्तं विवृ-ण्वान आह— **पुनरिति** । प्रागुक्तविभागापेक्षया पुनःशब्दः व्याप्तिविशिष्टलिङ्गज्ञानरूपमनुमानमित्यर्थः । तत्र तयोर्मध्ये । परोपदेशं वह्निव्याप्यधूमवानयमित्यादिरूपपरकृतोपदेशं नापेक्षत इति परोपदेशा-नपेक्षम् । व्याप्तिविशिष्टलिङ्गज्ञानमिति विशेष्यं अत्रोत्तरत्र च योज्यम्

[1] अन्वय इति शोधितमस्ति-ट. [2] इति इति नास्ति—ग. रा. [3] चेति-ट. रा.

**ससामर्थ्यलिङ्गप्रतिपादकवाक्यात्मकः परोपदेशोऽपि परार्थानुमानमित्युपचर्यत इतिस्थिते तस्य परोपदेशस्य जिज्ञासासंशयशक्य[1]प्राप्तिप्रयोजनसंशयनिरासप्रतिज्ञाहेतूदाहरणोपनयना[2]नीति दशावयवा इति जरन्नैयायिकाः[3] । प्रतिज्ञादयः पञ्चेति नवीनाः । प्रतिज्ञादयो[4]दाहरणादयो वा त्रय[5] इति मीमांसकाः । उदाहरणोपनयौ द्वावेवेति[6] सौगताः ॥**

परोपदेशस्वरूपस्य पद्धतावनुक्तेः 'अनुमा युक्तिरव.क्तेति' युक्तिपादीयानुव्याख्यानसुधोक्तमाह—**ससामर्थ्येति** । व्याप्तिसमुचितदेशवृत्तित्वरूपसामर्थ्यसहितम् । यद्वा व्याप्तिरेव सामर्थ्यम् । तत्सहितं यल्लिङ्गं धूमादि तत्प्रतिपत्तिजनकं वाक्यं परोपदेश इत्यर्थः । स च वह्निव्याप्यधूमवानयमित्यादिरूपः । वाक्यमात्रस्य परोपदेशतानिवृत्तये प्रतिपादकेत्यन्तोक्तिः । ससामर्थ्यलिङ्गप्रतिपत्तिसामान्यकारणादृष्टमनःसंयोगादिष्वतिव्याप्तिवारणाय वाक्यात्मक इत्युक्तिः । धूमोऽस्तीति वाक्येऽतिव्याप्तिनिरासाय[7] सामर्थ्येति । पद्धतौ 'तज्जनकत्वात्परोपदेशोऽपि परार्थानुमानमिति क्वचिदुपचर्यते' इत्युक्तेराह—**परार्थेति** । इत्युपचर्यत इत्यर्थः ॥

यत्तु—ससामर्थ्यलिङ्गप्रतिपादकवाक्यं न परोपदेशः तस्मिन्नेव वाक्येऽतिव्याप्तेरिति तन्न । ससामर्थ्यलिङ्गप्रतिपादकं वाक्यमिति

[1] शक्य—**ग.** [2] य निगमनानीति—**क. ग. ट. रा.** [3] का आहुः—**क. ग. ट. रा.** [4] वा—**क. ट. रा.** [5] य एवेति—**ट.** [6] द्वाविति—**ग. ट. रा.** [7] ससा—**ट. ड.**

**तन्न । आद्यपञ्चकस्याशब्दात्मकतया वाक्यावयवत्वस्यैवाभावात् उक्तनियमेषु हेत्वभावाच्च ॥**

**ननु—**

**यावता व्याप्तिपक्षधर्मतादिविशिष्टलिङ्गधीस्तावदाकाङ्क्षाक्रमेणाभिधेयं अन्यथा न्यूनत्वापत्तेः । तत्र साध्यानुपस्थितौ हेत्वाकङ्क्षैव नोदे-**

---

वाक्यस्य तादृशवर्णमालारूपवाक्यप्रतिपादकत्वेन तादृशलिङ्गप्रतिपादकत्वात् । अन्यथा घटाभावज्ञानमपि घटज्ञानं [1] घटाभावव्यवहारेऽपि घटव्यवहार इत्यापातात् । अन्यानवच्छेदेन घटावगाहि घटज्ञानमिति चेत् अन्यानवच्छेदेन तादृशलिङ्गप्रतिपादकं परोपदेशः । न चैवमतिप्रसङ्गोऽस्ति । अन्यथा छलोत्तरत्वं स्यादिति भावः । **आद्येति ।** जिज्ञासा ज्ञातुमिच्छा वह्निमान्न वेत्यादिसंशयः प्राप्तुं योग्यता शक्यप्राप्तिः प्रयोजनं प्रसिद्धं वह्निमान्न वेत्यादिसंदेहनिरास इत्येवंरूपाद्य पञ्चकस्येत्यर्थः ॥

तत्र प्रतिज्ञादिस्वरूपं पक्षवचनं प्रतिज्ञा लिङ्गं हेतुरित्यादिना मिथ्यात्वानुमानखण्डनतट्टीकातद्भावप्रकाशिकासु प्रमाणपद्धत्यादौ च व्यक्तत्वात्तत्स्वरूपमनुक्त्वा पञ्चैवावयवाः क्रमेणैव प्रयोज्याः न न्यूनाः, त्रय एव प्रयोज्याः न न्यूनाः नाधिकाः, द्वावेव प्रयोज्यौ नत्वधिक इति वादिनां यो नियमपक्षस्तन्निरासे युक्तिपादीयानुव्याख्यानसुधायुक्तिं हृदि कृत्वा हेतुमाह—**उक्तनियमेष्विति** । आकाङ्क्षैव हेतुरिति भावेन सुधाशङ्कितरीत्या मण्याद्युक्तरीत्या च शङ्कते—**नन्विति ।**

[1] स्यात् इत्यधिकम्–ठ.

तीति तदुपस्थित्यर्थं प्रतिज्ञा । ततः कस्मात्प्रमाणादिदं ज्ञेयं इत्याकाङ्क्षायां [1] पराङ्गतापन्नलिङ्गस्वरूपमात्रप्रतिपादकं धूमादिति हेतुवचनम् । ततोस्य सामर्थ्यजिज्ञासायां प्रथमं व्याप्तिप्रदर्शनार्थ[2]मुदाहरणम् । पश्चात्पक्षधर्मताप्र[3]तिपादनार्थमुपनयः । ततः सर्वस्यैकबुद्ध्यारोहायैकवाक्यतामापादयितुं [4] निगमनम् ॥

यद्वा [5] पक्षे प्रतिज्ञया प्रमेये उपस्थापिते[6] हेतुना च तदवधारणार्थं लिङ्गरूपे प्रमाण उक्ते तस्य निरस्तसमस्तदोष[7]शङ्कस्यैव प्रमेयावधारकत्वाच्छङ्कानिरासार्थं[8] उदाहरणादयोऽपेक्षिताः । तत्र व्याप्तिदर्शकेनोदाहरणेन विरुद्धानैकान्तिकानव[9]ध्यसितानां निरासः । उपनयेनासिद्धेः । निगमने[10]नापि सिद्धे सत्यारम्भस्य नियमार्थत्वात् तस्मादेव नान्यस्मादिति हेत्वनुवादेन सिद्धसाधन-

पर आहेत्यादिना सुधोक्तं पक्षान्तरमनुवदति—यद्वेति । अनध्यवसितपदेनासाधारणानैकान्तिकग्रहः । सुधोक्तरीत्या निराह—

[1] प्रमाङ्गता–ग. प्रमाणता–ट. रा. [2] र्थं यो यो धूमवानसावसावग्निमानित्युदाहरणम् । पक्षादिविवक्षितस्थळधर्मताप्रतिपादनार्थमग्निव्याप्तधूमवांश्चायमित्युपनयः " इति हंसवादेन पूरितमस्ति–ट. [3] प्रदर्शनार्थमग्निव्याप्तधूमवांश्चायमित्युपनयः–ग. रा. [4] तस्मादग्निमानेवेति नि–ट. [5] पक्ष इति नास्ति–ट. रा. [6] तेपि–ग. रा. [7] षाशं–क. ट. रा. [8] र्थं व्याप्तिप्रदर्शकेनो–इत्याद्यस्ति–क. ग. ट. रा. [9] नध्यवसि–क. ग. ट. रा. [10] नेपि–क. ग. रा

ताया अग्निमानेव न त्वनग्निक इति साध्यानुवादेन बाधसत्प्रतिपक्षयोर्निरास इति कथं पञ्चावयवनियमे हेत्वभाव इति ॥

उच्यते—

आद्यः पक्षस्तावन्न युक्तः । न हि वादिवाक्यमाप्तवाक्यतया व्याप्त्यादिविशिष्टलिङ्गप्रमापकम् । येनाकाङ्क्षाक्रमेणावयवनियमः स्यात् । वादिनोः परस्परमनाश्वासात् । अन्यथा प्रतिज्ञयैवालम् । किं तु गृहीतव्याप्त्यादिकं पुरुषं प्रति तत्साधकत्वेनागृहीतव्याप्त्यादिकं प्रति तु तज्जिज्ञासाजनकत्वेनोपयुज्यते ॥

तथा च व्याप्तिपक्षधर्मताभ्यां वा व्याप्तिसमुचितदेशसिद्धिभ्यां वा विशिष्टलिङ्गस्मृतिर्यावता भवति तावदेव वक्तव्यम् । अन्यथाधिक्यापातात् ॥

सा च पर्वतोऽग्निमान्धूमवत्त्वान्महानसवदिति प्रतिज्ञाहेतूदाहरणैकदेशदृष्टान्तवचनमात्रेण वा,

---

आद्य इत्यादिना । पररीत्याह—व्याप्तिपक्षधर्मताभ्यामिति । स्वमतेनाह—व्याप्तिसमुचितदेशसिद्धिभ्यामिति ॥

ननूक्तरूपलिङ्गस्मृतिः कियता भवतीत्यतः पद्धत्याद्युक्तसप्तप्रकारैर्भवतीत्याह—सा चेति[1] । जायमानेत्यन्वयः[2] । व्याप्त्यभि-

[1] उदाहरणस्यैकदेशो यो दृष्टान्तस्तद्वचनमात्रेणेत्यर्थः । उदाहरणेनेति । इत्यधिकम्–ट. [2] उदाहरणेतिइत्यधिकम्–ठ.

अग्निव्याप्तधूमवत्पर्वतोऽग्निमानिति हेतुगर्भप्रतिज्ञामात्रेण वा, विवादेनैव प्रतिज्ञासिद्धौ कुतः पर्वतोऽग्निमानिति प्रश्नेऽग्निव्याप्तधूमवत्त्वादिति हेतुमात्रेण वा पर्वतस्याग्निमत्त्वे किं प्रमाणमिति प्रश्नेऽग्निव्याप्तधूमवत्त्वमेति लिङ्गोक्तिमात्रेण वा, धूमवन्महानसवत्पर्वतोऽग्निमानिति सप्रतिज्ञेन हेतुगर्भेण दृष्टान्तवचनमात्रेण वा, अग्निना व्याप्तो धूमः पर्वतेस्तीत्युपनयमात्रेण वा, व्याप्ति[1]मद्धूम[2]वत्त्वात्पर्वतोऽग्निमानिति निगमनमात्रेण वा, जायमानाऽनुभूयत इति किं पञ्चावयवादिनियमेन ॥

आद्ये ह्यनुमानमुद्राभिज्ञस्य व्याप्तिग्रहणस्थळे उक्ते व्याप्तिस्मृतिर्भवत्येवेति न न्यूनता । व्याप्तिवाचकशब्दस्तु यो यो धूमवानसावसावग्निमानित्युदाहरणभागान्तरेपि नास्ति ॥

धानपूर्वं दृष्टान्तवचनं ह्युदाहरणम् । तत्र यो यो धूमवानसावसावग्निमानिति व्याप्त्युक्त्यंशत्यागेन महानसवदिति दृष्टान्तवचनमात्रेणेत्यर्थः । उक्तसर्वपक्षेषु व्याप्तिस्मृत्युत्पादप्रकारमुपपादयन्नन्यूनतादिदोषं निराह— **आद्ये हीत्यादिना ॥**

ननु व्याप्तिबोधकशब्दाभावे कथं व्याप्तिस्मृतिरित्यत आह— **व्याप्तिवाचकेति ।** यो य इति साध्ये सकलसाधनाधिकरणसत्त्वबोधकस्यैव सत्त्वाद्व्याप्तीति पदाभावादिति भावः । नन्वेवमाद्यपक्षे

---

[1] व्याप्त्यादि म—**क. ट.**     [2] मत्वात् प—**ग.** मवत्पर्व—**ट.**

द्वितीयेपि लोके शास्त्रे च हेतुगर्भविशेषण[1]-प्रयोगान्दृष्टवतो व्युत्पन्नस्य धूमवत्त्वं हेतुरिति धीर्भवत्येवेति न न्यूनता ॥

तृतीयेपि धूमवत्त्वादित्यस्य प्रश्नस्थेनाग्निमानित्यनेनान्वयान्नापार्थकता । नापि प्रतिज्ञाभावेन[2] साध्यानुपस्थितेर्न्यूनता । विवादेनैव तदुपस्थितेः । न च समयबन्धादिना विप्रतिपत्तिर्व्यवहितेति वाच्यम् । समयबन्धानन्तरभाविना कुतोऽग्निमानिति प्रश्नेन पुनरपि साध्योपस्थितेः । आद्यपक्षस्तु स्वपक्षं साधयेत्याद्यनुयोग एव प्रवृत्त इति स्वपक्षभूतसाध्योपस्थित्यर्थं तत्र प्रतिज्ञापेक्षितैव ॥

ननु—तथापि हेतुमात्राकाङ्क्षाशामकेन हेतुवचनेन धूमादित्येवंरूपेणैव भाव्यम् । न तु धूमवत्त्वादित्येवंरूपेण । तथा च पक्षधर्मताया अलाभात्[3] पुनरपि तृतीये न्यूनतैव । मन्मते तूपनयेनतल्लाभ इति चेन्न । पक्षस्य साध्यवत्त्वे को हेतुरित्याकाङ्क्षाशामकेन हेतुवचनेन हेतौ पक्षसंबन्धस्यापि बोधनीयत्वात् । अत एवोपनयोऽधिकः ॥

।तिज्ञा व्यर्थैवेत्यतो दशाविशेष एव स पक्ष इत्याह—**आद्यपक्षस्त्विति** । अनुयोग एव—प्रश्ने सत्येवेत्यर्थः । अधिकः कृतकार्य

[1] विशेषणपदं न—ग. ट. रा. [2] वे च सा—रा. [3] अभावात् पु—रा.

पञ्चमेपि महानसवदित्यनेन व्याप्तेर्धूमवदिति दृष्टान्तविशेषणेन पक्षधर्मतायाश्चोपस्थितिरिति न न्यूनता ॥

न चैवं वादिवाक्यस्याप्तवाक्यवदनुसरणीयत्वे निग्रहोद्भावनं न स्यादिति वाच्यम् । प्रमापकत्वांशत्यागेन ज्ञापकत्वांशे लोकशास्त्रप्रहतरीत्यनुसारिणो वादिवाक्यस्याप्यनुसरणीयत्वात् । अन्यथाग्निमानित्युक्तेऽग्निशब्दस्य चित्रमूलाद्यर्थत्वमादायार्थान्तराद्युद्भावनं स्यात् ॥

किं च त्वत्पक्ष एव न्यूनादिनिग्रहोद्भावनं न स्यात् । न्यूनादिकं प्रति लोकसिद्धमर्यादाया एवावधित्वात् । मत्पक्षे निग्रहोद्भावनं तु लोकसिद्धरीत्यतिक्रमे सावकाशम् ॥

इत्यर्थः । व्यर्थ इति यावत् । प्रमापकत्वांशेति । आप्तवाक्य इव वादिवाक्ये प्रमापकत्वाभावेपि ज्ञापकत्वमात्रस्य सत्त्वाद्बाधितार्थकवाक्यस्यापि बोधकताया योग्यतावादे साधनादिति भावः ॥

चित्रमूलादीति । ननु तथोक्तौ छलेन निगृह्येतेति चेत् तदेव कुतः। प्रकरणाद्यनुसंधानादिति चेत् समं प्रकृतेपीति भावः । लोकसिद्धेति । अस्मदुक्तप्रकारा एव लोकसिद्धमर्यादानुसारिण इति भावः । ननु युक्तिपादीयसुधायां व्याप्तिपक्षधर्मत्वयोरन्यतरदेवाभिधेयम् । व्याप्त्यभिधानं नावश्यकमिति [1]प्रतीतेः प्रागुक्तपक्षेषु च द्वयोरप्यभिधानप्रतीतेर्विरोध

[1] सुधावाक्यात्प्रतीतेः–ट. ठ.

[1] **यातु सुधायां संस्कारोद्बोधोपयुक्तं सादृश्यसंबन्धादिकं किमप्यपेक्षितव्यमित्यादिना व्याप्तिपक्षधर्मतयोरन्यतरस्मिन्नुक्तेऽन्यस्य स्मृतिर्भविष्यतीत्युक्तिः सा दृश्यते खलु लोके पदैकदेशेन [2] पदार्थ-[3] स्मृतिरित्युक्तिवत्कथा [4] बाह्यप्रयोगाभिप्राया वा, वादकथाभिप्राया वा, एकोक्तिमात्रेण [5] द्व्यंशस्मृतिमत्पुरुषविशेषाभिप्राया वा, कैमुत्याभिप्राया वा, न तु द्वयोरन्यतरदेवाभिधेयमित्यभिप्राया ॥**

**अत एव विष्णुतत्त्वनिर्णयटीकायां—स्मरणं तु पदैकदेशादिनापि दृष्टं किमुत प्रतिज्ञादिभिरित्युक्तम् । अत एव च ब्रह्मतर्के—**

इत्यतः सुधोक्तमनूद्य तस्य चतुर्धाभिप्रायोक्त्या विरोधं निराह—**यातु सुधायामित्यादिना** । सा [6] इत्यस्यार्धवाक्यप्रयोगाभिप्राया वेत्यादिनान्वयः । **वादेति** । तत्र निर्णीताप्तभावत्वेन निग्रहस्थानाभावेन चैकदेशकीर्तनेप्युभयस्मृतिसंभवादिति भावः । **कैमुत्येति** । एवमेकदेशकीर्तनेनापि ससामर्थ्यलिङ्गस्मृतिर्भवति किमु प्रागुक्तसप्तप्रकारैः तत्रापेक्षितशब्दानां सत्त्वादिति कैमुत्याभिप्राया वेत्यर्थः । **अत एव चेति** । व्याप्त्याद्यभिधानस्यावश्यकत्वादेवेत्यर्थः । सूचितमित्यन्वयः । **ब्रह्मतर्क इति** । तत्त्वनिर्णयोदाहृते । युक्तिर्व्याप्त्यादिमल्लिङ्गम् । प्रतिज्ञा-

[1] यत्तु-**ग. रा.** [2] शादितोपि-इति शोधितम्-**ट.** [3] स्मरणादिकमि-इति शोधितम्-**ट.** [4] दर्थ वाक्यप्रयो-**ग. ट. रा.** [5] णान्यस्मृ-**ग. ट. रा.** [6] सत्यस्य वाक्यार्ध-**ठ.** सा इत्यस्यार्धवाक्य-**ड.**

युक्तिः प्रतिज्ञारूपा च हेतुदृष्टान्तरूपिका ।
तथोपनयरूपा च परा निगमनात्मिका ॥

इत्यवयवपञ्चकस्य प्रत्येकं परार्थानुमानत्वं प्रतिज्ञायान्ते व्याप्तिमाश्रित्य केवलमित्युक्त्या सर्वत्रापि व्याप्त्यभिधानं सूचितम् ॥

विष्णुतत्त्वनिर्णयटीकायामपि 'व्याप्तिमाश्रित्येत्यपि[1] पक्षान्तरदर्शनमित्युक्त्या प्रतिज्ञादावपि व्याप्त्यभिधानं सूचितम् ॥

[2]प्रमाणपद्धतावपि उपनयेऽग्निना व्याप्तो धूमः पर्वतेऽस्तीति, निगमनेपि व्याप्त्यादिमद्धूमवत्त्वा-

रूपं निरूपकं स्मृत्यादिजननी यस्याः सा तथोक्ता । एवं हेतुरूपिका-दृष्टान्तरूपिकेत्याद्यपि व्याख्येयम् ॥

दृष्टान्तशब्देन तद्वचनमुपलक्ष्यते । उदाहरणैकदेशग्रहणार्थं दृष्टान्तेत्युक्तम् । युक्तिर्निगमजन्यस्मृतिमतीत्यर्थे निगमनात्मिकेत्यौपचारिकप्रयोगः । युक्तेरेकत्वेपि तत्स्मृतिजनकभेदाभिप्रायेणोपचारित्युक्तम् । अत्र सर्वत्र हेतुगर्भप्रतिज्ञारूपेति सप्रतिज्ञहेतुरूपिकेति हेतुगर्भसप्रतिज्ञदृष्टान्तरूपिकेति सप्रतिज्ञोपनयरूपेत्ये[3]वं पूरणीयम् । प्रतिज्ञाहेतु[4]रूपैवेत्यादिवाक्यशेषात् । विष्णुतत्त्वेति । अतएवेत्यनुषङ्गः । तत्र सप्रतिज्ञोपनयरूपेतिप्रागुक्तपक्षापेक्षया सव्याप्तिकोपनयरूपेत्येतदर्थपरत्वप्रतीतावपि तुल्यन्यायत्वात्प्रतिज्ञादावपीत्युक्तम् । प्राक् स्वोक्तरीत्येति

1 'त्यत्र' इति स्थितं 'त्येत्येतत्' इति शोधितमास्ति–ट. 2 प्रमाणपदं न–ग. ट. रा. 3 ति सप्रतिज्ञानिगमनरूपेत्ये–ठ. 4 तु गर्भेत्यादि वा–ट. ठ. ड.

दिति व्याप्तिरुक्ता । प्रमाणलक्षणेऽपि 'हेतुगर्भा प्रतिज्ञा केवलाऽपि, सिद्धौ प्रतिज्ञायां हेतुमात्रं च, दृष्टान्तः सप्रातिज्ञो हेतुगर्भ इति व्याप्यरूपालिङ्ग-वचनार्थकेन हेतुशब्देन सर्वत्रापि व्याप्त्यभिधानं सूचितम् । सुधायामपि ससामर्थ्यलिङ्गप्रतीति-जनकं वाक्यमुपदेश इत्युक्तम् ॥

यद्वा धूमवत्त्वादित्येव हेतुः । न तु व्याप्त-धूमवत्त्वादिति । एवमवयवान्तरेऽपि द्रष्टव्यम् । तथापि न न्यूनता । प्रतिवादिन आकाङ्क्षाक्रमेण व्याप्त्यादे[1]स्तृतीयादिकक्ष्यासूक्तिसंभवात् । स्वी-

भावः । **सुधायामपीति** । 'व्याप्तिरेव तु सा स्मृते' ति युक्तिपादीयानु-व्याख्यानव्याख्यावसरे सुधायामित्यर्थः । **एवमवयवान्तरेपीति** । प्रतिज्ञादयः पञ्चाप्यवयवाः हेत्वादिकिंचित्सहिताः सन्तः प्रत्येकं परोपदेश इत्युक्तम् । तत्र प्रागुक्तसप्तसु परोपदेशप्रकारवाक्येष्ववयवभूतो यो हेत्वंशः स व्याप्त्यभिधानशून्यः । केवल एवाभिधेय इत्यर्थः । **तृतीयादीति** ॥

धूमवत्त्वादिति वादिन प्रथमकक्षा[2] व्याप्तिर्नास्योपलभ्यते कथं व्याप्तिरिति[3] वादिनो द्वितीया कक्ष्या, यो यो धूमवानिति[4] व्याप्त्यभिधानवादिनः तृतीया कक्षा, कथं व्याप्तस्य पक्षनिष्ठता समु-चितदेशवृत्तिर्वेति प्रतिवादिनश्चतुर्थी कक्षा, वह्निव्याप्तो धूमः पर्वतेऽ-स्तीत्युपनयवादिनो वादिनः पञ्चमी कक्षेत्येवंरूपेण कथाप्रवृत्तेस्तृतीया-

[1] देर्द्वितीयादिकक्ष्यासु इति शोधितम्–ट. [2] क्ष्या–ठ. ड. [3] ति प्रति-वा–ट. ठ. ड. [4] त्यादि–ट. ठ. ड.

कृता च त्वयाप्याकाङ्क्षाक्रमेणोक्तिः। किं तु तव मते प्रतिवादिना द्वितीयादिकक्ष्यास्वाकाङ्क्षिष्यमाणमपि व्याप्त्यादिकं वादिना पञ्चावयवेन महावाक्येनाद्यकक्ष्यायामेव वक्तव्यमिति नियमः। मम तु न। उत्तरत्राकाङ्क्षिष्यमाणस्याप्यादावेवोक्तावाकथापरिसमाप्ति यावद्वक्तव्यं तावत आदावेवोक्तिप्रसङ्गात् ॥

किंच युगपदुक्तिनियमेऽपि तदभिमतस्योपनयस्य निगमनस्य च प्रत्येकं व्याप्त्याद्युक्तौ शक्तत्वात्किमवयवान्तरेण। तस्मादाद्यः पक्षो न युक्तः ॥

नापि सकलशङ्कानिरासार्थं पञ्चावयवनियम इति द्वितीयः। आदावेव सकलशङ्कानिरासक-

दिकक्षा[1]स्वित्युक्तम्। मम तु नेत्ययुक्तम्। आकाङ्क्षिष्यमाणस्याप्यादावेव वक्तव्यत्वादित्यत आह—उत्तरत्रेति। परीत्याप्युपनयनिगमनान्यतराभ्यामेवालमन्यद्व्यर्थमित्याह—किञ्चेति ॥

न पञ्चावयवोक्तौ तु विवादावसितिर्भवेत्।

दृष्टान्तादिषु चैवं स्यात् ॥

इत्यनुव्याख्यानसुधोक्तदिशा निराह—आदावेवेत्यादिना। ननु हेत्वाभासादिदोषदुष्टतारूपावान्तरशङ्कापञ्चावयवप्रयोगमात्रेण निरस्यत इति तावदेवैकं महावाक्यमित्युच्यत इति चेत्तर्हि पर्वतो वह्निमान्न वेति शङ्कानिवर्तकत्वं पर्वतोऽग्निमानिति प्रतिज्ञायाः कुतोऽग्निमत्त्वमिति शङ्कानिरासकत्वं धूमव[2]त्त्वादितिहेतुवचनस्य, कथमस्य व्याप्त्यादी-

[1] अत्र सर्वत्र क्ष्या इत्येवास्ति—ट. ठ. [2] मत्वा—ठ. ड.

स्यैव परार्थानुमानत्वे पञ्चावयवप्रयोगेणैव तन्नि-वृत्तौ तावतैव कथामुद्रणापातेन तन्निवर्तिकाया कृत्स्नकथाया एव परार्थानुमानत्वप्रसङ्गात् । अवान्तरशङ्कानिवर्तकत्वं तु प्रत्येकं प्रतिज्ञादेरप्यस्ति ॥

किंचोक्तरीत्यैकैकावयवेनापि व्याप्तिपक्षधर्मतयोरभिधानात्सकलशङ्कानिवर्तकत्वं तस्याप्यस्ति । अपि चास्मिन् पक्षे कण्टकोद्धारोऽपि पृथङ्न कर्तव्यः स्यात् । तस्मात्पक्षद्वयमप्ययुक्तम् ॥

अपि च पञ्चावयवादिनियमोपि विप्रतिपन्नं प्रत्यनुमानेनैव साध्यः । तस्य प्रत्यक्षाद्यविषयत्वात् । पञ्चावयवप्रयोगेणैव[1] तत्साधने मीमांसकादिं प्रत्याधिक्य प्रसङ्गात् । तत्परिहारार्थं पञ्चा-

[2]ति शङ्कानिषेधकत्वमुदाहरणस्य, इत्येवं रूपेणावान्तरशङ्का एकैकावयवोक्तावपि निवर्त्यत इति प्रतिज्ञादिकमपि प्रत्येकं परोपदेशरूपमहावाक्यं स्यादित्यर्थः । पूर्वपक्ष इवास्मिन् पक्षेपि पररीत्या सर्वाभासनिरासस्य प्रत्येकं संभवादवयवान्तरं व्यर्थमेवेत्यत आह—**किंचोक्तरीत्येति** । सा च पर्वतोऽग्निमान् धूमवत्त्वादित्यादिनोक्तरीत्येत्यर्थः । **तस्यापीति** । प्रतिज्ञाहेतुदृष्टान्तरूपाद्यैकैकावयव[3]स्यापीत्यर्थः ॥

त्रिपञ्चावयवामेव युग्मावयविनीमपि ।
नियमाद्योनुमां ब्रूयात्तं ब्रूया[4]द्यदिता दृशीम् ॥

इत्यनुव्याख्यानसुधोक्तयुक्त्या च नियमपक्षं निराह—**अपि च पञ्चावयवेति** । **प्रत्यक्षाद्यविषयत्वादिति** । आगमस्य चाभावादित्यपि

[1] ण च—**ग.रा.** [2] दिकमि—**ठ.** दिरि—**ड.** [3] वोक्ता व—**ट.** ड. [4] तादृशीयदि—**ट.ड.**

वयवनियमस्य तात्त्विकत्वसाधनेचानवस्थानात् ।
तद्रीत्या त्र्यवयववादिप्रयोगे च तव न्यूनत्वापातात् ॥

तत्तन्मतरीत्या प्रयोक्तव्यमिति वा, यावता व्याप्त्यादिविशिष्टलिङ्गधीस्तावत्प्रयोक्तव्यमिति वा, समयबन्धेन च मीमांसकादिना स्वाभिमताव-यवनियमासिद्ध्यर्थं कृतेन त्र्यवयववादिप्रयोगे[1] न तव व्याप्तिस्मृत्यादिरावश्यक इति स्वीकृतत्वेन त्वयैव पञ्चावयवनियमस्त्यक्तव्यः । एवं मीमांसकादिभिरपि स्वाभिमतो नियमस्त्यक्तव्य इति कथं तन्नियमः ॥

ध्येयम् । **अनवस्थानादिति** । पञ्चावयवनियमस्य पञ्चावयवयुक्तानुमानेन मीमांसकमवयवत्रयनियमवादिनं प्रति साधने त्वया कृते मीमांसकेनाधिकं[2] निग्रहस्थानमित्युक्ते पुनस्त्वयाऽऽधिक्यदोषनिरासार्थं पञ्चावयवनियम एव परमार्थत्वमिति पञ्चावयवयुक्तेनानुमानेनैव साध्यम् । तत्रापि तेन पूर्वोक्तदोषेऽभिहिते पुनरनुमानान्तरेण त्वया तथैव साध्यमित्यनवस्थानादित्यर्थः । तद्रीत्या मीमांसकरीत्या ॥

**एवं मीमांसकादिभिरिति** । अवयवत्रययुक्तानुमाने मीमांसकेनोक्ते न्यूनतयानैयायिकेन प्रत्युक्तेऽवयवत्रयनियमस्य तात्त्विकतासाधनमपि तादृशप्रयोगेणैव कार्यमित्यनवस्थानात् । न्यायमतरीत्या मीमांसकेनोक्ते स्वमतेनाधिक्यं तत्तन्मतरीत्या प्रयोक्तव्यमित्याद्युक्तौ च न्यायमतरीत्या नैयायिकेन पञ्चावयवप्रयोगे कृते तेन तव व्याप्तिस्मृत्यादि

[1] गेण त-क. ट. रा.　　[2] नामेत्यधिकम्-ङ.

**किंच नेदं स्वसाध्यसाधकं, असिद्धत्वादित्याद्य[1]साधकानुमानेषु नायमसिद्धः तल्लक्षणरहितत्वात् इत्यादिकण्टकोद्धारानुमानेषु प्रथमप्रयुक्तहेतोर्व्याप्तिपक्षधर्मतादौ विप्रतिपत्तौ तत्साधकेषु द्वितीयादिकक्ष्यानिपातिषु शाखानुमानेषु वादिभ्यां कथामध्ये स्वाभिमततत्तत्प्रमेयसिद्ध्यर्थं पञ्चावयवतां विनाप्युच्यमानेषु परिशेषार्थापत्त्यादिरूपेषूपशाखानुमानेषु च त्वयैव नियमस्त्यक्त इति कथमन्यत्र तन्नियमः ॥**

**नन्वसिद्धत्वा[2]देरसाधकत्वादिना व्याप्त्यस्वीकारे**

भवतीत्युपेयमित्यवयवत्रयनियमस्त्यक्त[3] एव । एवं बौद्धेनापि स्वाभिमतो नियमस्त्यक्तव्य एवे[4]त्यर्थः ॥

कचित्क्लृप्तत्वात्प्राथमिकस्थापनानुमानेपि न पञ्चावयवादिनियमो ग्राह्य इति प्रतिबन्दीमुखेनापि नियमभङ्गं साधयति — **किंच नेदमिति** । तथैव हेत्वाभासान्ते मणौ व्यक्तत्वादिति भावः । **शाखानुमानेष्विति** । प्रथमं प्रधानप्रमेयसाधनार्थं प्रयुक्तमनुमानं प्रधानं महावृक्षस्थानीयं तदुपयुक्ततया तद्दूषकतया वा प्रयुक्तानि शाखानुमानानि मध्यमध्येऽवान्तरप्रमेयोपयुक्ता[5]न्यनुमानान्युपशाखानुमानानीति शाखानुमानेषूपशाखानुमानेष्विति चोक्तम् ॥

परमुखेनोत्तरं वाचयित्वा सममित्याह — **नन्विति** । अविवादे तु

[1] द्यसाधकतासाधनानुमा—ग. रा. [2] देरसाधकत्वादिना व्याप्तथा—क. ग. रा. [3] क्तव्य ए—ट. ठ. [4] एवेति नास्ति—ट. ठ. [5] अनुमानानीति नास्ति—ट. ठ.

कथानधिकारेण तत्र व्याप्तेरुभयसंमतत्वात्पक्षधर्मतामात्रं प्रदर्शनीयमिति चेत् तर्हि कृतकत्वानित्यत्वयोरपि व्याप्तेर्मीमांसकसम्मतत्वात्तत्र केवलान्वयिसाध्यके हेतौ च व्यभिचारशङ्कानुदयात्तत्रापि पक्षधर्मतामात्रं प्रदर्शनीयं स्यात् ॥

किंच केवलान्वयिहेतौ पक्षधर्मतायाः सर्वसंमतत्वात्तत्र व्याप्तिमात्रं प्रदर्शनीयं स्यात् ॥

यदि च व्याप्त्यादौ प्रतिवादिनः संम[1]तेपि वादिना स्वकर्तव्यं[2] तर्ह्यसिद्धत्वासाधकत्वयोर्व्याप्तिप्रदर्शनमपि कर्तव्यमेव । किंचैवमसिद्धस्यापि साधकत्वस्वीकारे कथानधिकार इत्यपि सुवचत्वेनासाधकतानुमानं विफलम् ॥

यदि च तत्स्वीकारिणोऽपि कथानधिकारे विप्रतिपन्नं प्रति असाधकतानुमानं सफलम् । तर्ह्यसिद्धत्वासाधकत्वयोर्व्याप्तौ विप्रतिपन्नं प्रति [3]तत्प्रदर्शनमपि सफलमेव ॥

किञ्चैवं शाखोपशाखा[4]नुमानेषु का गतिः तत्र व्याप्तेरुभयसम्मत्यभावात् मदुक्तरीतिरेव वक्तव्येति मूलानुमानेषु[5] तथैवास्तु ॥

---

नावयवान्तरप्रयोग इत्यत्र दोषान्तरमाह—**किंच केवलान्वयिनीति । मदुक्तरीतिरिति** । यावता तद्बोधः तावन्मात्रमित्यादिना प्रागुक्तसप्तप्रकारान्यतममेवानुसर्तव्यामित्यर्थः । सजातीयन्वयदर्शनरूपं वा

---

[1] मतावपि–क. ग. रा. [2] कर्तव्यमित्यधिकम्–क. ग. रा. [3] व्याप्तिप्र–क. ग. रा. [4] खाद्यनुमा–क. ग. ट. रा. [5] नेत–ग. नेपित–ट. रा.

**अपि चाग्निना व्याप्तो धूमः पर्वतेस्तीति वाक्यं आप्तोक्तं व्याप्त्यादिविशिष्टलिङ्गप्रमापकं दृष्टमिति तदेव वाद्युक्तं कथं तज्ज्ञापकं न स्यात् । किंच त्वयाऽपि त्वत्कल्पितपञ्चावयवनियमवि- स्मृतिदशायामवयवानियमोऽयुक्तः अतिप्रसङ्गा-[1]दित्येतावतैवा[2]वयवानियमायुक्तत्वस्य साध्यमान- त्वात्स्वक्रियाविरोधः ॥**

**नन्वेवमनियमवादिमते कथं न्यूनाद्युद्भावन- मिति चेन्न । उदाहरणान्तमुदाहरणादि वावय- वत्रयमेवेति पर[3]मते कथमप्राप्तकालाद्युद्भावनम् ।**

अन्वयितावच्छेद[4]कवत्त्वरूपं वा योग्यतावत्त्वं हेत्ववयवेप्यस्तीति तदे- वानुमितिहेतुलिङ्गज्ञानजनकमित्यवयवान्तरं व्यर्थमेव । तावतैव सर्व- दोषशङ्कानिवृत्तिसंभवाच्चेति भावेनाह —[5] **अपि च अग्निनेति ॥**

व्याघाताच्च नियमपक्षस्त्याज्य इत्याह— **किञ्च त्वयापीति ।** इत्येतावतैव साध्यमानत्वादित्यन्वयः । इत्येतावतैव —प्रतिज्ञाहेतु- रूपावयवद्वयेनैवेत्यर्थः । तत्र हेतुस्त्वत्कल्पितेत्यादि । **अनियमेति ।** पञ्चावयवनियमपक्षस्य यदयुक्तत्वं तस्येत्यर्थः । प्रतिबन्द्योत्तरमाह— **उदाहरणान्तमिति ।** मन्मत इव तन्मतेप्यनियमस्य तुल्यत्वादिति भावः । **अप्राप्तेति ।** क्रमविपर्यासोप्राप्तकालमित्यप्राप्तकालाख्यानिग्र- हस्थानाद्युद्भावनमित्यर्थः । कथंचेत्यस्य न्यूनाद्युद्भावनमित्यन्वयः ।

[1] ङ्गत्वादि-**ग. ट. रा.** [2] वानियमा–**ग. रा.** 'वानियमा' इति स्थितं वनियमा इति शोधितम्–**ट.** [3] मद्र–**ग. ट. रा.** [4] कत्व–**ठ. ड.** [5] अपि चेति । आग्निनेति । व्या–इत्याद्यस्ति- ड.

कथं चोदाहरणे दृष्टान्तोक्तिः पञ्छच्छन्दतच्छब्द-योर्वीप्सा विशिष्य कण्टकोद्धारः असाधकताऽनु-मानं उपाधेः स्वशब्दो[1]ऽद्भावनं चानियतामिति-नैयायिकमते न्यूनाद्युद्भावनम् ॥

समयबन्धानुसारेणेति चेत् । समं प्रकृतेऽपि । उक्तपक्षेष्वतं पक्षमाश्रित्य वक्तव्यमिति वा लोक-शास्त्र[2]सर्वावगतमार्गेण व्याप्तिपक्षधर्मताविशिष्ट-लिङ्गोपस्थितिर्यावता तावद्वक्तव्यमिति वा सम-यस्य बन्धनीयत्वात् । अत एव ब्रह्मतर्के ॥

"पृथक्पृथक्प्रमाणत्वं याति युक्तितयैव तु"।

इत्यत्र परार्थानुमानत्वे युक्तिशब्दवाच्यव्याप्ति-पक्षधर्मताविशिष्टलिङ्गोपस्थापकत्वमेव तन्त्रमि-त्युक्तम् । यच्चोक्तं साध्योपस्थापकत्वात्प्रतिज्ञैव प्रथमेति । तन्न । क्वचिद्विधितोप्यर्थवादस्य प्राथ-म्यवत्, भट्टादिमते उदाहरणस्य प्राथम्यवत्,

---

अनियतपदं प्रत्येकमन्वेति । तेनैवोत्तरं वाचयति—**समयेति** । त्वयोदाहरणान्तमेव वाच्यमिति समयबन्धे सति तदतिक्रमेणोदाहर-णादिप्रयोगे कथिते निग्रहस्थानोद्भावनमिति चेदित्यर्थः । अनियम-पक्षे समयबन्ध एवायुक्त इत्यत आह—**उक्तपक्षेष्विति** । सा चेत्यादिना प्रागुक्तसप्तपक्षेषु ॥

ननु यावतेत्यादिना ग्रन्थेन प्रतिज्ञाद्यवयवानां यः पौर्वापर्यरूप-क्रमः शङ्कितः तमपि प्रत्याचष्टे—**यच्चेति** । **विधितोप्यर्थवादस्येति** ।

[1] द्देनो—ग. ट. रा. [2] स्त्रप्रहतमा—क. ग. ट. रा.

"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते" "अत एव प्राणः" "प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणं" इत्यादौ निगमने च हेतोः प्राथम्यवच्च लोक[1]शास्त्रव्यवहृतेनोपात्तात-न्यायेन[2] हेतोरपि प्राथम्य[3]सम्भवात् । विवादे-

"प्रजापतिर्वा इदमेक आसीत्, सोकामायत प्रजाः पशून् सृजेयेति स चात्मनो वपामुदखिदत्तामग्नौ प्रागृह्णात्ततोजस्तूपरः समभवत् तं स्वायै देवताया आलभत्त[4] तो वै स प्रजाः पशूनसृजत यः प्रजाकामः पशुकामस्स्यात्स एतं प्राजापत्यमजं तूपरमालभेते"त्यादावर्थवादस्य प्राथम्यं यथेत्यर्थः ॥

भट्टादीत्यादिपदेन बौद्धग्रहः । हेतोः प्राथम्येऽर्थवादाधिकरण-गतजैमिनिसूत्रमुदाहरति — **आम्नायस्येति** । वेदस्य धर्माधर्मरूप-कर्मलक्षणक्रियाबोधकत्वात् । अतदर्थानामक्रियार्थकानां अर्थवादाना-मानर्थक्यं तस्मादर्थहीनत्वादनित्यमिवानित्यमप्रमाणमुच्यतेऽर्थवादजात-मिति पूर्वपक्षसूत्रार्थः । तत्रैव व्याससूत्रमुदाहरति—**अत एवेति** । निरवकाशलिङ्गादेव प्राणशब्दार्थो ब्रह्मेति सूत्रार्थः । तत्रैव गौतमसूत्र-मुदाहरति—**प्रवृत्तीति** । सफलप्रवृत्तिजनकत्वादर्थावगाहिप्रमाणमित्यर्थः । **निगमनेति** । तस्मात्पर्वतो वह्निमानिति निगमनाख्यावयवे[5]त्यर्थः । अत्रापि कथकानुमानप्रयोगस्थलेपीत्यर्थः । प्रतिज्ञाया एवा[6]नैयत्यं कुतस्तत्प्राथम्यनैयत्यमित्याह—**विवादेति** ॥

[1] के शास्त्रे च प्रहृतेनो—क. ग. ट. रा. [2] नात्रापि हे—क. ग. ट. रा. [3] ततः 'नियमविस्मृतिदशाया । इत्याद्येवास्ति—ग. रा. [4] अलभत ततः ठ. ड. [5] व इ—ठ. [6] वयं—ठ. ड.

नैव साध्योपस्थितेरुक्तत्वाच्च । पर्वतस्याग्निमत्त्वं कुत इति प्रश्ने प्रतिज्ञाया अनन्वयाच्च । त्वयाऽपि त्वत्कल्पितप्रतिज्ञाप्राथम्यनियमविस्मृतिदशायां कदाचिद्धेतोरपि पूर्वमुक्त्या स्वक्रियाविरोधाच्च ॥

अत एव हेतुवचनस्य द्वितीयत्वनियमोऽपि निरस्तः । उपनयस्य सार्थक्यार्थं[1] हेतुवचनस्य मतुबादिराहित्यं तु प्रागेव निरस्तम् । पृथिवीत्वादि [2] संबन्धात्पृथिवीत्यादिस्वभाष्यविरुद्धं च ॥

यच्चोक्तं प्रतिज्ञायामग्निशब्दे [3] हेतौ धूमशब्दे[4] च तज्ज्ञाने [5]लक्षणा । अन्यथा धूमस्याग्निं प्रत्य-

ननु गिरिरग्निमान् गिरिरनग्निक इति विवाद एव स्वपरपक्ष प्रतिज्ञारूप इति वदन्तं प्रति प्रकारान्तरेण तदनैयत्यमाह—**पर्वतस्येति** । **अत एवेति** । हेतुवचनप्राथम्यस्य प्रदर्शितत्वादेवेत्यर्थः । यत्तु मण्यादौ कथायां धूमादित्येव प्रयोक्तव्यं न तु धूमवत्त्वादिति । मतुबो व्यर्थत्वात् । पक्षधर्मता तूपनयलभ्येत्युक्तं तन्निराह—**उपनयस्येति** । मतुबादीत्यादिपदेन उदाहरणसार्थक्यार्थं यद्व्याप्तिराहित्यमुक्तं तद्ग्रहः । वह्निव्याप्यधूमवत्त्वादिति प्रयोगस्य दर्शितत्वादितिभावः । **प्रागेवेति** । ननु तथापि हेतुमात्राकाङ्क्षाशामकेत्यादिग्रन्थेनेति [6] भावः । **इति स्वभाष्येति** । गौतमसूत्रभाष्ये । हेतुवचन एव मतुबर्थस्य पक्षसंबन्धस्योपादानेन हेतुवचने मतुबो राहित्यकथनं तद्विरुद्धमित्यर्थः । मण्याद्युक्तमन्यदपि निराह—**यच्चेति** । अग्निमानित्यस्याग्निज्ञानमित्यर्थः । धूमादित्यस्य च

[1] परोक्षमित्यधिकम्-**क ग. रा** परोक्ष हे-**ट.** [2] त्वाभि सं-**ग. रा.**
[3] ब्दस्य इति शोधितम्-**ट.** [4] ब्दस्य इति शोधितम्-**ट.** [5]नल-**रा.** [6] त्यर्थः-**ठ.**

कारणत्वेन पञ्चम्या अयोगादिति । तन्न । धूमे वह्निज्ञानजनकज्ञानविषयत्वरूपज्ञापकहेतुत्वस्य सत्त्वात् ॥

ननु तद्विषयकज्ञानजनकत्वमेव ज्ञापकहेतुत्वं तच्च धूमज्ञानस्यैव न तु धूमस्येति चेन्न । धूमज्ञानगतं हि ज्ञापकत्वं न तावद्वह्निं प्रति । धूमज्ञानाद्वह्निरिति कदाऽप्यप्रयोगात् । नापि वह्निज्ञानं प्रति । [1]तत्र कारकहेतुत्वस्यैव संभवात् । व्यावृत्तिधीहेतुधीविषये दण्डादौ व्यावर्तकशब्दस्येव वह्निधीहेतुधीविषये धूम एव वह्निज्ञापक शब्दस्य प्रयोगाच्च ॥

ज्ञापकहेतौ चानुपपत्तिप्रति[2]सन्धाननिरपेक्षप्रचुरप्रयोगादिना पञ्चमी मुख्यैव । अन्यथा सा

---

धूमज्ञानादित्यर्थः । धूमादिप्रातिपदिकेन ज्ञानलक्षणायां हेतुत्वार्थकपञ्चमी मुख्यैव संपद्यत इत्यर्थः । यज्ञपत्याद्युक्तदिशा निराह—**धूम इति** । **व्यावृत्तीति** । दण्डविशिष्टे अदण्डितो व्यावृत्तीत्यर्थः ॥

ननु धूमे वह्निज्ञापकशब्दप्रयोगो लक्षणयास्त्वित्यत आह—**ज्ञापकहेतौ चेति** । मुख्यार्थानुपपत्तीत्यर्थः । एवं प्रयोगेऽपि लक्षणेत्युक्तौ [3]बाधकमाह—**अन्यथेति** । यद्वा नन्वन्यायश्चानेकार्थत्वमितिन्यायेनैकत्रैव मुख्यत्व[4]मन्यत्रामुख्यत्व[5]मुपेयमित्यत आह—**अन्यथेति** ।

---

[1] तत्प्र -ग. ट. [2] त्यनुसं-क. ग. ट. रा. [3] साधक-ट. [4] ख्यार्थ-ट. [5] ख्यार्थ-ट.

कारकहेतावेवामुख्या स्यात् । कारकहेतावेव मुख्यत्वेपि पञ्चम्यामेव लक्षणाऽस्तु । न तु प्रधाने धूमप्रातिपदिके । न च सुब्विभक्तौ न लक्षणेति कुलधर्मः । वेदे 'प्रयाजशेषेण हवींष्यभिघारयति' इत्यादौ, त्वन्मते चतुर्विंशतिगुणाः, एकः समवाय इत्यादौ च तद्दर्शनात् । न हि गुणा इत्यादिविभक्त्युक्ता[1]बहुत्वादिसंख्या त्वन्मते गुणादाव-

---

अस्तु वा त्वद्रीत्या कारकहेतावेव पञ्चमी मुख्या । तथाप्यन्यत्र ज्ञापक[2] हेतौ लाक्षणिकीति स्यादित्याह—**कारकहेतावेवेति** ॥

ननु सुब्विभक्तौ लक्षणा न युक्तेत्यत आह—**न चेति** । क्वाप्यनुपलम्भान्न सुब्विभक्तौ लक्षणेत्यत आह—**वेद इति** । **प्रयाजशेषेणेति** । वाजपेयगते प्रयाजशेषेणेति वाक्ये द्वितीयातृतीयाभ्यां शेषस्य हविस्संस्कारार्थत्वप्रतीत्या प्रयाजनामकयागसाधनाज्यद्रव्यशेषेण हविस्संस्कुर्यादित्यर्थ इति प्राप्ते शेषस्य प्रतिपत्तिमात्रापेक्ष[3]त्वात्तत्प्रातिपदिकस्वारस्यानुरोधेन प्रयाजनामकयागसाधनाज्यशेषं हविष्षु स्थापयेदित्यर्थस्य चतुर्थस्याद्यपादे 'अभिघारणे विप्रकर्षादनुयाजवत्पात्रभेदः स्या' दिति त्रयोदशेऽधिकरणे व्यवस्थापितत्वेन तृतीयाद्वितीययोः कर्मत्वाधिकरणार्थत्वस्वीकारदर्शनादित्यर्थः । [4]बहुवचनैकवचनयोरविवक्षितार्थत्वभ्रान्तिनिरासाय[5] चतुर्विंशतीति एक इति च विशेषणोपादानम् । **तद्दर्शनादिति** । गुण्यादिस्थसंख्यालक्षणया दर्शनादित्यर्थः ॥

---

[1] क्त ब-ग. ट. रा.　[2] के हे-ठ.　[3] क्षित-ट. ठ. ड.　[4] द्वितीययोरित्यारभ्य नास्ति-ड. तद्दर्शनादिति 'इति पर्यन्तं नास्ति-ठ.　[5] तद्दर्शनादिति इति पर्यन्तं नास्ति-ट.

स्ति। प्रत्युत हेतुवचने ज्ञानलक्षणायामुदाहरणे उपनये च ज्ञानस्य गमकत्वार्थं तस्यैव व्याप्त्यादिविषयकत्वं वक्तव्यम्। न तु लिङ्गस्य व्याप्त्यादिमत्त्वम्॥

किंचावयवेनानुमित्यङ्गमेव ज्ञानमुत्पादयितव्यम्। लिङ्गज्ञानमेव च तदङ्गम्। न तु लिङ्गज्ञानज्ञानम्। [1]नापि वह्निशब्दे [2]लक्षणा। पञ्चम्युक्तज्ञापकत्वान्तर्गतज्ञानं प्रति विषयतया वा ज्ञापकत्वं प्रत्येव ज्ञाप्यतया वाऽन्वयेनैव [3]वह्निज्ञाप्यत्वासिद्धेः। दृश्यते च चैत्रमातेत्यादौ स्त्रीत्वविशिष्टजनकत्वरूपमातृत्वान्तर्गतजनकत्वेन सह चैत्रस्य जन्यतयाऽन्वयः। उदाहरणेपि योयो धूमवानसाव[4]ग्नि-

---

**लिङ्गज्ञानमेव चेति।** न तु लिङ्गज्ञानज्ञानम्। ज्ञानलक्षणापक्षे च लिङ्गज्ञानज्ञानमेवोत्पाद्यम्। गङ्गापदेन तीरज्ञानमिव। तच्च नानुमित्यङ्गमिति भावः। हेतौ ज्ञानलक्षणां निरस्य साध्येपि तां निराह—**नत्विति।** वह्निज्ञानजनकज्ञानविषयत्वरूपज्ञापकत्वान्तर्गतवह्निज्ञानं प्रतीत्यर्थः। **ज्ञाप्यतयेति।** ज्ञानजनकत्वरूपज्ञापकत्वं प्रत्येव तज्जन्यज्ञानविषयत्वरूपज्ञाप्यतयेत्यर्थः॥

नन्वाद्यपक्षे पदार्थैकदेशेन कथमन्वय इत्यत आह—**दृश्यते चेति।** उदाहरणरूपावयवमपि पराभिप्रेतं निराह—**उदाहरणेपीति।**

---

[1] न तु इत्यादि नास्ति—**ट. रा.** [2] ब्देनल—**क. ग. रा.** [3] ह्निज्ञाप्यत्व—**ग. ट, रा.** [4] सावसाव—**क. रा.**

मानिति पूर्वभागेनैव वा, यथा महानस इत्युत्तर-भागेनैव वा व्याप्त्युपस्थितेरन्यतरव्यर्थम् ॥

अत एव दृष्टान्ताभिधानं सामयिकमिति चेन्न । अनुपयुक्तमप्यभिधेयमितिसमयबन्धस्यैवा-योगात् । यस्य पुंसः पूर्वभागेन न व्याप्तिस्मृति-[1]स्तं प्रति दृष्टान्तस्याप्युक्तिरिति चेन्न । तथात्वेऽ-वयवानियमासिद्धेः ॥

यच्च सकलस्यापि साधनवतः साध्यवत्त्वरूप-व्याप्त्यन्तर्गतसाकल्यार्थं यच्छब्दे[2] वीप्सेत्युक्तम् । तन्न । 'गौर्न पदा स्प्रष्टव्या' 'यस्योभयं हवि-रार्तिमा[3]र्छेत्' यो ब्राह्मणायावगुरेत्तं शतेन यातया' दित्यादाविव वीप्सां विनाऽपि यो धूम-

---

शङ्कते—अत एवेति । पूर्वभागमात्रेण व्याप्त्युपस्थितेर्जातत्वादेव । सामयिकं समयबन्धकृतमित्यर्थः । अवयवेति । अवयवानियमस्यास्म-त्पक्षस्य सिद्धेरित्यर्थः ॥

गौरिति । या गौः सा पदा न स्प्रष्टव्येत्यभिप्रायण 'गौर्न पदा स्प्रष्टव्ये' त्युच्यते वेदे, तथा 'यस्योभयं सायङ्कालीनं प्रातःकालीनं च हविः क्रिमिकीटादिवशेनार्तिं नाशमाप्नुयात् ऐन्द्रं पञ्चशरावमोदनं निर्वपे' दित्यत्र यस्य यस्य पुंस इति वक्तव्ये यस्येति सकृदेवोक्तिर्यथा, अथ यो ब्राह्मणायावगुरेत् वधोद्योगं कुर्यात् तं शतयातनाख्यनरकिणं विद्यादित्यादौ योय इति वीप्सां विना यथोक्तिरित्यर्थः ॥

---

[1] धीस्तं–ग. रा. [2] ब्दादौ–ग. रा. [3] र्छेति अथ यो–ट. रा.

वानिति सामान्योक्त्यैव तत्सिद्धेः । इदमेतद्भिन्नम्, एतदसाधारणधर्माधिकरणत्वात् एतद्वदित्यभेदानुमाने सपक्षव्यक्तिभेदाभावेन वीप्सार्थाभावाच्च। क्वचिद्वीप्सा तु स्पष्टतार्था। अत एव विमतो भिन्नो मुक्तत्वाद्यादित्थं तत्तथेत्यादावाचार्यो[1]क्तौ न वीप्सा ॥

उपनयोपि हेतुवचनेन गतार्थः । अग्निव्याप्तधूमवांश्चायमिति त्वदभिमते उपनये उदाहरणसिद्धव्याप्त्यनुवादांशवैयर्थ्यं च । निगमनमपि प्रतिज्ञया गतार्थम् । न चोपसंहारार्थं तत् । विजातीयबहुप्रमेयाव्यवधानेन तदनपेक्षणात् । अन्यथा प्रत्येकं कण्टकोद्धारा[2]नन्तरं तस्मात्सर्व-

ननु कथं तर्हि 'यद्यत्पापं प्रति जहि जगन्नाथ[3] तन्मे' 'यां यां प्रियः प्रैक्षते'त्यादौ वीप्सोक्तिरित्यत आह—**क्वचिदिति**। **आचार्योक्ताविति** । तत्त्वोद्योते। उपनयाख्यावयवं च निराह—**उपनयोपीति**। पञ्चमावयवं च निराह—**निगमनमपीति**। **उपसंहारार्थमिति** । पृथक्पृथग्वाक्योक्तानामेकबुद्ध्यारोहार्थमित्यर्थः । **प्रत्येकं कण्टकेति** । नायमसिद्धः तल्लक्षणहीनत्वादित्युक्त्वा तस्मादसिद्धिराहित्यादिदं साधकम्, नायं विरुद्धः तल्लक्षणराहित्यादित्युक्त्वा विरुद्धराहित्यादिदं साधकमिति प्रत्येकं[4] निगमनं स्यात्, तथा नायमाभासः तल्लक्षणैर्हीनत्वादित्यनन्तरं तस्मात्सर्वदोषराहित्यादिदं साधक-

[1] क्तिः–ट. [2] रायानं–क. [3] नम्रस्य इति पूरितम्–ड. [4] साधकं इत्यस्ति–ड.

दोषराहित्यादिदं साधकमित्याद्यपि निगमनं नियतं स्यात् । [1]न च बाधादिशङ्कानिरासार्थं तत् । उदाहरणोपनयोक्तव्याप्तिपक्षधर्मताभ्यामेव स्वविरोधिसर्वदोषप्रतिक्षेपात् ॥

तस्मात्पञ्चावयवादिनियमो न युक्त इति ॥

पञ्चावयवादिनियमभङ्गः ॥ २० ॥

## अथ स्वाभिमतानुमानदोषः ॥ २१ ॥

अथानुमानदोष उच्यते ॥

मिति, तथा इदमसाधकं असिद्धत्वादिति दूषकतानुमानेपि तस्मादसिद्धत्वादिदमसाधकं तस्मादाभासकत्वादिदमसाधकमित्युपसंहारः स्यात् । ननु कदाचित्तत्रापीष्यत एवेत्यत आह—**नियतमिति । तदिति ।** निगमनमित्यर्थः । पूर्वोक्तदिशेति भावः ॥

पञ्चावयवादिनियमभङ्गः ॥ २१ ॥

## अथ स्वाभिमतानुमानदोषः ॥ २२ ॥

निर्दोषोपपत्तिरनुमेत्युक्तम् । तत्र दोषज्ञाने सत्येव तद्विविक्ततयोपपत्तिः ज्ञानेत्यतः ' अथ निर्दोषोपपत्तिरनुमानमित्युक्तम् [2]के तत्रोपपत्तिदोषा '' इत्यादिना पद्धत्याद्युक्तेष्वनुमानदोषान्निष्कृष्य विवृण्वान आह—**अथेति** । एवमनुमानो[3]पयुक्ताशेषोक्तयनन्तरमित्यवसरसङ्गतिमथपदेन

[1] नापि-ट. [2] के के-ठ. [3] नोक्तदो-ट. एव मन्योपयुक्ता दोषोक्तयनंतरं इत्यवसरसंगतिरथपदेनेति सूचयति-ठ. नोपयुक्तदोषोक्तथनन्तरं इत्यव-ड.

**यत्सद्भावे लिङ्गाभिमतं प्रमां न जनयति सोऽनुमानदोषः । प्रमाजनकत्वाभावश्च संशयविपर्ययजनके[1] ज्ञानाजनके चानुगतः ॥**

**स च त्रिविधः । प्रतिज्ञाहेतुदृष्टान्त-**

सूचयति । अनुमानपदेनात्र लिङ्गत्वेनाभिमतमुच्यते । तथाचार्थदोषोक्तेरेवेयं प्रतिज्ञा न तु वचनदोषस्यापि । तस्यापि परम्परयाऽर्थदोषत्वेऽपि साक्षादर्थदोष एवात्रोच्यत इत्यर्थः । उपलक्षणमेतत् । प्रतिज्ञादृष्टान्तदोषश्चोच्यत इत्यपि ध्येयम् ॥

यद्वाऽनुमानदोष एतावानिति निष्कृष्योच्यत इत्यर्थः । प्रतिज्ञादृष्टान्तदोषोक्तिरग्रेतनी अनुमानदोषविवेकार्था । अथवा अनुमानपदेनात्र प्रतिज्ञादृष्टान्तरूपपरिकरसहितं लिङ्गमुच्यते । तस्य दोष इत्यर्थः । अत एवाग्रे प्रतिज्ञादित्रितयदोषसाधारणं सामान्यलक्षणमुच्यते ॥

**यत्सद्भाव इति** । व्याप्त्यादिमल्लिङ्गस्य प्रमितिजनकत्वनियमादसंभवनिरासाय लिङ्गमित्यनुक्त्वा लिङ्गाभिमतमित्युक्तम् । स्वज्ञानद्वारेति योज्यम् । लिङ्गाभिमतस्य प्रमित्यजनकतापादकत्वं दोषत्वमित्यर्थः । [2]एतस्य ज्ञानमात्राजनके[3] संशयविपर्ययजनके च भावाद[4]-व्याप्तिरित्याह —**प्रमाजनकत्वाभावश्चेति** । च शब्देन ज्ञानाजनक[5]-ग्रहः । पद्धत्यादौ 'यत्सद्भावे[6]लिङ्गाभिमतं ज्ञानं न जनयति, संशयविपर्ययौ वा करोती'त्युक्तिस्तु विस्पष्टार्थेति भावः । परोक्तहेत्वाभासानां सर्वेषां न हेतुदोषत्वं किं तु केषां चिदेवेति वक्तुं विभागमाह—**स चेति प्रतिज्ञेति** । प्रतिज्ञाहेतुपदाभ्यां तदर्थग्रहणम् । यद्वाऽर्थदोष एव

---

[1] कंचानु ग–**ग. रा.** [2] नन्वस्य–**ट.** [3] सत्त्वेपि संशयजनके च अभा-इत्यस्ति–**ट.** [4] वाप्नाव्या–**ट. ठ. ड.** [5] परिग्र–**ठ.** संग्र–**ट.** [6] वाल्लिङ्गानुमतं–**ड.**

**भेदेन । तत्र प्रतिज्ञातार्थस्य प्रमाणविरोधः प्रतिज्ञादोषः । स द्विविधः । [1]बलवत् प्रमाणविरोधः । समबलप्रमाणविरोधश्चेति । हीनबलस्याकिंचित्करत्वात् । समबलत्वं चाभिमानिकम् ॥**

**द्वयमपि पुनस्त्रिविधम् । प्रत्यक्षानुमानागमविरोधभेदात् । अनुमानविरोधोपि द्विविधः । तेनैव हेतुना हेत्वन्तरेण [2]चेति । तत्राद्यः परैः प्रकरणसम इत्युच्यते । द्वितीयस्तु सत्प्रतिपक्ष**

तद्बोधकवचनस्यापीति प्रतिज्ञाहेत्वित्येवोक्तम् । "त्रिविधो विरोधः प्रतिज्ञाहेतुदृष्टान्तभेदेन" इत्यादिप्रमाणलक्षणानुरोधनायं निर्देशोऽग्रे लक्षणोक्तिरपीति ज्ञेयम् । साध्यधर्मविशिष्टो धर्मी प्रतिज्ञार्थः तस्येत्यर्थः । हीनबलप्रमाणविरोधस्यापि सत्त्वात्त्रिविध इति वाच्यमित्यत आह— **हीनबलस्येति** । वस्तुनो द्वैरूप्यापातेन समबलत्वमसंभावितमित्यत आह— **समेति** । **पुनस्त्रिविधमिति** । समबलप्रत्यक्षविरोधः, प्रबलप्रत्यक्षविरोधः, समबलानुमानविरोधः, प्रबलानुमानविरोधः, समबलागमविरोधः, प्रबलागमविरोध इति त्रिविध इत्यर्थः । त्रिविधमध्ये द्वितीयमपि विभज्याह— **अनुमानेति** ॥

ननु पक्षद्वयेपि त्रिरूपो हेतुः प्रकरणसम इति समबलो भवति । स च न युक्तः । शब्दोऽनित्यः गुणत्वात्, शब्दो नित्यः गुणत्वादित्यत्रानित्यत्ववादिनो हि घटरूपादिः सपक्षः, नित्यत्ववादिनः स एव विपक्षः । तथा च सपक्षे सत्त्वं ततो व्यावृत्तत्वं च द्वयमेकस्य न युक्तम् । अत उभयनिरूपितव्याप्त्योरेकत्रा[3]युक्तत्वात्तेनैव हेतुना विरोधोऽ-

---

[1] प्रबल प्र—ग. ट. रा.   [2] इति इति नास्ति—ग. ट. रा.   [3] रेकत्रायुक्त-ङ.

इति । न चाद्योसम्भवी । एकस्मिन् पक्षे साध्यतद्भावव्याप्ययोरिवैकस्मिन् हेतौ साध्यतद्भावव्याप्तयोरप्यभिमानतः सम्भवात् ॥

हेतोः साध्यप्रमाजननसामर्थ्याभावो हेतुदोषः । स द्विविधः असिद्धिरव्याप्तिश्च[1] श्चेति । समुचितदेशे हेतोरभावोसिद्धिः । व्याप्तिविरहोऽव्याप्तिः । सा च त्रेधा संभवति । साधनस्य साध्याभावेनेव साध्येनाप्यसम्बन्धेन सत्यपि साध्यसम्बन्धे तद्भावेनापि सम्बन्धेन साध्याभावेनैव सम्बन्धेन चेति ॥

---

सम्भवीत्याशङ्क्य निराह —**न चाद्य इति** । **व्याप्ययोरिवेति** । सत्प्रतिपक्षहेत्वोरिवेत्यर्थः । एकस्यैव हेतोः वादिनः साध्यव्याप्यत्वाभिमानः । प्रतिवादिनस्तद्भावव्याप्यत्वाभिमान इति सपक्षसत्त्वादिकमप्यभिमानत एवेति ध्येयम् । एवं प्रतिज्ञादोषं निरूप्य हेतुदोषमाह— **हेतोरिति** । लिङ्गस्येत्यर्थः । **सामर्थ्येति** । व्याप्तिसमुचितदेशवृत्तित्वरूपसामर्थ्याभाव इत्यर्थ । अनुगतसामान्याभावे विभागायोगात्पद्धत्याद्यनुक्तमपि स्वयमाह—**व्याप्तीति** । अन्यथानुपपत्तिरूपव्याप्तिविरह इत्यर्थः । साधनस्य साध्याभावेनेवेत्यादित्रयमपि परैः क्रमादसाधारणानैकान्तिकसाधारणानैकान्तिकविरुद्धशब्दैर्गीयते ॥

[1] प्तिरिति—ग. रा.

**व्याप्तिग्रहणानानुकूल्यं दृष्टान्तदोषः । स द्विविधः । साध्यवैकल्यं साधनवैकल्यं चेति । तत्र प्रमाणविरोधाख्य आद्यो दोषः प्रत्यक्षागमसाधारणः । इतरौ त्वनुमानासाधारणौ ॥**

**उक्तं हि प्रमाणलक्षणटीकायाम् ! अत्र प्रतिज्ञाविरोधः साधारणः । इतरौ त्वसाधारणाविति । न च हेतुदोषविभागस्य न्यूनता । पराभिमताः सव्यभिचारविरुद्धव्याप्यत्वासिद्धयो अव्याप्तावन्तर्भूता इति बाधप्रतिरोधौ तु हेतुदोषावेव नेति आश्रयासिद्धिव्यधिकरणासिद्धी तु सत्यां व्याप्तौ न दोषाविति वक्ष्यमाणत्वात् । सिद्धसाधनस्य तु मन्मते स्वार्थानुमानेऽदोषत्वात् । परार्थानुमाने चासङ्गतावन्तर्भावात् । अनुकूलतर्काभावस्य प्रतिकूलतर्कस्य चाव्याप्तावन्तर्भावात् । उपाधेरपि**

---

प्रतिज्ञाहेतुदोषौ निरूप्य दृष्टान्तदोषमाह—**व्याप्तीति** । ग्रहणपदेन प्रमाग्रहः । यस्मिन् सति व्याप्तिर्न प्रमातुं शक्यते स दृष्टान्तदोषः । एवं विरोधत्रयं निरूप्य तद्विवेकमाह—**तत्रेति** । प्रतिज्ञाहेतुदृष्टान्तविरोधमध्ये । **इतरौ त्विति** । हेतुदृष्टान्तदोषौ । निरूपितविभागस्य फलं वक्तुमाह—**न चेति** । परोक्तानां सव्यभिचार विरुद्धसत्प्रतिपक्षबाधितानां मण्याद्युक्तानां तदवान्तरभेदानां च बहूनां सत्त्वात् । तेषां चेहापरिगणनादिति भावः । कुतो न न्यूनतेत्यत आह—**पराभिमता इति** । इति शब्दद्वयस्याप्यग्रेतनेतिशब्दस्येव वक्ष्यमाणत्वादित्यनेनान्वयः । **असङ्गताविति** । विरोधोसङ्गतिश्चेति द्वावर्थदोषौ । तत्र विरोधस्यैवात्र प्रपञ्चनं कृतम् । न त्वसङ्गतेः ।

सत्प्रतिपक्षेऽव्याप्तौ चान्तर्भावस्योक्तत्वात् । व्यर्थ-विशेषणा[1]देश्चाधिक्येन्तर्भावात् ॥

तस्मादासिद्धिरव्याप्तिश्चेति द्वावेव हेतुदोषौ ॥

स्वाभिमतानुमानदोष:[2] ॥ २१ ॥

## अथ स्वमते बाधादेर्व्यभिचाराद्यसङ्करः ॥ २२ ॥

ननु पक्षे साध्याभावप्रमितिदशायां [3]हेतुरप्र-

सा त्वाकाङ्क्षाविरहोऽसङ्गतिरित्यादिना पद्धत्यादौ प्रपाञ्चितेतीह त्यक्ता । इष्टापत्तिः सिद्धसाधनत्वादसङ्गतमेवेति प्रमाणलक्षणाद्युक्तेरिति भावः । **उक्तत्वादिति** । उपाधेर्दूषकताबीजोक्तिप्रस्तावे उक्तत्वादित्यर्थः ॥

**व्यर्थेति** । यद्यपि 'विशेषणे, वैयर्थ्यमेकासिद्धौ च विशिष्टासिद्धिरेव हि' इति भक्तिपादीयानुव्याख्यानसुधायां विशेषणवैयर्थ्ये तु विशिष्टस्य व्याप्यत्वाभावाद्दोषत्वमित्युक्तम् । तथाऽपि यद्वाधिक्यान्तर्भूतमेवैतदित्यप्युक्तत्वादेवमुक्तमित्यदोषः ॥

स्वाभिमतानुमानदोषाः ॥ २२ ॥

## अथ स्वमते बाधादेर्व्यभिचारासङ्करः ॥ २३ ॥

प्रतिज्ञादोषस्य हेतुदोषात्पार्थक्यं यदुक्तं तदयुक्तम् । हेतुदोषाभ्यां असिद्धयव्याप्तिभ्यामेव सङ्ग्रहसंभवादिति भावेन—

"स्ववाक्येन विरोधेऽपि नैव साधकतां व्रजेत्" ।

इति युक्तिपादीयानुव्याख्यानसुधोक्तं विवृण्वान आक्षिपति—**नन्विति** । प्रबलप्रमाणविरोधापेक्षयोक्तं साध्याभावप्रमितीति । प्रति-

[1] णत्वादे-**ट. रा.** [2] षाः-**ट. रा.** [3] तत्रेत्यधिकम्-**ट. रा.**

मितः प्रमितो वा । आद्ये प्रमित्यसिद्धिः । द्वितीये पक्ष एव व्यभिचारो ज्ञात इति क्लृप्तेन व्यभिचारादिनैव दुष्टत्वेनासङ्कीर्णोदाहरणाभावात्किं बाधप्रतिरोधयोर्दोषत्वकल्पनयेति चेत् न । पक्षद्वयेऽपि दोषाभावात् ॥

तथा हि—आद्यस्तावदस्तु । प्रमित्यसिद्धिर्हि करणसामर्थ्यविघटनद्वाराऽनुमितिप्रतिबन्धिका । हेतुवचनाधीनोपस्थितिका च । बाधादिस्तु साक्षा[1]त्प्रतिबन्धकः । प्रतिज्ञाधीनोपस्थितिकश्च । न चान्तरङ्गे पूर्वोपस्थिते प्रत्यक्षा[2]दौ क्लृप्ते च

---

रोधापेक्षया तु साध्याभावज्ञानदशायामिति ध्येयम् । **व्यभिचारो ज्ञात इति ।** प्रबलप्रमाणविरोधे व्यभिचारज्ञानं निश्चयरूपं, समबलविरोधपक्षे तु संशयरूपं ध्येयम् । अत एव ज्ञात इति सामान्योक्तिः । न च पक्षीयव्यभिचारसन्देहोनुकूल एव नानुमानप्रतिकूलः तथात्वेऽनुमानमात्रोच्छेदापातेरिति चेन्न । स्वारसिकव्यभिचारसन्देहस्यानुकूलत्वेऽपि प्रमाणविरोधा[3]द्याहितसन्देहस्य प्रतिकूलत्वात् । अन्यथा सन्दिग्धोपाध्यादेरदोषत्वापातादिति भावः । **पक्षद्वयेपीति ।** अप्रमितत्वप्रमितत्वरूपपक्षद्वय इत्यर्थः । **सामर्थ्येति ।** समुचितदेशस्थत्वरूपसामर्थ्यविघटनद्वारेत्यर्थः । अनुमितिविषयाभावानवगाहिनस्तथैव प्रतिबन्धकत्वादिति भावः । **हेतुवचनेति ।** प्रतिज्ञामात्रेण तदनुपस्थितेरितिभावः । **प्रतिज्ञाधीनेति ।** 'प्रतिज्ञामा-

---

[1] त्तत्प्रति–रा.　[2] दिक्षु क्लृ–ट. रा.　[3] धाद्धया–ट. धादाहि–ठ.

बाधादौ[1] लब्धे तद्विपरीतस्यासिद्धत्वस्य प्रतीक्षा युक्ता । अन्यथोच्यमानग्राह्ये निग्रहे लब्धेपि उक्तग्राह्यः प्रतीक्षेत ॥

द्वितीयो वाऽस्तु । हेतुर्हि साध्याभाववार्तानभिज्ञेन ज्ञानान्तरेण पक्षे प्रमितः साध्याभावस्तु हेतुवार्तानभिज्ञेन बाधेन । हेतोः साध्याभावसामानाधिकरण्यरूपव्यभिचारस्तु न केनापि । तद्विषयकस्य साध्याभाववति हेतुरिति ज्ञानस्याभावात् । तथा च बाधाद्युपस्थितिदशायां सन्नपि व्यभिचारो न धीस्थ इति द्राग्धीस्थत्वाद्विषयापहारित्वेनोत्कटत्वाच्च बाधादिरेव दोषः । यथा मूको वक्तेत्यादौ प्रमाणविरोधे सत्यपि द्राग्धीस्थः प्रतिज्ञापदविरोध एव दोषः । यथा च माता वन्ध्या प्रमेयत्वादित्यत्र व्यभिचारे सत्यप्युत्कटः प्रतिज्ञाविरोध एव दोषः । अस्तु वा साध्याभाववति पक्षे हेतुरिति विशिष्टज्ञानम् । तथापि पक्षे साध्यं नेति ज्ञानांशः पक्षे हेतुरिति

---

त्रेणास्फुरणा'दिति प्रमाणलक्षणटीकोक्तेरिति भावः । **उच्यमानेति** । मूकोहमित्यादौ स्वक्रियाविरोध उच्यमानग्राह्य प्रमाणविरोधः उक्तयनन्तरग्राह्यत्वादुक्तग्राह्यः । पूर्वं हेतोः साध्याभावसामानाधिकरण्यरूपव्यभिचारो नोपस्थित इत्युपेत्य पृथग्दोषत्वं बाधादेरुक्तम् । इदानीं व्यभिचारोपस्थितिमभ्युपेत्यापि पृथग्दोषत्वं बाधादेराह—**अस्तु वेति** ।

[1] दौ सिद्ध त—ट. रा.

ज्ञानांशनिरपेक्ष एव दोषः। विषयापहारित्वात्। पक्षे हेतुरिति ज्ञानांशस्तु पक्षे साध्यं नेति ज्ञानांशसापेक्ष एव दोषः। तन्निरपेक्षस्य तस्य गुणत्वात्। तथा च यथा साधारणे सपक्षवृत्तित्वे सत्यपि विपक्षवृत्तित्वमेव दोषः तथा पक्षे हेतुज्ञाने सत्यपि प्राप्ताप्राप्तविवेकेन पक्षे साध्याभावप्रमारूपबाधाद्यंश एव दोषः॥

स्वमते बाधादिर्व्यभिचाराद्य[1]सङ्करः ॥ २२ ॥

## अथ बाधप्रतिरोधयोः प्रतिज्ञादोषत्वसमर्थनम् ॥

केचित्तु बाधप्रतिरोधौ हेतुदोषावित्याहुः

**साधारण इति।** पक्षसपक्षविपक्षवृत्तिरूपसाधारणानैकान्तिक इत्यर्थः। **विपक्षवृत्तित्वमेवेति।** पक्षसपक्षवृत्तित्वस्यानुमित्यनुकूलत्वेन विपक्षवृत्तित्वमात्रस्यैव प्रतिकूलत्वेन तस्यैव दोषताया हेत्वाभासग्रन्थे मण्यादावुक्तेरिति भावः। **प्राप्ताप्राप्तेति।** दोषत्वेन प्राप्तः साध्याभावप्रमांशः दोषत्वेनाप्राप्तः हेतुसत्त्वप्रमांश इति प्राप्ताप्राप्तविवेकेनेत्यर्थः॥

स्वमते बाधादिर्व्यभिचारा[2]सङ्करः ॥ २३ ॥

## अथ बाधप्रतिरोधयोः प्रतिज्ञादोषत्वसमर्थनम् ॥ २४ ॥

नन्वथापि बाधप्रतिरोधयोरसिद्ध्यव्याप्तिरूपहेतुदोषत्वाभावेपि बाधितविषयत्वादिरूपं पृथगेव हेतुदोषत्वमस्तु तथैव मण्याद्युक्तेः प्रतिज्ञादोषत्वं कथमित्यतस्तत्समर्थयितुमाह–**केचित्त्विति।** तार्किकादयः॥

[1] रास–ट. रा. [2] रस–ठ. ड.

तन्न । कुठारे कुण्ठत्वादिदोषाभावेप्याकाशस्य छेदनायोग्यत्वेनैव [1]छेदानुत्पत्तिवत्, चक्षुरादौ काचादिदोषाभावेप्यतिदूरत्वातिसामीप्यसमानाभिहारसादृश्याद्यर्थदोषेणैव प्रत्यक्षप्रमानुत्पत्तिवत्, अग्निना सिञ्च[2]तीत्यादिशब्दे निरभिधेयत्वन्यूनत्वादिशब्ददोषाभावेप्ययोग्यत्वरूपार्थदोषादेव शाब्दप्रमानुत्पत्तिवदनित्यो घटः प्रमेयत्वादित्यादौ प्रमेयदोषाभावेपि हेतुदोषेणैव दुष्टत्ववच्च, सर्वं तेजोऽनुष्णं प्रमेयत्वादित्याद्यनुमाने हेतुदोषाभावेपि प्रतिज्ञाता[3]र्थस्य प्रमाणान्तरविरुद्धत्वेन साधनानर्हत्वरूपप्रमेयदोषेणैवानुमानिकप्रमानुत्पत्तेर्वक्तव्यत्वात्॥

"विरोधोपि त्रिधैवस्यात्प्रतिज्ञार्थविरुद्धता ।
लिङ्गराहित्यमव्याप्ति"

रित्यादियुक्तिपादीयानुव्याख्यानसुधोक्तं हृदि कृत्वा करणस्यादुष्टत्वेप्यर्थदोषनिबन्धनकार्यानुत्पत्तिस्थळे [4]दोषस्यैव वाच्यत्वादिति सदृष्टान्तमाह—कुठारे[5]ति । समानेति । क्षीरनीरादौ माषराशिमण्यादौ सादृश्यसूक्ष्मत्वरूपार्थदोषेणेत्यर्थः । विजातीयकरणं सजातीयप्रत्यक्षशब्दरूपकरणं च दृष्टान्तीकृत्यान्तरङ्गानुमानरूपकरणं च दृष्टान्तयति—अनित्य इति । प्रमेयेति । साध्यदोषाभावेपीत्यर्थः । हेतुदोषाभावेपीति । सर्वतेजसः पक्षतया तदन्यस्य व्यभिचारस्थळस्याभावेन व्यभिचारदोषाभावात् असिद्ध्यादेरनाशङ्क्यत्वादिति भावः ॥

[1] छिदा–ट. रा. [2] श्चोदत्या–ट. रा. [3] ज्ञार्थ–ट. रा. [4] ळेर्थ–ठ. [5] रे इ–ट. ड.

**किंच बाधप्रतिरोधयोरनुमितिग्राह्यविरुद्धविषयत्वेन परमुखनिरीक्षणनिरपेक्षतया प्रत्यक्षादाविवानुमानेपि साक्षादेवानुमितिरूपफलप्रतिबन्धकत्वे संभवति बकबन्धन्यायेन करणवैकल्यसंपादनद्वारा फलप्रतिबन्धकत्वकल्पनमयुक्तम् । अन्यथा सादृश्याद्यर्थदोषेणैव दूषिते प्रत्यक्षे काचादिकरणदोषः कल्प्येत ॥**

ननु बाधस्य पक्षनिष्ठत्वेन प्रमिताभावप्रतियोगिसाधकत्वेन रूपेण हेतुदोषत्वोक्तावप्या[1]नुमानिकप्रमानुत्पत्तियुक्तेति वादिनं प्रति लक्षणटीकोक्तरीत्या दोषान्तरं चाह — **किंचेति । प्रत्यक्षादाविति ।** पीतः शङ्ख इत्यादिप्रत्यक्षे श्वेतः शङ्ख इति प्रत्यक्षस्य यथा साक्षाद्ग्राह्यविरुद्धविषयकत्वेन पीतत्वप्रत्यक्षप्रतिबन्धकत्वं, घटोस्ति, घटो नास्तीत्यनयोः शब्दज्ञानयोर्यथा विरुद्धविषयकत्वेन प्रतिबध्यप्रतिबन्धकभावस्तथेत्यर्थः ॥

**बकबन्धेति ।** केन चित्कंचित्प्रतिबकबन्धोपायं ब्रूहीति पृष्टे वदति । बकस्य शिरसि नवनीते निहिते सत्यातपेन नवनीते द्रवीभूते चक्षुषोर्मध्ये पतिते सति चक्षुषोर्निमीलनं यदा बकस्य भवति तदा तद्बन्धनं कार्यमिति । तत्र नवनीतनिधानदशायामेव बन्धनसंभवे पश्चाद्बन्धनोपायो यथा वक्रस्तथा व्याप्तिरूपकरणवैकल्यसंपादनद्वारा हेतुदोषत्वकल्पनमपि वक्रत्वादयुक्तमित्यर्थः । यद्वा परामर्शरूपकरणे व्याप्तिविषयकत्ववैकल्यसंपादनद्वारेत्यर्थः ॥

---

[1] प्यनुमानुत्पत्तियु—ट.

**अपि च यो हि यन्निष्ठतया ज्ञातः सन्ननुमिति प्रतिबन्धकः स तस्य दोषः। अन्यथा प्रतिज्ञाहान्यादिकमपि हेतुहान्यादिकं स्यात्। नित्यः शब्दः अनित्य इति प्रतिज्ञाश्रिताः स्ववचनविरोधादयः अनित्यो वर्ण इति मीमांसकप्रयुक्त प्रतिज्ञाश्रितापसिद्धान्तादयश्च हेतुदोषाः स्युः। न च बाधादिर्हेतुनिष्ठतया ज्ञातस्तत्प्रतिबन्धकः। प्रतिज्ञानन्तरं हेतूपस्थितेः प्रागेव प्रतीतेन तेनानुमितिप्रतिबन्धात् ॥**

**यदि च पक्षनिष्ठत्वेन प्रमिताभावप्रतियोगि-**

गुरुत्वान्न हेतुदोषत्वकल्पनं युक्तमित्युक्तम्। कल्पकाभावाच्च न हेतुदोषत्वं युक्तमिति सामान्यन्यायं विपक्षबाधपूर्वमाह—**अपि चेति। प्रतिज्ञेति।** येन यद्यथा प्रतिज्ञातं तेन तस्य तथा परित्यागः प्रतिज्ञा हानिः, आदिपदेन प्रतिज्ञान्तरप्रतिज्ञाविरोधप्रतिज्ञासन्न्यासादिग्रहः। पूर्वं शब्द इत्यविशिष्टतयोक्ते साध्यभागे वर्णात्मको नित्य इति विशेषणप्रक्षेपः प्रतिज्ञान्तरम्। मिथो व्याघातः प्रतिज्ञाविरोधः। स्वोक्तापलापः प्रतिज्ञासन्न्यासः। प्रतिज्ञाहान्यादिनिग्रहस्थानमपि त्यक्तप्रतिज्ञकत्वादिरूपेण हेतुहान्यादिकं स्यादित्यर्थः। **हेतुदोषाः स्युरिति।** विरुद्धप्रतिज्ञकत्वादिरूपेण हेतुनिष्ठतयेति भावः। व्याप्तिं समर्थ्य पक्षे नास्तीत्याह—**न चेति ॥**

बाधकभावाच्च न हेतुदोषत्वकल्पनं युक्तमित्याह—**यदि चेति।** यद्वा बाधादिरपि हेतुनिष्ठत्वेनैव ज्ञातो दोषो नान्यथेति वादिनं प्रति बाधकमाह—**यदि चेति ॥**

**साधकत्वं बाध इति बाधस्य हेतुनिष्ठत्वेन ज्ञानं कल्प्यते । तर्हि पक्षनिष्ठत्वेन प्रमिताभावप्रतियोगिसाध[1]कत्वमसिद्धिः व्याप्तिरहितसाधक[2]त्वमव्याप्तिरित्यसिद्ध्यव्याप्त्योरपि साध्यनिष्ठत्वेन ज्ञानं कल्प्यताम् ॥**

**अपि च बाधादिः प्रत्यक्षादिसाधारणः । हेत्वाभासत्वे तु हेत्वसाधारणदोषत्वं तन्त्रम् । अन्यथा मनोनवधानादिरपि हेत्वाभासः स्यात् ॥**

**ननु साधारण्येऽपि ज्ञायमानत्वेनानुमितिप्रतिबन्धकतया मनोऽनवधानादिविलक्षणत्वाद्बाधादेर्हेत्वाभासत्वमिति चेन्न । त्वन्मतेऽनुमितिप्रतिबन्धकसाध्यासिद्धिं प्रति विषयस्य साध्यस्यापि हेत्वाभासत्वात् ॥**

प्रतिज्ञाविरोधः साधारणः इतरौ त्वसाधारणाविति लक्षणटीकासूचितयुक्त्या च हेतुदोषत्वं निराह—**अपि च बाधादिरिति ।** प्रतिरोध आदिपदार्थः । तावता कुतो न हेतुदोषतेत्यत आह—**हेत्विति । अन्यथेति ।** प्रत्यक्षादिसाधारणदोषस्यापि हेत्वाभासत्व इत्यर्थः वैषम्यमाशङ्क्य निराह—**नन्वित्यादिना । साध्यस्यापीति ।** साध्यसिद्धेः प्रतिबन्धकत्वे साध्यस्यापि ज्ञायमानतया प्रतिबन्धकत्वादिति भावः ॥

बाधादेः प्रत्यक्षादिसाधारण्यमेवासिद्धं येन हेतुदोषत्वं न स्यादिति

[1] धनक—रा. [2] धनक—रा.

ननु प्रत्यक्षादावुत्पन्नस्य ज्ञानस्य बाधेनाप्रमाणत्वमेव बोध्यते दिङ्मोहादौ दर्शनात्[1] अनुमितौ तूत्पत्तिरेव प्रतिबध्यते इत्यसाधारण्यमिति चेन्न । [2] तथापि [3] शब्दस्यात्यन्तासत्यपि धीहेतुत्वेन[4] लिङ्गाभासस्यापि तद्धेतुत्वावश्यंभावात् [5] मत्साधारण्यापरिहारात् । विषयबाधेऽविशिष्टे[6] शब्दाभास एवासदर्थबोधको न तु लिङ्गाभास इत्यस्य च परिभाषामात्रत्वात् । दृश्यते च बाधावतारानन्तरमपि त्वदनुमितमसदित्यनु[7]वादः ॥

किं च यः करणसामर्थ्यरूपव्याप्तिपक्षधर्मतान्यतरविघटनरूपः स एव हेत्वाभासः । बाधादिस्तु न तथा । करणासंस्पर्शित्वात् ॥

शङ्कते—नन्विति । बाधेन विपरीतज्ञानेनेत्यर्थः । उत्पत्तिरेवेति । अनुमित्युत्पत्तिरेव बाधेन प्रतिबध्यत इत्यर्थः । उत्पत्तिप्रतिबन्ध एवासिद्धः येनासाधारण्यं स्यादित्याह—शब्दाभासस्येति । शशविषाणमस्तीत्यादिवाक्याद्गोविषाणमस्तीति वाक्यादिव बुद्ध्युत्पत्तेर्वादिवाक्यादसदर्थकात्प्रतिवादिनो बोधोत्पादस्य योग्यतावादे व्युत्पादितत्वादिति भावः ॥

ननु तत्र बाधावतारानन्तरं शब्दादवगतमस[8]देवेत्यनुभवादस्तु शब्दाभासस्याबोधकत्वं न तु लिङ्गाभासस्य । तथाननुभवादित्यत आह—दृश्यते चेति । करणासंस्पर्शित्वादिति । साध्याभावप्रमा-

[1] परीक्षायां इत्यधिकम्-ग. ट. रा. [2] तथापि इति न-ग.ट.रा. [3] ब्दाभासस्या-ग. ट. रा. [4] त्वदर्शनेन ग. ट. रा [5] मत्साधारण्यापरिहारात् इति न -ग. रा. [6] ष्टेपि-ग. ट. रा. [7] नुभवः-ग. ट. रा. [8] दित्यनु-ट.

तस्माद्बाधप्रतिरोधौ साधनानर्हत्वरूपप्रमेयदोषत्वात्, साक्षादेवानुमितिप्रतिबन्धकत्वात्, प्रतिज्ञानन्तरं हेतूपस्थितितः प्रागेव प्रतिभासात्, प्रत्यक्षशब्दसाधारण्यात्, करणसामर्थ्याविघट[1]नत्वाच्च न हेतुदोषौ । किं तु प्रतिज्ञादोषाविति ॥

या तु टीकाकारीया—

'अदृष्टे व्यभिचारेतु साधकं तदितिस्फुटम् ।
ज्ञायते साक्षिणैवाद्धा मानबाधे न तद्भवेत् ॥

इत्यनुव्याख्यानस्य प्रत्यक्षबाधेनानुमानस्य व्यभिचारो भवतीति व्याख्या सा व्याप्तिग्रहणदशाभिप्राया । तदा प्रतिज्ञादिविभागाभावात् । अनुमितिदशायां तु बाधो विषयापहारेण प्रतिज्ञा दोष एव । अन्यथा प्रमाणविरुद्धार्थप्रतिज्ञा प्रतिज्ञाविरोध इति प्रमाणलक्षणविरोधात् ॥

याऽपि अनुव्याख्याने—

यां[2] करणाप्रतीतेरिति भावः । तस्मादित्येतत्प्रागुक्तरीत्या पञ्चधा व्याचष्टे—साधनानर्हत्वेत्यादिना । भक्तिपादीयसुधाविरोध[3] माशङ्क्य तदभिप्रायोक्त्या निराह—यात्विति । सेत्यन्वयः । व्याप्तिग्रहणेति । व्याप्तिग्रहणसमयेऽव्याप्तेरुत्थापको बाध इति पक्षस्त्विष्यत एव "मानबाधे न तद्भवे दिति वक्ष्यमाणत्वा" दिति युक्तिपादीयसुधोक्तेरिति भावः । युक्तिपादीयानुव्याख्यानोक्तिविरोधंच निराह—याऽपीति । तत्र प्रतिज्ञार्थविरोध इत्येवोक्तावपि सुधायां वक्ष्यमाण-

[1] टकत्वा–ग. ट. रा.  [2] याः–क. ठ  [3] रोधायाश–ड. ठ.

"विरोधोपि त्रिधैव स्यात्प्रतिज्ञार्थविरुद्धता ।
लिङ्गराहित्यमव्याप्तिः"

इति बाधप्रतिरोधयोरसिद्ध्यादिना सह हेतुदोषत्वोक्तिः साऽपि बाधादिनैव दूषिते विषये प्रवर्तमानस्य हेतोरप्यविषयवृत्तित्वं नाम दोषोस्तीत्यभिप्रेत्यैव । न तु बाधादिर्न विषयदोष इति ॥

बाधप्रतिरोधयोः प्रतिज्ञादोषत्वसमर्थनम् ॥ २३ ॥

## अथ साध्यसाधनवैकल्ययोर्दृष्टान्तदोषत्वसमर्थनम् ॥ २४ ॥

ननु साध्यविकलो दृष्टान्तो विपक्ष एवेति तत्र वर्तमानो हेतुः सपक्षान्तरवृत्तौ सत्यां पक्षत्रयवृत्ति-

विभागानुरोधेन बाधप्रतिरोधयोरित्यनुवादः । इत्यभिप्रेत्येति । तथैऽव सुधायां प्रतीतेरिति भावः ॥

बाधप्रतिरोधयोः प्रतिज्ञादोषत्वसमर्थनम् ॥ २४ ॥

## अथ साध्यसाधनवैकल्ययोर्दृष्टान्तदोषत्वसमर्थनम् ॥ २५ ॥

साध्यवैकल्यादेर्हेतुदोषत्वेन[1] पार्थक्यं प्रागुक्तमयुक्तमित्याशङ्क्य निराह—**नन्वित्यादिना** ॥

[1] संग्रहसंभवाद्दृष्टान्तदोषत्वेन इत्यधिकम्—ठ. ड.

त्वात्साधारणः । असत्यां तु सपक्षवृत्तौ पक्षविपक्षयोरेव वर्तमानत्वाद्विरुद्धः । साध्यधर्मवति दृष्टान्ते साधनविकले हेतुर्व्याप्यत्वासिद्ध इति दृष्टान्ताभासो हेत्वाभासान्तर्गत एवेति चेन्न । बाधादेः पक्षाश्रिततयेवाव्याप्त्यादेर्हेत्वाश्रिततयेव च साध्यवैकल्यादेर्दृष्टान्ताश्रिततयैव प्रतिभासात् । प्रतिभासानुसारेण चोद्भाव्यत्वात् । उद्भाव्यस्य चैव व्युत्पाद्यत्वात् ॥

किंचोपजीव्यत्वेनानुमानाङ्गदृष्टान्तदोषेणैवानुमाने दुष्टे कथं पिष्टपेषकहेत्वाभासप्रतीक्षा । अन्यथा बाधे पक्षस्यैव विपक्षत्वात् बाधो व्यभिचारेऽ[1]न्तर्भूतः स्यात् । सव्य[2]भिचारविरुद्धौ[3] च व्याप्तिहीनत्वाद्व्याप्यत्वासिद्धेऽन्तर्भूतौ स्याताम् । असाधारणे च सपक्षस्य साधनवैकल्यावश्यंभावा-

---

"साध्यसाधनवैकल्यं दृष्टान्तस्य विशेषणे" ।

[4]इति भक्तिपादीयानुव्याख्यानसुधोक्तरीत्या दृष्टान्तदोषत्वमुपपादयति—**बाधादेरिति** । ननु साध्यवैकल्यादिस्थळे व्यभिचारादेरपि सामग्रीबलेन स्फुरणसंभवात् व्यभिचारादिरप्युद्भाव्य इति हेत्वाभासत्वेन व्युत्पादनं युक्तमिति चेत्तदाऽप्युपजीव्यत्वाद्दृष्टान्तदोष एवेत्याह—**किंचेति** । विपक्षेऽनेकबाधकसत्त्वा[5]च्च दृष्टान्तदोषत्वमेव युक्तमित्याह—**अन्यथेति** ।

[1] रान्त—**ग. ट. रा.** [2] व्यभिचा—**ग. रा.** [3] विरुद्धौचाव्याप्त्यधीनत्वात् व्याप्यत्वासिद्धौ अन्तर्भू—**ट.** विरुद्धौ च व्या—**रा** [4] इत्यादि भ—**ठ.** [5] सद्भावाच्च—**ठ.**

त्सोपि साधनवैकल्येन्तर्भूतः स्यात् । अनुपसंहारिणि च दृष्टान्ताभाव आवश्यक इति सोपि दृष्टान्ताभासेन्तर्भूतः स्यात् ॥

किंच जीवच्छरीरजातं सात्मकं प्राणादिमत्त्वात् घटवदित्यत्र शब्दोऽभिधेयः प्रमेयत्वाद्व्यतिरेकेण घटवदित्यत्र च क्रमेण व्यतिरेकव्याप्तेरन्वयव्याप्तेश्च सत्त्वेन हेतुदोषाभावेपि धूमानुमानेपि ह्रदे दृष्टान्तिते हेतुदोषाभावेपि दृष्टान्तो दुष्ट इति तद्दोषः पृथगेव । तत्राप्यनुपदर्शितव्याप्तिकत्वाद्व्याप्यत्वासिद्धिरेवेति चेन्न। तथाप्यर्थदोषाभावात्। तत्रैव महानसे दृष्टान्तिते व्याप्यत्वासिद्धिर्नेति तस्यानित्यदोषत्वापाताच्च । ह्रदे दृष्टान्तितेपि यत्र धूमस्तत्राग्निरिति पूर्वभागेन व्याप्तेरुपदर्शितत्वाच्च ॥

---

हेतुदोषसाङ्कर्यमात्रेण हेतुदोषत्व इत्यर्थः । अनुपसंहारिणिचेति । सव्यभिचारस्त्रिविधः साधारणोऽसाधारणोऽनुपसंहारी[1]त्युक्ते व्यभिचारभेदभिन्ने सर्वमनित्यं कार्यत्वादित्यादावित्यर्थः । हेतुदोषासंकीर्णत्वाच्च दृष्टान्तदोषः पृथगित्याह—किंच जीवच्छरीरेति । सपक्षान्तरे वर्तमानस्य साधनस्य दृष्टान्तीकृते "सपक्षे वृत्तौ हेत्वाभासत्वानुपपत्तेश्चे"ति पद्धत्युक्तमाह—धूमेति । हेतुदोषसाङ्कर्यमाशङ्कते–तत्रापीति । तत्रैवेति । धूमानुमान एवेत्यर्थः । तस्याः व्याप्यत्वासिद्धेः । उपदर्शितव्याप्तिकत्वदशायां व्याप्यत्वासिद्धिशङ्कापि नेत्याह—ह्रद इति ॥

नन्वस्त्वेवं साध्यवैकल्यादेर्दृष्टान्तदोषत्वं तथाऽपि दृष्टान्तदोषो

---

[1] रिचेत्युक्तसव्यभिचा–ङ.

उभयवैकल्यं तु न पृथग्दोषः । एकवैकल्येनैव दुष्टत्वसिद्धे[1]रितरवैकल्यस्य वैयर्थ्यात् । संभवमात्रेण पृथग्वचने अनैकान्तिककालातीतत्वं असिद्धकालातीतत्वमित्याद्यपि हेत्वाभासान्तरं स्यात् । आश्रयहीनत्वाव्याप्त्यभिधानाद्युदाहरणाभासस्यान्तर्भावः पद्धत्यादौ द्रष्टव्यः ॥

या तु "साध्यस्य साधनस्य वाऽननुगमो दृष्टान्तविरोध" इति प्रमाणलक्षणव्याख्यावसरे टीकाकारीया "उभयोर्वेति ग्राह्य"मित्युक्तिः सा यथा मनोऽनित्यं मूर्तत्वात्परमाणुवत् कर्मवत् इत्यत्र क्रमेण साध्यवैकल्यं साधनवैकल्यं च दोषः तथा गगनवदित्यादौ उभयवैकल्याख्यौ दोषौ स्त इत्यभिप्रत्यैव । न तूभयवैकल्य[2]दूषणस्य पृथग्दोषत्वमित्यभिप्रेत्य । अन्यथैकवैकल्येन दृष्टान्तस्य दुष्टत्वे समुदितकल्पनावैयर्थ्यादित्यादि-

द्विविध इत्ययुक्तं तस्यानेकविधत्वादित्यत आह—**उभयेति** । सुघोक्तमेवाह—**एकवैकल्येनैवेति** ॥

नन्वथापि दृष्टान्तरूपाश्रयासिद्धिव्याप्त्यनभिधानविपरीतव्याप्त्यभिधानादीनां दृष्टान्तदोषाणां का गतिरित्यत आह—**आश्रयहीनत्वेति** । आदिपदेन प्रमाणलक्षणटीका ग्राह्या । उभयवैकल्यस्यापि दोषत्वेन लक्षणटीकायामुक्तत्वप्रतीतेः तद्विरोधमाशङ्क्यानिराह[3]—**यात्विति** ।

[1] द्धौ इत–ग. ट. रा. [2] ल्यरूपेणैकदोषत्वमि–ग. रा. [3] ङ्क्या–ङ.

सुध[1]योभयवैकल्यं न पृथग्गणनीयमिति [2]प्रमाण-
पद्धत्या च विरोधात् ॥

साध्यसाधनवैकल्ययोर्दृष्टान्तदोषत्वसमर्थनम् ॥ २४ ॥

## अथाश्रयासिद्धेर्दोषत्वभङ्गः ॥ २५ ॥

आश्रयासिद्धिस्तु न दोषः । तथा हि—
न तावदाश्रयासिद्धत्वं अनित्यो घटः कार्यत्वा-

**सुधयेति** । भक्तिपादीय सुधयेत्यर्थः ॥

साध्यसाधनवैकल्ययोर्दृष्टान्तदोषत्वसमर्थनम् ॥ २५ ॥

## अथाश्रयासिद्धेर्दोषत्वभङ्गः ॥ २६ ॥

ननु यदुक्तमसिद्धिरव्याप्तिरिति द्वावेव हेतुदोषाविति तदयुक्तम् । आश्रयासिद्धत्वाप्रसिद्धसाध्यकत्वव्यधिकरणासिद्धत्वरूपहेतुदोषाणां भावादित्यतः "आश्रयसाध्यव्यधिकरणासिद्धयो न दूषणम्" इत्यादिप्रमाणलक्षणतट्टीकाद्युक्तरीत्याश्रयासिद्धत्वादेरदोषत्वं व्युत्पादयितुकाम आश्रयासिद्धत्वांशे तावदुत्तरमाह—**आश्रयासिद्धिस्त्विति** । तत्किमाश्रयासिद्धत्वं सिद्धसाधकत्वं वा पक्षीकृताकारेणासत्त्वं वा अभावाश्रयत्वं वा [3]असदाश्रयत्वं वा असदाश्रयकत्वं वा आद्यत्रयं तावन्नयुक्तमिति निराकरोति—**न तावदिति, नापि स्वर्णमय इति, नाप्यत्यन्ताभावेति च** ग्रन्थेन ।

[1] धायां—ग. ट. रा. [2] प्रमाणपदं न—ग. ट. रा. [3] असदाश्रयत्वं वा इति नास्ति ठ. असदाश्रयकत्वं वा इति न—ड.

द्वटवदित्यादाविव सिद्धसाधकत्वं तत्र सन्देहगर्भितपक्षत्वाभावेन पक्षरूपाश्रयाभावादिति युक्तम् । सन्देहाभावेपि[1] पक्षताया उक्तत्वात् । तस्य मन्मतेप्यसङ्ग[2]तत्वान्तर्भावेण दोषत्वात् ॥

नापि स्वर्णमयोद्रिरग्निमानित्यादाविव पक्षविशेषणाभावेन पक्षीकृताकारेणासत्त्वं तस्य मन्मतेऽपि बाधान्तर्भावेण[3] दोषत्वात् ॥

नाप्यत्यन्ताभावश्रय[4]कत्वम् अभावस्य तुच्छत्वेन प्रतिबन्धकाभावे[5] कारणत्वस्येवाभावे आश्रयत्वस्याप्यभावात् अत्यन्ताभावस्याप्रामाणिकप्रतियोगिकत्वेनाप्रामाणिकत्वाच्चेति युक्तम् । अत्य-

न तावदित्यस्य युक्तमित्यन्वयः । सिद्धसाधकस्य कथमाश्रयासिद्धत्वमित्यतो दूषणसौकर्यायाह— **तत्रेति** । **उक्तत्वादिति** । पक्षलक्षणोक्तिप्रस्तावे साध्य[6]धर्मविशिष्टः पक्ष इत्युक्तत्वादित्यर्थः । **दोषत्वादिति** । परार्थानुमानेऽसङ्गतिरूपनिग्रहस्थानान्तर्भूतत्वेन दोषत्वस्य स्वाभिमतानुमानदोषोक्तिप्रस्तावे कथितत्वादिति भाव । **पक्षविशेषणाभावेनेति** । आश्रयविशेषणासिद्ध्या चाश्रयासिद्धिरसंकीर्णेति मण्युक्तेरिति भावः । **बाधान्तर्भावेनेति** । पक्षतद्विशेषणसाध्यतद्विशेषणादिबाधभेदेन बाधस्यानेकविधत्वात्पक्षविशेषणबाधे[7]न्तर्भाव इति भावः । **नापीति** । युक्तमित्यन्वयः॥

अभावपक्षकत्वे आश्रयासिद्धत्वं हेतोः कुत इत्यत आह— **अभावस्येति** । **अप्रामाणिकत्वाच्चेति** । तथा च तस्य कथं पक्ष-

[1] अपिपदं न–**ग. ट. रा.** [2] ङ्गत्यन्त–**क. ग. ट रा.** [3] वेन दो–**क. ग. ट. रा.** [4] यकत्वं–**क. ग. रा.** [5] कारणत्वाश्रयत्वाभावे–**क.** वे आश्रय–**ट.** [6] धर्मपदं न–**ठ. ड.** [7] न्तर्भवतीति–**ठ.**

न्ताभावप्रतियोगिन एव तुच्छत्वेनाभावस्यातुच्छत्वात् । प्रतिबन्धकाभावस्या[1]प्यन्यथासिद्ध्यैवाकारणत्वात् । अप्रामाणिकत्वस्य प्रामाणिकात्यन्ताभावप्रतियोगित्वरूपत्वेन हेतोर्विरुद्धत्वाच्च । तस्याप्यभावत्वाप्रामाणिक[2]प्रतियोगिकत्वादिधर्माश्रयत्वाच्च । तदुक्तम् । 'न चात्यन्ताभावोऽपि सर्वधर्मरहित' इति ॥

किं तु वन्ध्यासुतो न वक्ता अचेतनत्वादित्यादाविवासदाश्रयत्वम् । तस्य तु दोषत्वं किमसतो

त्वेनानुमानप्रमाणविषयतेत्यर्थः । कथं तर्हि प्रतिबन्धकाभावस्य कारणत्वं नेत्युक्तं द्वितीयपरिच्छेदे इत्यतस्तस्यासत्त्वादकारणत्वं न भवतीत्याह— **प्रतिबन्धकेति** । द्वितीयो हेतुरयुक्त इत्याह —**अप्रामाणिकत्वस्येति** । अत्यन्ताभावोप्रामाणिकः अप्रामाणिकप्रतियोगिकत्वादित्युक्तिरयुक्ता [3]अप्रामाणिकप्रतियोगिकत्वादित्यस्यतु [4] प्रामाणिकात्यन्ताभावप्रतियोगी यः तत्प्रतियोगिकत्वादित्यर्थः । तथा चात्यन्ताभावोप्रामाणिक इति यत्साध्यं तदभावेन प्रामाणिकत्वेनाप्रामाणिकप्रतियोगिकत्वादितिहेतुर्व्याप्त इति कथं न विरुद्धहेत्वाभास इत्यर्थः । **तस्यापीति** । तथाचाश्रयत्वस्यैवाभावादिति व्याहतमिति भावः । **तदुक्तमिति** । प्रमाणलक्षणे ॥

एवं पक्षत्रये निरस्ते प्रश्नपूर्वं चतुर्थमवशेषयति —**किंत्विति** ।

[1] अपिपदं न—ग. ट. [2] कत्वप्र—ग. रा. [3] अप्रामाणिक इत्यस्य प्रामाणिकात्यन्ताभावप्रतियोगीत्यर्थः—ट. [4] स्य प्रा—ड.

निर्धर्मकत्वेन, साध्यधर्मानाश्रयत्वेन बाधात् साधनाभावेनासिद्धेर्वा प्रतीत्यविषयत्वेन विधिनिषेधरूपसकलव्यवहाराभाजनत्वाद्वा[1] अप्रामाणिकत्वेन प्रमाणानङ्गत्वाद्वा नस्यादोषत्वेऽतिप्रसङ्गाद्वा निरधिकरणयोर्धर्मयोर्नियतसामानाधिकरण्यरूपव्याप्त्यभावाद्वा ॥

नाद्यौ । असति त्वदुक्तयोः साध्यसाधनधर्मानाश्रयत्वरूपयोः साध्ययोर्निर्धर्मकत्वरूपस्य साधनस्य चासंभवेन तत्रापि बाधादिप्रसङ्गात् । त्वदुक्तधर्माणामभावरूपत्वात्तत्र संभवे[2] च तत एव मदुक्तावक्तृत्वाचेतनत्वादेरपि संभवात् । भावरूपाणां तु मयाप्यनङ्गीकारात् ॥

यदि च साध्यधर्मा[3]द्यभावाद्याश्रयत्वाभावेऽपि

"दोषो व्याहतिरेवास्ति नृशृङ्गास्तित्वसाधने"

इत्यादिभक्तिपादीयानुव्याख्यानावतरणप्रस्तावे सुधायां विकल्पितरीत्या षोढा विकल्पयति—**किमित्यादिना । बाधादित्यादिपञ्चम्यन्तानां** दोषत्वमित्यनेनान्वयः । **धर्मयोरिति ।** साध्यसाधनरूपधर्मयोरित्यर्थः । **नाद्याविति ।** साध्यं नास्ति साधनं नास्तीति कल्पावित्यर्थः । बाधादीत्यादिपदेनासिद्धिग्रहः । **त्वदुक्तधर्माणामिति ।** साध्यधर्मानाश्रयत्वसाधनधर्मानाश्रयत्वनिर्धर्मकत्वरूपधर्माणामित्यर्थः । **तत्रेति ।** वन्ध्यासुतादावसतीत्यर्थः । एतेनेत्युक्तं व्यनक्ति—

[1] अप्रमाणत्वेनानङ्गत्वाद्वा—ट. अप्रामाणिकत्वाद्वा—रा. [2] वेन तत -क. ग.
[3] आदिपदं न-क. ग. ट. रा.

साध्यधर्मानाश्रयत्वस्य सत्त्वात्तव न बाधादिः[1] तर्हि वक्तृत्वाभावा[2]श्रयत्वाभावेऽपि वक्तृत्वा[3]नाश्रयत्वस्य सत्त्वान्ममापि न बाधादि ॥

एतेनासत्त्वादेव वक्तृत्वादिवदवक्तृत्वादिकमपि नेति बाधादीति निरस्तम् । वन्ध्यासुतविशिष्टस्य वक्तृत्वस्याभावं प्रति वन्ध्यासुतासत्त्वस्य साधकत्वेनाबाधकत्वात् । विशेषणविशेष्ययोरभावे विशिष्टाभावदार्ढ्यात् । तत एव प्रामाणिकत्व[4]वदप्रामाणिकत्वस्याप्यभावापाताच्च ॥

नन्वप्रामाणिकत्वादिकमसत्त्वानुगुणं तदभावे प्रामाणिकत्वेन [5]सत्त्वापातादिति चेत् । समं प्रकृतेऽपि अवक्तृत्वाभावे वक्तृत्वेन सत्त्वापातात् ॥

किंच वक्तृत्ववदवक्तृत्वस्या[7]भावे बाधवदबाधोपि

---

**वन्ध्येति** । कथं साधकत्वमित्यत आह—**विशेषणेति** । वन्ध्यासुत[6]रूपविशेषणस्य वक्तृत्वरूपविशेष्यस्य चाभाव इत्यर्थः । **तत एवेति** । असत्त्वादेवेत्यर्थः । सममित्युक्तं व्यनक्ति—**अवक्तृत्वेति** । **अवक्तृत्ववदिति** । अवक्तृत्वस्यैवेत्यर्थः । वन्ध्यासुतो न वक्ताऽचेतनत्वादित्यत्रावक्तृत्वरूपसाध्यधर्माभावाद्बाध इत्युक्तं त्वया, मया अवक्तृत्वाभावे वक्तृत्वं स्यादित्युक्तम् । वक्तृत्वमपि न चेत्तर्हि अवक्तृत्वं नेति कृत्वा बाध इति

[1] दि–ग. रा. 'दि' इति शोधितम्–ट. [2] वाद्याश्र–ग रा. [3] त्वाद्यना–ग. ट. रा. [4] वदप्रामाणिकेतीति नास्ति–क. ग. ट. रा. [5] नासत्त्वाभावापा–रा. [6] तत्त्वरू–ठ. [7] अपिपदं अधिकं–ग. ट. रा.

**स्यात्। अपि च त्वदुक्तवक्तृत्वावक्तृत्वोभयाभावरूपं साध्यमसत्त्वरूपं साधनं च न स्यादिति तत्रापि बाधादि स्यात्। नन्वप्रामाणिकत्वादिकं प्रत्यसतो नाश्रयत्वेऽपि अप्रामाणिकत्वादिके तदाश्रितत्वं वा अस्त्येव तज्ज्ञानहेतुभूतज्ञानविषयत्ववि-शेषरूपं निरूपकत्वं वा युक्तम् आतीतादौ विषयत्व[1]रूपधर्माभावेपि तज्ज्ञाने त[2]द्विषयकत्वदर्शनात्। शुक्तिरूप्यतादात्म्यादौ प्रतीतिमात्रेण निरूपकत्वदर्शनाचेति चेत्। समं प्रकृतेपि॥**

---

त्वयोच्यते तथा तदभावरूपवक्तृत्वमपि नेत्यबाधोपि स्यादित्यर्थः। असदाश्रयस्थळे बाधासिद्ध्योरुद्भावनं स्वव्याहतं चेत्याह--**अपि च त्वदुक्तमिति**। वन्ध्यासुते वक्तृत्ववदवक्तृत्वमपि नास्ति असत्त्वादेवेति त्वदुक्तमित्यर्थः। **न स्यादिति**। असत्त्वादिति त्वदुक्तहेतोरेवेति भावः। **बाधादीति**। बाधासिद्धी स्यातामित्यर्थः[3]॥

परमुखेन समाधिं वाचयित्वा साम्येनोत्तरमाह--**नन्वित्यादिना**। **एतज्ज्ञानेति**। अप्रामाणिकत्वादिकं प्रति असत् आश्रय इति निरूपकत्वमस्ति। निरूपकत्वं च निरूप्यज्ञानहेतुभूतज्ञानविषयत्वमित्यर्थः। घटादिव्यवहारं प्रति निरूपकघटादिनिष्ठनिरूपकत्वव्यावृत्त्यर्थं विशेषरूपमित्युक्तम्। केषांचिदाश्रयाभावे असत्त्वमेव दृष्टमिति कथमाश्रयाभावे

[1] त्वप्रातियोगित्वरू- **ग. ठ. रा.** [2] दभावे च विषयित्वस्य तत्प्रातियोगिकत्वस्य चद-**ग. ट. रा.** [3] घटादिव्यवहारं प्रति निरूपकघटादिनिष्ठनिरूपकत्वव्यावृत्त्यर्थं विशेषरूपमित्यर्थं इत्यधिकम्-**ठ.**

विचित्रा हि धर्माः । केचिदाश्रिताः । यथा रूपादयः । केचिदन्याश्रिता अन्योपरञ्जकाः । यथा ज्ञानादयो घटादीनाम् । केचिदनाश्रिताः । यथाऽसत्त्वादयः शशशृङ्गमसदित्यबाधितप्रतीतेः । अन्यथा तस्यासत्त्वासिद्धेः ॥

किंच त्वन्मते भूतलघटाभावयोरपि संबन्धो न संयोगादिः नाप्यूर्ध्वाधरीभावादिः । किंतु निरूप्यस्याभावस्य स्वरूपमेव । न तु निरूपकस्याधिकरणस्योभयोर्वा स्वरूपम् । [1]घटतज्ज्ञानयोः

धर्माणां सत्त्वमित्यतः स्वभाव एवायं धर्माणामिति भावेन सुधोक्तमेवाह—**विचित्रा हीत्यादिना** ॥

ननु वन्ध्यासुतवक्तृत्वाभावरूपसाध्यासंबन्धो न वन्ध्यासुतसत्त्वं विनोपपद्यत इति कथं तत्राचेतनत्वहेतुना साध्यसंबन्धः सिध्येदित्यतोऽभावस्वरूपमेव तत्र संबन्ध इति दृष्टान्तपूर्वमाह— **किंच त्वन्मत इति** । संयोगादिः समवाय आदिपदार्थः । द्रव्यत्वादिरूपत्वाभावादिति भावः । **नापीति** । घटादि[2]मूर्तत्वाभावादिति भावः । **न तु निरूपकस्येति** । तथात्वे भूतलोल्लेख्यपि ज्ञानमभावोल्लेखि स्यादिति भावः । **उभयोर्वेति** । अनेकत्वापत्तेः भूतलधियोभावानुल्लेखित्वाच्चेति भावः । अभावस्य स्वरूपमेवेत्यत्र हेतुमाह—**घटस्येति** । यद्वा अभावस्वरूपमेवेत्यत्र नन्वि-

---

[1] घटस्य स्वज्ञानस्वाभावाभ्यां संबन्धस्य निरूप्यज्ञानाभावस्वरूपमात्रत्वदर्शनात्–ग. ट. रा. [2] दिवन्मर्त–ठ. ड.

**संबन्धस्य निरूप्यज्ञानमात्रस्वरूपत्वदर्शनात् । एवं वन्ध्यासुतवक्तृत्वाभावयोरप्यभावस्वरूपमेव संबन्ध इति नायमधिकरणसत्त्वापेक्षः ॥**

**मन्मतेऽपि भूतलघटाभावयोरिव वन्धयासुतवक्तृत्वाभावयोरपि संयोगाद्यन्योऽभावमात्राश्रितः संबन्धो नाधिकरणसत्त्वापेक्षः। अतीततज्ज्ञानयो[1]रसत्तज्ज्ञानयोः [2]शुक्तिरूप्यतादात्म्यतदभावयोरतीते[3]वर्तमानं[4]नास्तीत्यबाधित[5]प्रतीत्या अतीतवर्तमानाभावयोः शशशृङ्गमस[6]दित्यबाधितप्रतीत्या शशशृङ्गसत्त्वाभावयोः संबन्धे निरूप्यज्ञानाभावादिस्वरूपमात्राश्रितत्वदर्शनात् । तद्वदचेतनत्वा-**

त्यादिनोक्तसाध्यद्वये च हेतुमाह —**घटस्येति** । **नायमिति** । वक्तृत्वाभावसंबन्ध इत्यर्थः ॥

नन्वेवमपि भवन्मते सत्त्वापेक्षः स्यादित्यत आह—**मन्मतेपीति** । अभावमात्राश्रित इत्यत्र हेतुमाह—**अतीतेति** । षष्ठीद्विवचनान्तानां षण्णां संबन्ध इत्यनेनान्वयः । एवं वन्ध्यासुतो न वक्ता अचेतनत्वादित्यत्र बाधदोषं निरस्यासिद्ध्यादि निराह—**तद्वदिति** । अप्रामाणिकत्वादेरिव । तस्य यथा असदाश्रितत्वादिकमुच्यते तथेत्यर्थः ।

[1] रतीतध्वंसयोरस—**ग. ट. ग.** [2] शशश्रृङ्गमसदित्यबाधितप्रतीतेः शशश्रृङ्गसत्त्वाभावयोः अतीत—**ट.** [3] तेव—**क. ग. ट. रा.** [4] नत्वं ना-**ट. रा.** [5] तप्रतीतेरतीतवर्तमानत्वाभावयोः शुक्तिरूप्यतादात्म्याभावयोरभावमात्राश्रित—**ट.** [6] त्वाद्यभा—**ग.**

देरसत्त्वादेरसदाश्रितत्वस्य वा तन्निरूप्यस्व भावत्वरूपस्वरूपसंबन्धस्य वा अभावमात्राश्रितस्य संबन्धान्तरस्य वाऽसिद्ध्यादिशब्दार्थत्वान्नासिद्ध्यादि ॥

न तृतीयः । प्रतीत्याविषय इति प्रतीतिविषयत्ववत् सकलव्यवहाराभाजनमिति व्यवहारविषयत्ववच्च न वक्तेत्यादिप्रतीतिविषयत्वव्यवहारभाजनत्वयोरपि संभवात् । विस्तृतं चैतन्न्यायामृते ॥

किंच सकलव्यवहाराभाजनत्वे तव मौनं स्यात् । न चाप्रामाणिकेऽर्थे वावदूकत्वादपि मूकत्वमेव वरमिति वाच्यम् । वन्ध्यासुतस्याप्रा-

---

**अभावमात्रेति** । चेतनत्वाभावमात्रेत्यर्थः । सिद्ध्यादिपदार्थत्वादितिपदच्छेदः । आदिपदेन[1]बाधग्रहः । प्रतीत्यविषयत्वेन विधिनिषेधरूपसकलव्यवहाराभाजनत्वाद्वेति पक्षं निराह—**न तृतीय इति । न्यायामृत इति** । असतोपि साध्यसाधनधर्माश्रयत्वादिकमस्तीत्येतत् मिथ्यात्वनिरुक्तिभङ्गे असतः प्रतियोगित्वसमर्थनवादे चेति भावः । **तवमौनमिति** । वन्ध्यासुतो न वक्ता अचेतनत्वादित्यादावस्माभिरुक्ते सति तत्र प्रत्युत्तरं न [2]शक्यं स्यादितिभावः ॥

सत्यमेवमवक्तृत्वस्याप्रामाणिकत्वे मूकत्वमेव वरमिति भाषणं न चैतदप्रामाणिकमित्याह—**वन्ध्यासुतस्येति** । अप्रामाणिकसंबन्धिनः

---

[1] न पक्षधर्मतादिप्रहानि—ट. [2] वाच्यम् स्या—ड.

माणिकत्वेपि तदप्रामाणिकत्वस्यैव तदवक्तृत्व-
स्यापिप्रामाणिकत्वात् । अप्रामाणिकेर्थे इत्युक्त्वा
पुनर्मूकत्वोक्तौ, विधिनिषेधाभाजनत्वमुक्त्वा पुन-
र्वावदूकत्वनिषेधे मूकत्वविधौच व्याघाताच्च ।
अप्रामाणिकमसदाश्रयकत्वं निषेद्धुं[1] प्रक्रम्य व्या-
घातोद्भावनेऽप्रतिभया मध्ये मूकीभावादपि आदा-
वेव मूकीभावस्य वरत्वेन मदुक्तासदाश्रयत्वनिरा-
सासिद्धेश्च ॥

न चतुर्थः । असन्न प्रमाणाङ्गं अप्रामाणिकत्वा-
दिति प्रमाणा[2]ङ्गत्वात् न वक्ता अचेतनत्वादिति
प्रमाणाङ्गत्वस्यापि संभवात् ॥

कथं प्रामाणिकत्वमित्यतो दृष्टान्तोक्तिः । स्वक्रियाविरोधं चाह—**अप्रामाणिकेर्थ इति** । पुनर्मूकत्वोक्तौ व्याघातादित्यन्वयः । प्रकारा-न्तरेणापि व्याहतिमाह—**विधिनिषेधेति** । **असदाश्रयत्वमिति** । असतः साधनाश्रयत्वमिति वा साध्यसाधनयोरसदाश्रयत्वं वा अप्रा-माणिकमिति निषेद्धुमुपक्रम्य वर्तमानस्य तव प्रतीत्यविषय इति प्रतीतिविषयत्ववदित्यादिनाऽस्माभिर्व्याघातोद्भावने कृते सति प्रत्युत्तरा-परिस्फूर्तिरूपाप्रतिभया कथामध्ये मूकीभावादपि कथोपक्रम **एव** मूकीभावस्य वरत्वेनेत्यर्थः ॥

असतोप्रामाणिकत्वेन प्रमाणानङ्गत्वाद्वाऽसदाश्रयत्वं दोष इति पक्षं निराह—**न चतुर्थ इति** । असदाश्रयत्वस्यादोषत्वेऽतिप्रसङ्गादिति

[1] द्धुमुपक्र–क. ग. ट.　[2] णानङ्ग–ग. ट. रा.

न पञ्चमः। बाधादिहीनस्य वन्ध्यासुतो न वक्तेत्यादेः सद्धेतुत्वेन शशशृङ्गमस्ति शृङ्गत्वात् वन्ध्यासुतो वक्ता सुतत्वादित्यादेरसद्धेतोश्च बाधासिद्ध्यादिनैव दुष्टत्वेन चातिप्रसङ्गाभावात् । सुतत्वाभावेपि वन्ध्यासुतो न वक्तेत्यादौ पक्षीकरणं च वन्ध्यासुतशब्देन तथा प्रतीतिमात्रेण युक्तम् । नहि वन्ध्यासुतोसान्निति निषेधप्रयोजनकप्रसक्त्यर्थं वन्ध्यासुत इत्युक्तिमात्रेण[1] सुतत्वस्य सत्त्वं सिध्यति । अतिप्रसङ्गात् ॥

न षष्ठः । सदाश्रयत्वेपि प्रमेयत्वानित्यत्वादौ

---

पक्षं निराह—न पञ्चम इति । अतिप्रसङ्गो हि नृशृङ्गास्तित्वादिरपि सिध्येदिति वक्तव्यः । स तु न युक्तः । दोषान्तरेणैव तत्सिद्धिप्रतिबन्धादिति भावेन—

"दोषो व्याहतिरेवास्ति नृशृङ्गास्तित्व साधने"

इत्याद्यनुव्याख्यानसुधोक्तमाह—बाधादीति । ननु सुतत्वाभावाद्वन्ध्यासुत इति पक्षीकरणायोगात्सोप्यसद्धेतुरेवेत्यत आह—सुतत्वाभावेपीति । अतिप्रसङ्गादिति । शुक्तिरूप्यतादात्म्यं नास्ति. इह घटो नास्ति. शशे विषाणं नास्तीत्यादावपि निषेध्यस्य तत्र सत्त्वापातादिति भावः । सामानाधिकरण्यरूपव्याप्त्यभावादसदाश्रयत्वं दोष इति पक्षं प्रत्याह—न षष्ठ इति । साध्यसाधनयोर्व्याप्त्यभावे आश्रयस्यासत्त्वं न प्रयोजकं व्यतिरेकतोन्वयतश्च व्यभिचारात् । किंतु

[1] सुतशब्देन–इत्यादिरेतावान्ग्रन्थः नास्ति–ग. रा

**व्याप्त्यदृष्ट्या असदाश्रयत्वेप्यप्रामाणिकत्वासत्त्वयोर्व्याप्तिदृष्ट्या चावक्तृत्वाचेतनत्वयोरपि व्यभिचारादर्शनेनाविनाभावरूपव्याप्तेः संभवात् । तयोर्घटादौ सामानाधिकरण्यदर्शनाच्च ॥**

**किंच असदाश्रयस्य साधकत्वं नेत्यपि केनचिल्लिङ्गेन साधनीयम् । तत्र चासन्नाश्रयः एवं वत्वादित्यसन्वा पक्षीकर्तव्यः, असदाश्रयो हेतुर्न साध्यसाधकः एवं[1]त्वादित्यसदाश्रयो हेतुर्वा उभयथाऽपि सहेतुरसदाश्रय एव । असति सद्धर्मान-**

व्यभिचारदर्शनादिकमेव । तदभावेऽसदाश्रययोरपि व्याप्तिरवधारयितुं शक्यत एवेति व्याप्त्यभावोऽसिद्ध इत्याह—**असदाश्रयत्वेपीत्यादिना ॥**

ननु कथमसदाश्रयत्वे सामानाधिकरण्यघटितव्याप्तिरित्यत उक्तं **अविनाभावेति** । तादृशव्याप्तेः प्रागेव निरासादिति भावः । तादृशव्याप्तिमङ्गीकृत्याप्याह—**तयोरिति** । अवक्तृत्वाचेतनत्वयोरित्यर्थः । यत्तु सुधायामत्रोक्तरीत्याऽसदाश्रयत्वस्य दोषत्वं षोढा विकल्प्यातिप्रसङ्गकल्पमेकं निरस्यान्ते "एतेन कल्पिताः पक्षाः समस्ता अपि निरस्ता" इति भक्तिपादीयसुधावाक्यमत्र प्रतिपक्षदूषणाभिधानेन विवृतं ध्येयम् । असदाश्रयस्य साधकत्वं नेत्यपि व्याप्तिं विना कथं निवार्यत" इति प्रमाणलक्षणतट्टीकयोरुक्तं विवृण्वानः असदाश्रयसाध्यसाधनयोर्व्याप्त्यभावे बाधकं चाह—**किञ्चेति ॥**

ननु हेतुपक्षकप्रयोगे प्रागुक्तहेतोः कथमसदाश्रयत्वं येनोभयथापि हेतुरसदाश्रय एवेति स्यादित्यत आह—**असतीति** । तथा चासन्नि-

[1] पूर्वत्रात्र च वंरूपत्वात् इत्यस्ति—ट.

ङ्गीकारात् । तच्च लिङ्गं व्याप्त्यभावेऽसाधकत्व-साधकं न स्यादिति कथमसदाश्रयधर्मयोर्व्याप्त्य-भावः ॥

तदुक्तं भगवत्पादैः । "असदाश्रयस्य साध-कत्वं नेत्यपि व्याप्तिं विना कथं निवार्यते" इति ॥

तस्माद्दोषान्तरासङ्कीर्णोदाहरणाभावा[1] न्निषेधं प्रति पक्षत्वस्य च प्रतीतिमात्रेणोपपत्तेः नाश्रया-सिद्धिर्दोष इति ॥

तदुक्तं भगवत्पादैः । "असत्यपि व्याप्ति-रस्त्येवे" ति । पक्षे असत्यपि अविनाभावरूपा व्याप्तिरस्त्येवेत्यर्थः ॥

आश्रयासिद्धदोषत्व भङ्गः ॥ २५ ॥

---

ष्ठत्वेन प्रयुक्ताचेतनत्वादि[2] रूपधर्मोप्यसति नास्त्येवेति तत्पक्षकोप्य-सदाश्रय एवेति भावः । **धर्मयोरिति** । साध्यसाधनरूपयोरित्यर्थः । **तदुक्तमिति** । प्रमाणलक्षणे । तस्मादित्युक्तहेतुं द्वेधा व्यनक्ति— **दोषान्तरेति** । निषेधं प्रत्यवक्तृत्वादिरूपवक्तृत्वादिनिषेधं प्रतीत्यर्थः । अविनाभावरूपव्याप्तेः संभवादित्युक्तेर्थे प्रमाणलक्षणवाक्यं संवाद-यति—**तदुक्तमिति** ॥

आश्रयासिद्धदोषत्वभङ्गः ॥ २६ ॥

---

[1] वादसत्त्वप्रतिकूलधर्मं प्रतिपक्षत्वासंभवेप्यप्रामाणिकत्वादिकं प्रतीव असत्ता-नुकूलान्न—क. ग. ट. [2] दिहतुरु—ट. ठ. ढ.

# अथाप्रसिद्धविशेषणत्वस्य दोषत्वभङ्गः ॥ २६ ॥

एवं साध्याप्रसिद्धिरपि न दोषः तथा हि—तस्या दोषत्वं किमतिप्रसङ्गात्, साध्यकोटेरप्रसिद्धया सन्देहाभावेन तद्घटितपक्षधर्मताविघटनाद्वा [1]व्याप्तिविघटनाद्वा प्रतिज्ञावाक्यस्याविदित-

...

अथाप्रसिद्धविशेषणत्वस्य दोषत्वभङ्गः ॥ २७ ॥

---

अन्यत्सदसतोर्विश्वमिति च व्याहतेरमा ।
असिद्धसाधने दोषः को व्याप्तिर्यदि विद्यते ॥

इति भक्तिपादीयानुव्याख्यानसुधोक्तादिशा विकल्पयति—**किमतिप्रसङ्गादिति ।** विमतं सदसद्विलक्षणं बाध्यत्वात्, भूः शशशृङ्गवती भूत्वादित्यादेरपि प्रमाणत्वापत्तिरूपातिप्रसङ्गादित्यर्थः । **तद्घटितेति ।** सन्दिग्धसाध्यधर्मकधर्मिरूपपक्षनिष्ठत्वरूपत्वात् पक्षधर्मताया इति भावः । **व्याप्तीति ।** साध्याप्रसिद्धौ तन्निरूपितव्याप्तिग्रहासंभवेन व्याप्तिविघटनादित्यर्थः । **अविदितेति ।** भूः शशविषाणोल्लिखितेति प्रतिज्ञावाक्ये शशविषाणपदार्थो न ज्ञातः अप्रसिद्धत्वात् । तथा च तस्य तत्र शक्तिग्रहासंभवेन [2]तत्पदार्थस्मृतेरयोगात् प्रतिज्ञावाक्यस्य तदन्वयाबोधकत्वप्रसङ्गादित्यर्थः । सुधानुक्तं कोट्यन्तरं तार्किकरीतिमनुसृत्य

---

[1] व्याप्तिविघटनाद्वा इति नास्ति—ट. रा. [2] तदानीम् इत्यधिकम्— ट. ठ. ड.

पदार्थकत्वेनाबोधकत्वप्रसङ्गाद्वा, कारणस्य विशेषणज्ञानस्याभावे कार्यस्य विशिष्टज्ञानस्यायोगाद्वा॥

नाद्यः। असाधुत्वेन संमतस्य विमतं सदसद्विलक्षणं बाध्यत्वादित्यादेः क्लृप्तेन व्याघातादिना दोषान्तरेणैव इयं भूः शशशृङ्गवती एतद्भूत्वादित्यादेर्योग्यशृङ्गसाधकत्वे योग्यानुपलब्धिबाधादिना दोषान्तरेणैवायोग्यसाधकत्वेऽतीन्द्रिये[1] श्वरा-

स्वयं पक्षान्तरं विकल्पयति—**कारणस्येति**। **विशिष्टज्ञानस्येति**। अनुमितिरूपस्येत्यर्थः। सुधोक्तदिशा निराह—**असाधुत्वेनेत्यादिना**। **व्याघातादिनेति**। सन्नेत्युक्ते असत्त्वमुक्तं स्यात्। सत्त्वप्रतिक्षेपरूपत्वादसत्त्वस्य पुनरसन्नेत्युक्ते स्ववचनव्याघातः। एवमसन्नेत्युक्त्या 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति सत्त्वं लब्धम्। पुनः सन्नेत्युक्ते स्ववचनव्याघात एव। आदिपदेन प्रमाणबाधव्याप्त्यभावादिग्रहः॥

ननु व्याघातादेरेव दोषत्वमुपेत्य तत्र साध्याप्रसिद्धिर्दोष इत्येवोपेयतामित्यत उक्तम्—**क्लृप्तेनेति**। माता वन्ध्येत्यादौ दोषत्वेन क्लृप्तेनेत्यर्थः। शृङ्गवतीत्यत्र शृङ्गशब्देन महत्त्वसमानाधिकरणोद्भूतरूपवान् शिरस्संयुक्तोऽवयवविशेषोऽभिप्रेयतेऽथ कश्चिदतीन्द्रियः। आद्य आह—**योग्येति**। व्याप्त्यभावादिरादिपदार्थः। द्वितीय आह—**अयोग्येति**। शृङ्गेति नाममात्रम्। न ह्यतीन्द्रियं नाम शृङ्गमस्ति। अत एवादिपदप्रयोगः—

अप्रसिद्धस्य साध्यस्य साधकत्वं यदेष्यते।

[1] यैः शृङ्गादिभिः सि—ग. ट. ग. [2] प्रेतः अथ—ठ.

दिभिः सिद्धसाधनादिना च दोषान्तरेणैव दुष्टत्वात् दोषान्तररहितत्वेन संमतस्य तु जीवच्छरीरजातं सात्मकं प्राणादिमत्त्वादित्यादेः साधुत्वादतिप्रसङ्गाभावात् ॥

प्रत्युत अप्रासिद्धस्या[1]सिद्धावेवातिप्रसङ्गः । पर्वताग्निसंबन्धस्य कार्यत्वाद्यनुमाने ईश्वरसार्वज्ञ्यादेश्चाप्रसिद्धस्यैव सिद्धेः । वह्नेरपि महानसाद्यसम्बद्धस्य वस्तुगत्या अपूर्वस्यैव वह्नित्वेन[2] भौमवाह्नित्वेन च प्रकारेण सिद्धेश्च ॥

ननु --पक्षधर्मताबललभ्यादन्यस्याप्रासिद्धस्य सिद्धिर्न साध्यस्य पक्षसंबन्धादिकं तु पक्षधर्मताबललभ्यम् सार्वज्ञ्यमपि तथा । द्व्यणुकादिभूगोळकपर्यन्तस्यानाद्यनन्तकालीनस्य कार्यस्य पक्षत्वा-

इत्यनुव्याख्यानसुधोक्तं हृदि कृत्वाऽऽह --प्रत्युतेति । अतिप्रसङ्ग इति । पर्वताग्निसंबन्धस्येश्वरसार्वज्ञ्यादेश्चासिद्ध्यापातादित्यर्थः । इष्टापत्तिरित्यत आह—पर्वतेति । संबन्धस्याप्रसिद्धस्य सिद्धावपि न वह्नेः साध्यभूतस्याप्रसिद्धस्य सिद्धिरिति वदन्तं प्रत्याह—वह्नेरपीति । अप्रसिद्धसाध्यकत्वमात्रं न दोषो येनोक्तातिप्रसङ्गः स्यादिति शङ्कते—नन्विति । क्षित्यादिकं सकर्तृकं कार्यत्वादित्यत्र सार्वज्ञ्यं कथं पक्षधर्मताबललभ्यमित्यतो व्यनक्ति —द्व्यणुकादीति । तादृशपक्षधर्मत्वं कार्यत्वहेतोः कर्तुः सार्वज्ञ्यं विना न युक्तमितीति भावः । तदलभ्यस्य

[1] स्यसिद्धावति-ग. ट. रा. द्धत्वा-देवा--ग. रा. [2] नाकारेण सिद्धेश्च - ग. ट. न प्रकारेण-रा.

दिति चेन्न । कार्यत्वाद्यनुमानेषु तदलभ्यस्यापि कर्त्रैकत्वादेः सिद्धेः ॥

अथ व्याप्तिबललभ्यस्य साध्यतावच्छेदकावच्छिन्नस्याप्रसिद्धस्य[1] सिद्धिर्न कर्त्रैक्यं तु न व्याप्तिबललभ्यं लाघवतर्कानुग्रहलभ्यत्वादिति चेन्न । अत्रापि प्राणादिमत्त्वस्य सात्मकत्वप्रयोज्यतया व्याघाततर्कानुग्रहादेवाप्रसिद्धस्य सिद्ध्युपपत्तेः । त्वयाप्ययं वह्नित्वेनानुभवः वह्नित्वाभाववति वह्नित्वप्रकारको नेत्याद्यभावसाध्यके केवलव्यतिरेकिणि साध्यतावच्छेदकावच्छिन्नसाध्यस्याप्रसिद्धस्य सिद्धिस्वीकाराच्च । न च तत्राभावरूपं

---

पक्षधर्मताबललभ्यस्येत्यर्थः । आदिपदेन ज्ञाननित्यत्वादिग्रहः । एकत्वादावतिप्रसङ्गाभावमाशङ्क्य निराह—**अथेति । लाघवेति** । अनेककर्तृकल्पनापेक्षयैककर्तृकल्पनमात्रेण कार्यत्वहेतोरुपपत्तिरूपलाघवतर्केत्यर्थः । **व्याघातेति** । प्राणादिमत्त्वमुपेत्य सात्मकत्वानङ्गीकारे प्रयोज्योपगमेन प्रयोजकानङ्गीकारात्कार्योद्देशेन कारणे प्रवृत्तिरूपस्वाक्रियाविरोधरूपव्याघाततर्केत्यर्थः । तथाच तस्य दोषत्वमुपेत्य सामान्यप्रसिद्ध्यर्थं नक्लेशोऽनुभोक्तव्य इत्यर्थः । अथेत्यादिना वदतः शङ्कास्य व्याहतेत्याह—**त्वयापीति** । इत्याद्यभावसाध्यक इति । अप्रामाण्याभावादिसाध्यकेत्यर्थः । वैषम्यमाशङ्क्य प्रतिबन्द्योत्तरमाह—**न च तत्रत्यादिना** ॥

[1] स्य सिद्धि—**ट. रा.**

यत्साध्य तदभावरूपस्य भावस्यैव [1]व्याप्तिग्रहः तत्र चाभावरूपसाध्यात्मकप्रतियोगिज्ञानं नापेक्षितमिति व्याप्तिग्रहसंभवात् साध्याप्रसिद्धिरदोष इति वाच्यम् । भूः शशशृङ्गवतीत्यादावपि शशशृङ्गराहित्याभावः साध्यः । सात्मकामेत्यत्रापि निरात्मकत्वाभाव एव साध्य इति सुवचत्वाच्च ॥

[2]किंच तत्तन्मतप्राप्तकोटिप्रसिद्धिमूलायां जगत्परमाणूपादानकं वा, प्रधानोपादनकं वेति विप्रतिपत्तौ सत्यां तदनुसारेण विमतं परमाणूपादानकं तदन्योपादानकत्वे बाधकोपपन्नत्वे सति सोपादानकत्वादिति सामान्यव्याप्तिमाश्रित्य तार्किकप्रयुक्तेऽनुमाने कथं साध्यप्रसिद्धिः । नचात्रापि विप्रतिपत्त्यननुसारिणी अर्थान्तराप्राप्तकाल-

[3]'साधनं परमाण्वादेर्यदासिद्धस्य चष्यते' ।

इत्यनुव्याख्यानसुधोक्तिं हृदि कृत्वाऽह—किंचेति । ननु तत्र परेण साध्याप्रसिद्धावुद्भावितायां नैयायिकेन द्व्यणुकस्याप्रत्यक्षत्वेऽपि त्र्यणुकं सोपादानकं कार्यद्रव्यत्वादिति द्व्यणुकं प्रसाध्य द्व्यणुकं सोपादानकं भावकार्यत्वाद्धट[4]वदित्यनुमानेन परमाणुप्रसिद्धिं संपाद्य साध्याप्रसिद्धिः परिहरणीयेत्यत आह – न चात्रापीति । केवलं कार्यत्वादिप्रयोगे

---

[1] व्यतिरेकग्रहः–क. [2] त्वयाप्ययं इत्यादिरेतावान्ग्रन्थः नास्ति–ग. ट. रा.
[3] अथेत्यादिना वदतः शङ्कास्य—इत्यारभ्य एतावान्ग्रन्थः नास्ति–ट. ठ. ड.
[4] टादिव–ड.

त्वान्यतरापादिका त्र्यणुकोपादानत्वेन द्व्यणुकं प्रसाध्य तदुपादानत्वेन परमाणुः साध्यत इति क्लिष्टकल्पनैवाश्रयणीयेत्यत्र हेतुरस्ति ॥

किंच भाट्टैर्यत्र गुणगुण्यादौ समानाधिकृतत्वान्यथानुपपत्तिरूपार्थापत्त्या भेदाभेदौ साध्येते तत्रार्थापत्तेरनुमानत्वादिना तार्किकेणानुमानेनैव तद्वीर्वाच्येति कथमनुमानेनाप्रसिद्धस्यासिद्धिः ॥

सात्मकत्वादिप्रयोगे वा इत्यपेरर्थः । प्रयोगोत्तरकालं साधने प्रकृतानुपयुक्तान्वितोक्तिरूपार्थान्तरापादिका प्रयोगात्पूर्वं विप्रतिपत्त्यनन्तरमेव साधने क्रमविपर्यासरूपाप्राप्तकालत्वापादिका इति कल्पनेत्यन्वयः । उभयत्र हेतुर्विप्रतिपत्त्यननुसारिणीति । परमाणूपादानकं प्रधानोपादानकं वेति विप्रतिपत्तौ परमाणूपादानकत्वरूपेण साध्यप्रसिद्धिसंपादनस्यैवानुगुणत्वादिति भावः—

क्लिष्टकल्पनयैवात्र साध्यमित्यतिदुर्वचः ।

इत्यनुव्याख्यानोक्तेरिति भावः ॥

परिशेषो मिथः सिद्धिश्चक्रकः स्वाश्रयादयः ।
असिद्धसाधकत्वेन पञ्चावयतां विना ॥

अङ्गीकार्या '

इत्यनुव्याख्यानसुधोक्तं हृदि कृत्वा परिशेष इत्युपलक्षणं मत्वाह—**किंचेति । समानाधिकृतत्वे[1]नेति** । अत्यन्तभिन्ने घटपटादौ घटः पट इति न सामानाधिकरण्यप्रयोगोऽस्ति, अत्यन्ताभिन्ने च घटः करीर

[1] त्वेति-ट. ठ. ड.

अपि च यथात्माश्रयान्योन्याश्रयचक्रकानवस्था-व्याघाताद्यापादकेषु तर्केष्वप्रसिद्धस्यैवात्माश्रयादेरापादनं तथाप्रसिद्धस्य साधनमपि किं न स्यात्। न ह्यात्माश्रयादिकं क्वचित्प्रमितम्। न चाप्रसिद्धमापाद्यं न तु साध्यमित्यत्र हेतुरस्ति ॥

किंच मन्मते तर्कोऽप्यनुमानं त्वन्मतेत्वननुमान-रूपोपि तर्को व्याप्तिसापेक्ष इति कथमनुमानं प्रसिद्धिसापेक्षं तर्कस्तु तन्निरपेक्ष इति व्यवस्था ॥

अपि चाप्रसिद्धस्या[1]पि सिद्धौ शशशृङ्गादिक-मपि सिध्येदिति त्वयाऽऽपाद्यमानस्याप्यतिप्रसङ्ग-स्याप्रसिद्धत्वात्कथमापादानमिति दिक् ॥

इति प्रयोगोस्ति, गुणगुण्यादौ तु नीलो घटः शुक्लः पट इत्यस्ति सामानाधिकरण्यप्रयोगः, स च तयोर्भेदाभेदौ विना नोपपद्यत इति तदन्यथानुपपत्तिरूपार्थापत्त्येत्यर्थः। तद्धीः भेदाभेदधीरित्यर्थः। अर्थापत्त्यैव तद्धीजन्माङ्गीकारेऽर्थापत्तेः पृथङ्मानत्वापत्तेः भाट्टानां भेदाभेदधीरनुमितिरूपैव। अथाप्यत्रार्थापत्तिफलत्वाभिमानमात्रमिति नैयायिकेन वाच्यमित्यर्थः। **कथमापादनमिति दिगिति** ॥

नन्वप्रसिद्धमप्यापादयितुं शक्यते न तु साधयितुमिति चेन्न। हेत्वभावेन निराकृतत्वात्। व्याप्तिसापेक्षत्वस्यापादने साधने चोभयत्र तुल्यत्वात्। ननु शब्दाभासादिना शशशृङ्गादिज्ञाने सति

[1] स्यासि—ग. ट. रा.

**नापि पक्षधर्मताविघटनादिति द्वितीयः। पक्षधर्मतासंदेहानपेक्षेत्युक्तत्वात्**

**न तृतीयः। उक्तेषु परमाणूपादानकत्वादिसाधकेष्वनुमानेष्वर्थापत्तिस्थळे आत्माश्रयाद्यापादकतर्करूपानुमानेषु च साध्याप्रसिद्धावपि व्याप्तेः सत्त्वात्। केवलव्यतिरेकिमात्रे साध्याप्रसिद्धावपि**

शशशृङ्गादिसिद्धिरापादयितुं शक्यते एव। यदपि विमतं परमाणूपादानकमित्यादौ साध्यप्रसिद्धिः कथमिति। तन्न। काणादादिवादिवाक्येन परस्य तज्ज्ञानसंभवात्। तावन्मात्रेण तत्प्रसिद्ध्यापत्तौ[1] प्रमाणेनैव प्रसिद्ध्या भाव्यमिति निर्बन्धा[2]पातात्। नैयायिकस्यापि काणादाद्युपदेशेन वा स्वार्थानुमानेन वा परमाण्वाद्यवगतिसंभवेन साध्यप्रसिद्धेरिति चेत्तर्हि सात्मकत्वादिस्थळेऽप्येवं वक्तुं शक्यत्वादप्रसिद्धत्वं न दोषायेत्येवमुपेयमित्याद्यूह्यमिति भावः। **उक्तत्वादिति।** पक्षलक्षणोक्तिप्रस्ताव इत्यर्थः। व्याप्तिविघटनाद्वा दोषत्वमिति पक्षं निराह—**न तृतीय इति।** किं व्याप्तिस्वरूपविघटकत्वमभिप्रेतं उत तद्ग्रहविघटकत्वम्। आद्ये—

"व्याप्तिश्च व्यतिरेकेण तत्रैतैश्चावगम्यते"।

इत्यनुव्याख्यानसुधोक्तं हृदि निधायाह—**उक्तेष्वित्यादि।** तर्कस्यानुमानतायाः साधितत्वात्तर्करूपानुमानेष्वित्युक्तम्। **व्यतिरेकमात्र इति।** मात्रशब्दः कात्स्न्यर्थपरः। सर्वकेवलव्यतिरेकिषु भूरितरेभ्यो भिद्यते भूत्वात्, जीवच्छरीरं सात्मकमित्येवमादिष्वित्यर्थः॥

[1] द्युपपत्तौ–ट. ठ. ड. [2] न्धोऽस्ति–ट. न्धाभावात्–ठ. ड.

**ममान्वयव्याप्तेस्तव व्यतिरेकव्याप्तेः उक्त्वाच्च । शिष्टं व्यतिरेकिभङ्गे उक्तम् ॥**

**ननु व्यतिरेकिण्यप्रसिद्धेन साध्येन साधनस्य कथमन्वयव्याप्तिरिति चे[1]न्न । व्यतिरेकव्याप्तिरपि कथम् । प्रतियोग्यज्ञाने व्यतिरेकानिरूपणात् । किंच मन्मते साध्यं विना साधनस्यानुपपत्तिरेव व्याप्तिः । तत्र च विनाशब्दोक्तसाध्याभाव ज्ञानाय प्रतियोगिभूतसाध्यधीरेवापेक्षिता । न तु**

ननु भूरितरभिन्नेत्यादौ त्रयोदशान्योन्याभावानां विशकलिततया प्रसिद्धत्वेनैकबुद्ध्युपारूढानां तेषां व्यतिरेकव्याप्तिनिरूपणं सुशकम् । घटादावेव वा साध्यप्रसिद्धिः । न च तथात्वेऽन्वयित्वं, तस्य पक्षैकदेशत्वात् । न चैवमनुमानं व्यर्थम् । उद्देश्यसिद्ध्यर्थत्वादिति चेत्तर्हि तत्र हेतुसत्त्वासत्त्वाभ्यामन्वयित्वासाधारण्ययोरापात इत्याद्यभिप्रायेणाह– **शिष्टमिति** । ननु ममान्वयव्याप्तिरित्ययुक्तम् । साध्याप्रसिद्धौ तत्सामानाधिकरण्यस्य हेतौ काप्यग्रहेण सामानाधिकरण्यघटितान्वयव्याप्तेर सम्भवादिति शङ्कते —**नन्विति** । प्रतिबन्दीमाह **व्यतिरेकेति** । ननु परपक्षेऽनुपपत्त्युक्तिमात्रेण कथं स्वपक्षेऽनुपपत्तिपरिहारः । न हि पराङ्गं दग्धमिति स्वाङ्गदाहः शाम्यतीत्यतः न केवलं प्रतिबन्दी उपपत्तिश्चास्मत्पक्षेऽस्तीत्याह **किंचेति** ॥

[1] सत्त्वाभ्यां–ट. ठ.

पूर्वं तत्प्रमितिः। अस्तु वा सामानाधिकरण्यनियमो व्याप्तिः। तथापि न तावदप्रसिद्धेन साध्येन साधनस्यानन्वय एवेति युक्तम्। व्यतिरेकिणो विरुद्धहेत्वाभासत्वापातात्। साध्यप्रसिद्धेर्व्याप्तिज्ञप्तिहेतुत्वेन व्याप्तिं प्रत्यहेतुत्वाच्च। नापि सत्या[1]मन्वयव्याप्तौ तद्ग्रहो[2] न शक्य इति वाच्यम्। पक्षादिप्रविभागात्प्राक् स्वशरीरादावेव प्रत्यक्षेणोपदेशादिना [3]वाऽवगतसात्मकत्वस्य पुंसो भूयोदर्शनादिना धूमाग्न्योरिव प्राणादिमत्त्वसात्मकत्वयोरप्यन्वयव्याप्तिग्रहस्य स्वार्थानुमितौ[4] संभवात्। न च जीवच्छरीरमात्रस्य पक्षीकरणादन्वयदृष्टान्ताभावः। अभेदसाधकानुमान इवानुमित्यादिना पक्षस्यापि स्वशरीरस्य निश्चितसाध्यकतया दृष्टान्तत्वस्यापि सम्भवात्॥

---

नन्वथापि न्यायमतसिद्धसामानाधिकरण्यनियमरूपव्याप्तिरशक्यैवेत्यतः तत्राप्युपपत्तिमाह—**अस्तु वेति**। **अनन्वय एवेति**। असामानाधिकरण्यमेवेत्यर्थः। तथात्वे नित्यः शब्दः कृतकत्वादितिवत् विरुद्धहेत्वाभासः स्यादित्यर्थः। नन्वस्तु सामानाधिकरण्यं तन्नियमरूपव्याप्तिस्तु साध्याप्रसिद्धिस्थळे कथमित्यत आह—**साध्येति**। तथा च साध्याप्रसिद्धिस्थळे तन्निरूपितव्याप्तिज्ञप्तेरभावेऽपि नियतसामानाधिकरण्यरूपव्याप्तेरप्रतिबन्धाद्व्याप्तिविघटनात्साध्याप्रसिद्धिर्दोष इति न युक्तमिति भावः। द्वितीयं निराह—**नापीति**। सुधोक्तमाह—**पक्षादीति**। व्यतिरेकवादे मण्युक्तं सर्वमत्राह—**अभेदेति**॥

---

[1] मप्य-ग. ट. रा. [2] होश-ग. ट. [3] नाचाव-ग. ट. [4] तेश्च-ट. रा.

नापि सिद्धसाधनम् । स्वार्थानुमाने तस्यादोषत्वात् । उद्देश्यायाः शरीरत्वावच्छेदेन साध्यप्रतीतेः प्रागसिद्धेश्च । न च [1]पक्षस्य पक्षैकदेशस्य वा दृष्टान्तत्वे सपक्षत्वेन[2] व्यतिरेकित्वभङ्गप्रसङ्गो व्यतिरेकवादिनस्तवेव तदभाववादिनो ममाप्यनिष्टः ॥

ननु स्वेन गृहीताऽपि व्याप्तिः शरीरमात्रे विप्रतिपन्नं प्रति कथं दर्शनीयेति चेन्न । तं प्रति [3]व्याप्तिग्रहणस्थळस्याविप्रतिपत्त्या प्रतिरुद्धत्वेन प्रदर्शयितुमशक्यत्वेऽपि जीवच्छरीरजातं सात्मकं प्राणादिमत्वात् यत्कार्यवत्तत्कारणवत् यथाङ्कुरवती भूमिर्बीजगर्भेति सामान्यव्याप्तिप्रदर्शनस्य वा प्राणादिमत्त्वं सात्मकत्वेन व्याप्तं तदभावव्यापकाभावप्रतियोगित्वात्, यद्यदभावव्यापकाभावप्रतितयोगि तत्तेन व्याप्तं यथा धूमो वह्निनेति व्यतिरेकव्याप्त्या[4]विशिष्यान्वयव्याप्तिसाधनस्य वा, अनुपपत्तिरूपा-

---

ननु प्राग्व्यतिरेकिभङ्गे पक्षैकदेशस्य दृष्टान्तत्वे व्यतिरेकित्वभङ्गो भवद्भिरेवापादितः स दोषस्तर्हि स्यादित्याशङ्क्य निराह— **न चेति** । स्वार्थानुमानदोषत्वा[5]सम्भवेपि परार्थप्रयोगे दोष इति शङ्कते—**नन्विति** । सुधोक्तदिशा समाधिमाह— **तं प्रतीत्यादिना** । **अनुपपत्तिरूपेति** ।

---

[1] पक्षस्येति न—**ग. ट. रा.** [2] सपक्षत्वेनेति नास्ति—**ग. रा.** [3] विशिष्टस्येत्यधिकम्—**ग. ट. रा.** [4] विशिष्टान्वयव्यतिरेकव्याप्तिप्रसा—**क.** विशिष्टान्वयव्यतिरेकव्याप्त्यान्वयव्या—**ग.** नेति व्यतिरेकव्याप्तिसा—**ट.** ातिव्यतिरेकव्याप्त्यान्वयव्याप्तिप्र—**रा.** [5] मानासंभ—**ट. ठ.**

न्वयव्याप्तेर्विशिष्यप्रदर्शनस्य वा संभवात् । यथा च व्यभिचारस्थळानुक्तावप्युपाधिना व्यभिचारः, यथा वा दृष्टान्तानुक्तावपि धूमो वह्निव्याप्य इति आप्तवाक्येन व्याप्तिः, तथाऽन्वयदृष्टान्तानुक्तावप्यनेनानुमानेनान्वयव्याप्तिः सिध्यत्येव ॥

एतेन साध्यरूपप्रतियोग्यज्ञानात्तदभाव[1]रूपज्ञानं न युक्तमिति साध्याभावस्य साधनाभावेन व्याप्तिज्ञानं न संभवतीति निरस्तम् । उक्तरीत्या प्रत्यक्षेणोपदेशादिना वा साध्यसाधनरूपासाधारणधर्मावेकत्रोपलब्धवतः ततोऽन्यत्र सर्वत्रापि तदभावं च पश्यतो वादिनः प्रतिवादिनोपि वादिवाक्यावगतप्रतियोगिनस्तदभावग्रहसंभवेन व्यतिरेकव्याप्ति[2]ग्रहस्य सुलभत्वात् । न च प्रमाणेनैव प्रतियोगी ज्ञातव्य इति नियमोस्ति । शशशृङ्गाद्यभावासिद्ध्या शशशृङ्गादेरसत्त्वासिद्धिप्रसङ्गात् । न ह्यसतो निषेधः स्वविरुद्धसत्त्वापेक्षः ॥

प्राणादिमत्त्वस्य सात्मकत्वप्रयोज्यतया प्राणादिमत्त्वं सात्मकत्वेन विनाऽनुपपन्नमित्येवंरूपेणानुपपत्तिरूपान्वयव्याप्तेर्विशिष्य प्रदर्शनसंभवादित्यर्थः । ननु प्रमाणेन प्रतियोगिनोऽनवगतौ क्वचित्सत्त्वाभावात्कथं तन्निषेध इत्यत आह—**न ह्यसत इति** । सत्त्वे सति निषेधस्यैवायोगादिति भावः ।

[1] रूपपदं न—क. ग. ट. रा. [2] ज्ञानस्य—क. ग. रा.

**किं चैवं सति तत्त्वद्धादिनां पराभिमतसप्तम[1]-पदार्थप्रधानपरमाण्वादिनिषेधो न स्यात् । न च तत्रापि प्रधानादिकं नेति न निषेधः । किं तु जगदुपादानं परमाण्वा[2]दिकं नत्येवं [3]तथाच खण्डशः प्रमितिरस्तीति वाच्यम् । परिरीत्याप्रसक्तस्य स्वरूपेणैव निषेधसंभवे स्वाभिमतस्य निषेधप्रतियोगिप्रामाणिकत्वस्य निर्वाहायानानुभाविकक्लिष्टकल्पनेऽन्योन्याश्रयात् ॥**

**सप्तमेति ।** द्रव्यगुणकर्मसामान्यविशेषसमवायाः षडेव भावपदार्थाः । न सप्तमोस्तीति सप्तमपदार्थस्य साङ्ख्याभिमतप्रधानस्य च निषेधो नैयायिकस्य न स्यात् । तथा साङ्ख्यादेः परमाण्वादिनिषेधो न स्यादित्यर्थः । **खण्डश इति ।** जगति परमाण्वतिरिक्तोपादानकत्वस्याखण्डस्याप्रसिद्धावपि जगदु[4]पादानपदार्थस्य [5]परमाण्व[6]तिरिक्तपदार्थस्य च प्रमितिरस्तीत्यर्थः । **परीत्याप्रसक्तस्येति ।** तदीयवाक्याभासप्रसक्तस्येत्यर्थः । **अन्योन्याश्रयादिति ।** त्वदुक्तरीत्यैव निषेधे सिद्धे निषेध्यस्य प्रामाणिकत्वसिद्धिः । सिद्धे च तस्मिन्नुक्तरीत्या निषेधसिद्धिरित्यन्योन्याश्रयादित्यर्थः ॥

त्वदुक्तरीत्या[7] निषेधो न युक्त एव । जगदुपादानमिति परमाणुत्वेनोपादान[8]मभिप्रेतमुत सांख्याभिमतप्रधानत्वेनाथोभयानुगतोपादानत्वरूपसामान्यधर्मेणोपादानमात्रमिति विकल्पान् क्रमेण निराह—

[1] सप्तपदा–क. ट. [2] ण्वतिरिक्त–क. ग. ट. रा. [3] ततश्च–क. ग. ट. [4] त्पदार्थस्य उपा–ट. ठ. उपादानभूत–ठ. [5] स्यच–ट. [6] णुपदार्थस्यातिरिक्तपदार्थस्य च–ट. [7] त्यापि–ड. [8] न त्वम–ठ.

किंच जगदुपादानशब्देन परमाणोरेवोक्तौ सिद्धसाधनम् । प्रधानोक्तावाश्रयासिद्धिः । प्रामाणिकाप्रामाणिकानुगतं सामान्यं तु नास्त्येव ॥

एतेन सात्मकत्वरूपसाध्यघटितान्वयव्याप्तिरूपसाध्याप्रमिता[1]न्वयव्याप्त्या सह व्यतिरेकव्याप्तेरन्वयव्याप्त्यग्रहात्कथं व्यतिरेकव्याप्त्याऽ-

---

**किंचेत्यादिना । प्रामाणिकेति ।** परमाणुर्हि त्वन्मते प्रामाणिकः । प्रधानमप्रामाणिकं न हि शशविषाणगोविषाणयोर्विषाणत्वसामान्यमिव प्रामाणिकाप्रामाणिकपरमाणुप्रधानरूपोभयगतमुपादानत्व[2]सामान्यमस्ति । आश्रयाभावे धर्मायोगात् । न हि प्रतियोगित्वासत्त्वादिवदुपादानत्वं धर्मिसत्तानिरपेक्षम् । येन प्रतियोगित्वादिप्रतिबन्दी स्यादिति भावः ॥

ननु व्यतिरेकव्याप्त्यान्वयव्याप्त्यनुमानं प्रागुक्तमयुक्तम् । साध्यस्याप्रसिद्धौ तन्निरूपितान्वयव्याप्तेरप्यप्रसिद्ध्या तया सह लिङ्गभूतव्यतिरेकव्याप्तेर्व्याप्तिग्रहासंभवादित्याशङ्कामनूद्य निराह—**एतेनेति ।** ननु व्यतिरेकव्याप्तिरूपलिङ्गेनान्वयव्याप्तिरूपसाध्यस्यानुमानस्थलेऽपि लिङ्गलिङ्गिभूतयोर्व्यतिरेकव्याप्त्यन्वयव्याप्त्योरन्वयव्याप्तिस्तयोर्व्यतिरेकव्याप्त्यानुमिता सती सात्मकत्वप्राणादिमत्त्वनिष्ठान्वयव्याप्त्यनुमित्यनु-

---

[1] ताकन्न—क. ड. ग.   [2] रूपपदमधिकम्—ट. ढ.

न्वयव्याप्त्यनुमितिः । तत्रापि व्यतिरेकव्याप्त्या-श्रयणे चानवस्थेति निरस्तम् । यद्यद्भावव्याप-काभावप्रतियोगि तत्तेन व्याप्तं यथा धूमोऽग्नि-नेति सामान्यव्याप्तेः । अनुपपत्तिरूपाया विशि-ष्यान्वयव्याप्तेश्च दर्शितत्वात् । एवं शब्दः अष्ट-द्रव्यातिरिक्तद्रव्याश्रितः, अष्टद्रव्याश्रितत्वे बाध-कोपपन्नत्वे सति गुणत्वात् । गगनमितरेभ्यो भिद्यते शब्दा[1]श्रयत्वादित्यादिकेवलव्यतिरे-किष्वपि योयदा[2]श्रयत्वे बाधकोपपन्नत्वे सति गुणः स तदन्याश्रितः, यद्य[3]दसाधारणधर्मवत् तत्ततो भिद्यत इति सामान्यव्याप्तिर्वा । कणादोप-देशादिना शब्दे गगने च साध्यसाधने उपलब्ध-वतः "तदन्यत्र सर्वत्र तदभावं च पश्यत" इत्यादि पूर्वोक्तरीत्या व्यतिरेकव्याप्त्या[4]विशिष्याऽ-न्वयव्याप्तिर्वा अनुपपत्तिरूपा विशिष्यान्वय-व्याप्तिर्वा उपपाद्या ॥

कूलास्त्वित्यत आह—तत्रापीति । व्यतिरेक्यन्तरेष्वपि सुधोक्तं हृदि कृत्वा प्रागुक्तरीत्यान्वयव्याप्तिं त्रेधोपपादयति—एवमित्यादिना ॥

यत्तु मण्यादितार्किकग्रन्थे व्यतिरेक्यनुग्रहार्थं सामान्यप्रसिद्धि-संपादकं सामान्यतोदृष्टानुमानं नियतमिति तत्कथनं तदाशङ्क्य निराह—

1 श्रयत्वादित्यादि व्यतिरे—क. ट. रा. 2 दाश्रितत्वे—ग. ट. 3 दवृ-त्तिधर्मा—क. ट. रा. 4 प्त्यनुमितेति शोधितम्—ट.

नचा[1]त्रापि शब्दः क्वचिदाश्रितो गुणत्वादित्यनुमानेन साध्यं सामान्यतः प्रसिद्धमिति वाच्यम् । उक्तरीत्या साध्याप्रमितावपि त्रेधा व्याप्तिग्रहसंभवेन सामान्यतोदृष्टानपेक्षणात् ॥

किंच सामान्यतोदृष्टस्यावश्यकत्वे तदेव तर्कं विनाकृतमनिर्धारिताश्रयविशेषमाश्रितत्व[2]सामान्यं गृह्णदपि इतरबाधकतर्कानुगृहीतं पुनरनुसन्धीयमानमष्टातिरिक्ताश्रितत्वरूपविशेषमेव ग्रहीष्यति । एकस्यैव सहकारिवैचित्र्येण विचित्रकार्यजनकत्वदर्शनात् । सामान्यस्यैकविशेषबाधे विशेषान्तरे पर्यवसाननियमाच्चेति किं व्यतिरेकिणा । न चाष्टद्रव्यातिरिक्तद्रव्याश्रितत्वप्रकारिका प्रतीतिर्व्यतिरेकिसाध्या सा च न सामान्यतो दृष्टेन[3] सिध्यति ततः प्राग[4]नुपस्थितेरिति शङ्क्यम् । ईश्वरानुमाने

न च तत्रापीति । तदपेक्षायां बाधकं चाह—किंचेति । इतरेति । इतराश्रितत्वे यद्बाधकं तादृशतर्कानुगृहीतमित्यर्थः । एकस्यैवेति । कार्यत्वाद्यनुमानं लाघवतर्कानुगृहीतं सत् कर्त्रैक्यमपि गृह्णाति न चेत्कर्तृमात्रं गृह्णाति । संस्कारादिसहकृतं चक्षुरादि तत्तामपि गृह्णाति न चेदिदंतामेवेत्येवं दर्शनादित्यर्थः । व्याप्तिबलाच्च सामान्यस्यैव विशेषे पर्यवसानं न्याय्यमित्याह—सामान्यस्येति । उद्देश्यसिद्ध्यर्थत्वेन व्यतिरेकिसार्थक्यमाशङ्क्य निराह — न चेदित्यादिना ।

[1] च तत्रापि—क. ट. रा. [2] ज्ञानेत्यधिकम्—ग. रा. [3] ननसि—ग. ट. रा. [4] गुक्तरूपस्य प्रकारस्या. [5] अनुव्यवसाये इत्यादि नास्ति—ग. रा.

कर्त्रैकत्ववदनुव्यवसाये रजतत्वप्रकारकत्व[1]वदभाव-ज्ञानेऽनुयोगित्वप्रतियोगित्वादिवच्च प्रागनुपस्थित-स्यापि प्रकारत्वोपपत्तेः ॥

ननु तथापि कथंचित्साध्यप्रसिद्धिरावश्यकीति त्वयापि स्वीकृतत्वात्कथं तदावश्यकत्वनिरास इति चेन्न । मम हि पराभिप्रेतायाः पक्षादन्यत्र साध्यतावेच्छदकावच्छिन्नत्वेन प्रकारेण प्रतिवादिनं प्रति साध्यप्रसिद्धेरावश्यकतैव निरस्या । न तु प्रतीतिमात्रस्य । उक्तं हि टीकायाम् । प्रत्यक्षे-णोपदेशादिना वाऽसाधारणधर्मावेकत्रोपलब्धवत इत्यादि । टीकाकारीया परेण व्यतिरेकिणि सामा-न्येनान्वयव्याप्त्यादिके शङ्किते तं प्रति क्लिष्ट-कल्पनत्वोक्तिस्तु व्यतिरेकवादिनस्तवान्वयव्या-

**कथं चिदिति** । प्रमाप्रमासाधारण्येनेत्यर्थः । **स्वीकृतत्वादिति** । प्रतिवादिनोपि वादिवाक्यावगतेत्यादिपूर्वग्रन्थेन तथा प्रतीतेरिति भावः । **उक्तं हीति** । भक्तिपादे — "यथानुभवमेवैतन्नाङ्गीकार्यं कुतस्तदा" इत्येतद्व्याख्यावसरे सुधायामित्यर्थः । पूर्वं यत्रैधा व्याप्त्युपपादनं व्यतिरेकिणि कृतं तत्र भक्तिपादीयसुधावाक्य-विरोधमाशङ्क्य तदभिप्रायोक्त्या निराह—**टीकाकारीयेत्यादिना** ।

[1] एवेति नास्ति—ग. ट. रा.

प्त्युक्तिर्व्यतिरेकित्वहान्यापादकत्वात्क्लिष्टेत्यभिप्रायेणैव। न तु स्वमतेपि क्लिष्टेत्यभिप्रायेण। सिद्धान्तेऽपि सामान्यव्याप्तयादेः सत्त्वादेव[1]। तस्मात्साध्याप्रसिद्धिर्व्याप्तिविघटिकेति तृतीयो न युक्तः॥

तदुक्तं भगवत्पादैः—असत्यपि व्याप्तिरस्त्येवेति। साध्यस्य प्रसिद्धत्वेऽसत्यपि साध्यं विनाऽनुपपत्तिरूपा वा, नियतसामानाधिकरण्यं व्याप्तिरिति पक्षेऽपि सामान्यतोऽन्वयव्याप्तिर्वा व्यतिरेकव्याप्त्यनुमिता विशिष्यान्वयव्याप्तिर्वा उक्तरीत्याऽस्त्येवेत्यर्थः॥

नापि चतुर्थः। उक्तरीत्या स्वेन ज्ञातस्य सात्मकमित्यादिशब्दार्थस्य वादिनापि प्रतिवादिनं प्रति समवायान्त्यविशेषादिशब्दार्थस्येव व्युत्पादनेऽविदितपदार्थकत्वाभावात्। तदर्थाज्ञाने तत्र

**तदुक्तमिति**। साध्याप्रसिद्धावपि व्याप्तिरस्तीत्येतत्प्रमाणलक्षणे उक्तमित्यर्थः। प्रागर्थान्तरस्योक्तत्वात्प्रकृतापयोगितयाऽत्रार्थमाह—**साध्यस्येति**। प्रतिज्ञावाक्यस्याविदितपदार्थकत्वेनाबोधकत्वप्रसङ्गात्साध्यासिद्धेर्दोषत्वमिति पक्षं निराह—**नापि चतुर्थ इति**। **उक्तरीत्येति**। स्वशरीरादौ प्रत्यक्षेणोपदेशादिना वावगतसात्मकत्वस्य पुंस इत्यादिनोक्तरीत्येत्यर्थः। अस्ति नास्तीति विवादरूपकार्येणैव तज्ज्ञानं वादिप्रतिवादिनोः सिद्धमिति कथमविदितपदार्थकत्वं प्रतिज्ञावाक्यस्येति भावेनाह—**तदर्थाज्ञान इति**। कारणस्य विशेषणज्ञानस्याभावे कार्यस्य विशिष्टज्ञानस्यायोगाद्वा साध्यासिद्धे-

विवादायोगाच्च । न पञ्चमः । विशेषणज्ञानं विशिष्टज्ञानहेतुर्नेति निर्विकल्पकभङ्गे उक्तत्वात् । हेतुत्वेप्यप्रामाण्याभावसाध्यकानुमान इवादौ साध्यविशेष्यकैव धीः पश्चात्साध्यविशेषणिकेति सुवचत्वाच्च ॥

तस्मात्साध्याप्रसिद्धिर्न दोष इति ॥

अप्रसिद्धविशेषणत्वस्य दोपत्वभङ्गः ॥ २६ ॥

## अथ व्यधिकरणासिद्धेर्दोषत्वभङ्गः ॥ २७ ॥

एवं व्यधिकरणासिद्धिरपि न दोषः । तथा

---

दोषत्वमिति पक्ष निराह—न **पञ्चम** इति । **अप्रामाण्येत्यादि** । व्यक्तमेतत्प्रामाण्यवादे परमते प्रामाण्यानुमित्यसंभवोक्तिप्रस्तावे ॥

नन्वेवम 'निर्वचनीयासिद्धेरप्रसिद्धविशेषणः पक्षः' इति प्रकरणादौ तत्रतत्राप्रसिद्धविशेषणत्वस्य दोषत्वेनोद्भावनं विरुध्यत इति चेन्न । तस्य परमतानुसारित्वस्य तत्र टीकायामेव व्यक्तत्वादिति भावः ॥

अप्रसिद्धविशेषणत्वस्य दोषत्वभङ्गः ॥ २७ ॥

## अथ व्यधिकरणासिद्धेर्दोषत्वभङ्गः ॥ २८ ॥

"व्याप्तत्वे व्याश्रयत्वं तु कथमेवाहि दूषणम् ।
रोहिण्युदय आसन्नः कृत्तिकाभ्युदिता यतः ।
इत्युक्ते साधनं नो किं न ह्याज्ञैवात्र साधिका" ।

**हि—तस्या दोषत्वं [1] किमतिप्रसङ्गात्, पक्षधर्मताविघटनाद्व्याप्तिविघटनाद्वा [2] ॥**

**नाद्यः । नित्य आत्मा काकस्य कार्ण्यादित्यादेर्व्याप्त्यभावेनैव दुष्टत्वात् । शब्दो नित्यः घटस्य कृतकत्वादित्यत्र तु शब्दस्य कृतकत्वं स्वीकृतं चेद्घटस्येत्यस्य वैयर्थ्यात् । अस्वीकृत्य घटगतेनैव कृतकत्वेन शब्दानित्यत्वसाधने तु यत्र कृतकत्वं तत्रानित्यत्वमिति व्याप्तेस्तत्र सामानाधिकरण्यगर्भितत्वेनान्यगतस्य तस्यान्यगतेनानित्यत्वेन व्याप्तेरेवाभावात् ॥**

---

इति भक्तिपादीयानुव्याख्यानसुधोक्तरीत्या विकल्पान् दोषांश्च व्यनक्ति—**किमित्यादिना । अतिप्रसङ्गादिति** [3] । काकस्य कार्ण्यादित्यादेरपि सद्धेतुत्वापत्तिरूपातिप्रसङ्गादित्यर्थः । **इत्यत्रत्विति ।** यत्र कृतकत्वं तत्रानित्यत्वमिति व्याप्तिसत्त्वेन व्याप्त्यभावेन तत्र दुष्टताया वक्तुमशक्यत्वेऽपि प्रकारान्तरेण दुष्टत्वं तत्रेति विशेष [4] द्योतकस्तु शब्दः। **वैयर्थ्यादिति ।** व्यर्थविशेषणत्वेनैव दुष्टत्वमिति भावः ॥

ननु प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिरिति मण्युक्तसामान्यलक्षणपक्षे महानसीयधूमस्य पर्वतादिनिष्ठ-

---

[1] किमदोषत्वेति–ग. रा. [2] नाद्य व्या–क. [3] 'अतिप्रसङ्गादिति' इति नास्ति- ट. ठ. [4] घ्ययो–ट. ठ.

किंच सत्यां व्याप्तौ [1] व्यधिकरणत्वस्य दोषत्व एवातिप्रसङ्गः। दृश्यते हि व्यधिकरणेनापि पद्म-विकासेन सूर्योदयस्य, समुद्रवृद्ध्या चन्द्रोदयस्य, छायया मेघस्य, भूमिष्ठेनालोकेन उपरिसवितुः, चक्रभ्रमेण कुलालासत्तेः, कृत्तिकोदयेन रोहिण्युदयासत्तेः, अधोदेशे [2] नदीपूरेण ऊर्ध्वदेशवृष्टेः, ऊर्ध्वभागस्थधूमेन अधोभागस्थवह्नेश्चानुमितिः॥

नन्वत्राप्ययं कालः सूर्योदयवान् पद्मविकासवत्कालत्वात्सम्मतवत् अयं प्रदेशः कुलालासत्तिमान् भ्रमच्चक्राधिकरणत्वात् सम्मतवत् इयं नदी वृष्टिमदूर्ध्वदेशे संबद्धा पूरवदधोदे[3]शेन संबद्धत्वात् सम्मतवत् अयं धूमो मूले[4]ग्निमान् धूम[5]वत्त्वात् सम्मतवदिति कालं देशादिकं वा पक्षीकृत्य सामानाधिकरण्यं संपाद्यमिति चेत्॥

वह्निनेव व्यधिकरणयोरपि व्याप्तिरस्तीति पक्षे दोषान्तरमाह—**किंचेति**। **अतिप्रसङ्ग इति**। सद्धेतूनामसद्धेतुत्वापात्तिरूपातिप्रसङ्ग इत्यर्थः। तत्कथमित्यत आह—**दृश्यते हीति**। अनुमितिरित्यन्वयः। अनुव्याख्यानोक्तोदाहरणमुपलक्षणं मत्वाऽऽह—**पद्मेत्यादि**। कालं देशं वाऽऽदाय सर्वत्र सामानाधिकरण्यमाशङ्कते—**नन्विति**। देशादिकं

[1] प्तौ वैयधिकरण्यस्य-क.ग. रा. [2] शनदी–ग. रा. [3] शसं-क.-ग. ट. रा. [4] लेव–ग. ट. रा. [5] मत्वा–ट.

[1] किमियं लौकिकप्रतीतिः उत त्वदभिमत-सामानाधिकरण्यनियमनिर्वाहायैवं प्रयोगविपरिणामः कल्प्यते ॥

नाद्यः। त्वदुक्तकुसृष्टिमजानतामपि लौकिकानां पद्मादौ विकासादिदर्शनेनैव सूर्योदयादौ स्वार्थानुमित्तेः तदनुसारिपरार्थानुमितेश्च दर्शनात् । परीक्षकैश्च लोकासिद्धरीत्यनुसारिण्येव प्रक्रिया कल्प्या । न तु स्वकल्पितप्रक्रियया सा बाध्या । अतिप्रसङ्गात् । उक्तं च न्यायटीकायाम् —

सिद्धानुगममात्रं तु कर्तुं युक्तं परीक्षकैः ।
न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम् ॥

दृश्यते ह्यद्यतनस्य सूर्योदयस्य श्वस्तनेन सूर्योदयेन गम्यगमकभाव इति ॥

---

वेत्यादिपदेन नदीमिति गृह्यते । लोकरीतेरेवंरूपत्वेऽपि भवद्भिरिव मयाऽपि लोकरीत्यनुरोधेनैव परिभाषा कार्येति कुत इत्यत आह— **परीक्षकैश्चेति । अतिप्रसङ्गादिति ।** धूमादिना वह्न्याद्यनुमित्युत्पादनादिकमपि न स्यात् । ज्ञानस्यापीच्छाद्वारा प्रवृत्तिहेतुत्वकल्पनं दण्डादेर्घटहेतुताव्युत्पादनादिकमपि न स्यादित्येवमाद्यतिप्रसङ्गादित्यर्थः । यद्वा समानाधिकरणानामपि गम्यगमकभावो नेत्यपि व्युत्पादनप्रसङ्गादित्यर्थः ॥

---

[1] किमेवं लौकिकी—**ग. ट. रा.**

न द्वितीयः । अन्योन्याश्रयत्वा[1]त् । अन्यथा मदभिमतवैयधिकरण्यादिनिर्वाहाय पर्वताधोदेशोऽग्निमान् [2]ऊर्ध्वदेशस्य धूमवत्त्वात् विमतः कालो देशो वा अग्निमत्पर्वतसंबद्धः धूमवत्पर्वतसंबद्धत्वात् संमतवदित्यादिरपि विपरिणामः स्यात् ॥

किं चैवं सामानाधिकरण्यस्य सर्वत्र सुसंपादत्वेन व्यधिकरणासिद्धिर्निरवकाशा स्यात् । तदसंपादने सा सावकाशेति चेत्तर्ह्यसिद्धिरुक्तिदोषः

---

त्वदभिमतसामानाधिकरण्यनियम[3]निर्वाहायेत्युक्तकल्पं निराह — **न द्वितीय इति । अन्योन्येति** । सामानाधिकरण्यनियमे सिद्धे सति तन्निर्वाहाय प्रयोगविपरिणामकल्पना सिद्धे चोक्तदिशा प्रयोगविपरिणामे सामानाधिकरण्यनियमसिद्धिरित्यन्योन्याश्रयादित्यर्थः । [4]**निरवकाशेति ।** अयं काल आत्मनित्यत्ववान् काककार्ष्ण्यवत्त्वादित्यादिरूपेण त्वदभिमतव्यधिकरणासिद्धहेत्वाभासस्थलेऽपि सामानाधिकरण्यस्य सुवचत्वेन व्यधिकरणासिद्धेरुदाहरणं न किमपि लभ्येतेति दोषत्वेन तस्य परिगणनमयुक्तमापद्येतेति भावः । तदसंपादने देशकालादिना सामानाधिकरण्या-

---

[1] यात्- **ट. रा.** [2] न्तदू-**ट. रा.** [3] मे सिद्धसति तन्निर्वा--**ड.** [4] मदभिमतेति मदभिमतं यद्वैयधिकरण्यं तदादिनिर्वाहायेत्यर्थः । आदिपदेन सर्वत्रप्रयोगेषु देशकालयोरन्यतरस्यैव पक्षीकरणनिर्वाहायेति गृह्यते-' इत्यधिकम्-**ट**

**स्यात् । नार्थदोषः । किंच नोक्तिदोषत्वमपि । रोहिण्युदय आसन्नः कृत्तिकाया उदितत्वात् इत्युक्तावपि श्रोतॄणामनुमित्युत्पत्तेः ॥**

**न द्वितीयः । व्यधिकरणेष्व[1]प्यन्यथानुपपन्नेषु लिङ्गत्वस्य समानाधिकरणेष्वप्यन्यथोपपन्नेष्वलिङ्गत्वस्य च दर्शनेन पक्षधर्मताया अनावश्यकत्वात् । [2]इहेदानीं सता कार्येणान्यत्रान्यदासतस्तदुचितकारणस्यानुमानाच्च ॥**

संपादने इत्यर्थः । **नार्थदोष इति** । तथा च पुरुषस्य प्रयोक्तुः पराभवेपि तत्र जायमानानुमितिः प्रमारूपैव स्यादिति भावः । ननूक्तिदोषस्थळे वचनद्वाराऽर्थस्यापि दुष्टत्वमेव तादृशस्थळेऽनुमिते[3]श्चानुदयादित्यत आह—**किं चेति** ॥

पक्षधर्मताविघटनाद्वेति पक्षं निराह—**न द्वितीय इति** । **अन्यथानुपपन्नेष्विति** । अविनाभावरूपव्याप्तिमत्स्वित्यर्थः । प्रागुक्तपद्मविकासादिष्विति भावः । [4]**अन्यथोपपन्नेष्विति** । पर्वतो वह्निमान् पाषाणवत्त्वात्प्रमेयत्वादित्यादिष्वित्यर्थः । अलिङ्गत्वस्य प्रमित्यजनकत्वस्येत्यर्थः । व्यधिकरणेष्वन्यथानुपपन्नेषु लिङ्गत्वस्य दर्शनादित्युक्तं तत्कार्यकारणभावापन्नेषु दर्शयति—**इहेति** । सत इति पदविभागः । इदानींतनाङ्कुरादिदर्शनेन तत्पूर्वकाले बीजस्य पद्मस्थविकासरूपकार्येणोदयाचलोदितसूर्यस्यानुमानदर्शनादित्यर्थः । अत एवासमानाधिकरणयोरसमानकालीनयोरपि कार्यकारणयोर्लिङ्गलिङ्गिभावसत्त्वादेवेत्यर्थः ।

[1] ष्वन्यथा–**क. ग. ट. रा.** [2] इदा–**क. ट.** [3] तेरेवानु–**ट. ठ. ड.**
[4] न्यथाप्युप–**ट. ठ.**

अत एव वैशेषिकैरपि अस्येदं कार्यं कारणं संबन्ध्येकार्थसमवायि विरोधि चेति लैङ्गिकमित्ये-कार्थसमवायिनः कार्यकारणरूपलिङ्गे पृथगुक्ते त्वन्मते पतत्पतितयोरवयवापचयादिना भेदेऽपि पतन्निष्ठ[1]पतनेन पतिते गुरुत्वानुमानाच्च। त्वयापि पाको मत्कृतिसाध्यो मत्कृतिं विनाऽसत्त्वे सति

---

अस्येति । अस्येदं कार्यमिति, अस्येदं कारणमिति, अस्येदं संबन्धीति अस्येदमेकार्थसमवायेति, अस्येदं विरोधीति पञ्चधा लैङ्गिकं व्यापक-मित्यर्थः । विशिष्टमेघोन्नत्यादेर्वृष्ट्याद्याद्यं धूमादेर्वह्न्यादि द्वितीयं संयोगाद्द्रव्यं तृतीयं रसादेरूपादि चतुर्थं ध्वंसादेः प्रतियोग्यादि पञ्चम-मिति ध्येयम् ॥

परसंमत्याऽपि व्यधिकरणयोर्लिङ्गलिङ्गिभावं दर्शयति—**त्वन्मत इति । पतदिति ।** पततः पतितस्य चेत्यर्थः । वर्तमानपतनक्रिया-वतोऽतीतपतनक्रियावतश्चेति यावत् । पतनदशायामवयवापचया-भावेऽपि पतिते सत्यभिघातवशेनावयवापचयावश्यं भावात् । अवयवा-पचयस्थळे च पीलुपाकप्रक्रियया आपरमाणु नाशेन पुनर्द्रव्योत्पत्ते-रङ्गीकारात्पततः फलस्यैव पतितत्वदशायामन्यत्वात्तत्र च पतितं[2] फल-मिदं गुरुत्व[3]वत् पतनक्रियावत्त्वात्सम्मतवदित्यनुमानदर्शनात् पतन-गुरुत्वयोश्च लिङ्गलिङ्गिभावापन्नयोर्देशतः कालतश्च व्यधिकरणत्वात्कथं

---

[1] ष्ठेनप—क. ग. रा. [2] तमिदं फलं—ट. ठ. ड. [3] त्ववत्त्वात्—ट.

मदिष्टसाधनत्वात् मद्भोजनवत् इत्यत्र सिद्धपाकनिष्ठतया ज्ञातेन हेतुनाऽसिद्धपाकरूपपक्षनिष्ठतया साध्यप्रमितेरुक्तत्वाच्च ॥

किंच त्वन्मते प्रमात्वमेव [1] वा निष्कर्षज्ञानत्वमेव वा [2] प्रमेयत्वं एवं कृतित्वेच्छात्वद्वेषत्वादिकमेव कार्यत्वेष्टत्वद्विष्टत्वादिकं तथा च शब्दोभिधेयः प्रमेयत्वादित्यादौ कथं पक्षधर्मता। प्रमात्वस्य शब्देन परम्परासंबन्धोऽस्तीति चेन्न।

व्यधिकरणासिद्धेर्दोषत्वमित्यर्थः। **सिद्धपाकेति**। असिद्धपाके हेतोरभावेन तन्निष्ठत्वेन तवाज्ञानादिति भावः। **उक्तत्वाच्चेति**। विधिवादे। अतो न पक्षधर्मताविघटकत्वेन दोषत्वं व्यधिकरणासिद्धेरिति भावः। स्थळान्तरेपि व्यधिकरणस्य गमकत्वं परमते दर्शयति—**किं च त्वन्मत इति**। प्रमात्वस्याप्यर्थसत्त्वौपाधिकत्वेनाजातिरूपत्वात्तद्वति तत्प्रकारकज्ञानत्वरूपप्रमात्वे ज्ञानत्वस्य प्रवेशादाह—**अनिष्कर्ष इति**। प्रमात्वशरीरघटकोपाधिविवेकेनाखण्डजातिविमर्शे सतीत्यर्थः। अस्तु किं तत इत्यत आह—**तथा चेति**। **इत्यादाविति**। इदं सकर्तृकं कार्यत्वात्, इदं सङ्ग्राह्यमिष्टत्वात्, इदं हेयं द्विष्टत्वादित्यादिरादिपदार्थः। **कथमिति**। प्रमात्वादेः प्रमादिनिष्ठत्वेन शब्दाद्यनिष्ठत्वादिति भावः। **परम्परेति**। शब्दस्य प्रमायाः स्वरूपसंबन्धः प्रमया प्रमात्वस्य समवाय इति परम्परेत्यर्थः। प्रतीतिबलाद्धि येनकेनचित्संबन्धेन 'कृष्णं वस्त्रं लोहितःस्फटिक' इत्यादाविव परम्परासंबन्धेनापि तद्धर्मत्वं

---

[1] वातिनिष्कर्ष ज्ञा—क. ग. वातिनिष्कर्षज्ञा—ट. [2] प्रमेव वा इत्यधिकम्—क.

शब्दे प्रमात्वमिति कदाप्यप्रतीतेः। प्रत्युत प्रमात्वं नेत्येव प्रतीतेः। तस्य तद्धर्मत्वायोगात्। न च प्रमाजातीयविषयत्वं वा ईश्वरप्रमाविषयत्वं वा प्रमेयत्वं तच्च शब्देऽस्तीति वाच्यम्॥ विषयत्वरूपसंबन्धस्यापि त्वन्मते प्रमास्वरूपत्वात्। प्रमायाश्च शब्दानिष्ठत्वात्॥

किंच व्यतिरेकव्याप्तिः साक्षादङ्गमिति त्वन्मते व्याप्तिपक्षधर्मतयोर्वैयधिकरण्येपि गमकत्ववत् साध्यसाधनयोरपि वैयधिकरण्येऽपि गम्यगमकतास्तु। तत्र प्रतियोग्यनुयोगिभावो नियामकश्चेदत्रापि वृष्टिपूराश्रययोर्देशयोरूर्ध्वाधरीभावो नियामकोस्तु॥

अपिच धूमजातीयस्य वह्निजातीयं प्रतिव्याप्यत्वात्पर्वतीयो धूमो महानसीयवह्निं प्रत्यपि व्याप्य इतित्वन्मते कथं व्याप्यव्यापकयोः सामानाधिकरण्यम्॥

---

कल्पयं न हि तथा धीरित्याह—शब्द इति। प्रमास्वरूपत्वादिति। अन्यथाऽतीतादौ प्रमेयत्वाभावापातादिति भावः। प्रतिबन्द्याऽपि वैयधिकरण्यं न दोषायेत्या[1]ह—किंच व्यतिरेकेति। मण्युक्तव्याप्तिसामान्यलक्षणपक्षे व्यधिकरणयोरपि व्याप्तिस्वीकारात्तदनुसृत्याऽऽह—अपि चेति॥

[1] त्यत आ–ट. ड.

एतेन सामानाधिकरण्यव्यतिरेकनिश्चया-दिनाऽनुमितिप्रतिबन्धात्तन्निश्चयोऽनुमितिहेतुरिति निरस्तम् । वृष्टिपूरयोः सामानाधिकरण्यव्यतिरेक निश्चयेप्यनुमितिदर्शनात् ॥

न तृतीयः । वैयधिकरण्येपि व्याप्तेरुपपादि-तत्वात् ॥

व्यधिकरणासिद्धेर्दोषत्वभङ्गः ॥ २७ ॥

## बाधप्रतिरोधयोः प्रतिज्ञार्थप्रमाण विरोधत्वेनैक्यम् ॥ २८ ॥

केचित्तु—

सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च

---

व्याप्तिविघटनाद्वा दोषत्वमिति पक्षं निराह—**न तृतीय इति** ॥

व्यधिकरणासिद्धेर्दोषत्वभङ्गः ॥ २८ ॥

**बाधप्रतिरोधयोः प्रतिज्ञार्थप्रमाणविरोधत्वेनैक्यम् ॥ २९ ॥**

नन्वेवमाश्रयासिद्धिसाध्यासिद्धिव्यधिकरणासिद्धीनामदोषत्वेऽपि व्यभिचारादीनां हेतुदोषाणां भावादसिद्धिरव्याप्तिरिति द्वावेव हेतुदोषा-वित्ययुक्तमित्याक्षिपति—**केचित्त्वित्यादिना द्वावेव हेतुदोषावित्य-युक्तमित्याहुरित्यन्तेन** । केचित् तार्किकाः । प्रमाणलक्षणटीकादाव-सिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापादिष्टप्रकरणसमसत्प्रतिपक्ष--भेदेन प्राचां रीत्या सप्तविधानुवादेऽपि अनध्यवसितत्वस्यानैकान्ति-केऽन्तर्भावं प्रकरणसमस्यासंभावनया परिगणनायोग्यत्वमुपेत्य मण्याद्युक्त-दिशा पाञ्चविध्यमनुवदति—**सव्यभिचारेति** । अत एव नैयायिका-

**हेत्वाभासाः। तदुक्तं गौतमेन—"सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालाः हेत्वाभासाः" इति। तत्र साध्यतदभावकोटिद्वयोपस्थापकरूप-**

इत्यनुक्त्वा केचिदित्युक्तिः। एवं निर्देशे पञ्चत्वपरिगणने च मूलमाह— **तदुक्तमिति**। [1]मणेरपीदमेव मूलमित्यपि सूचितम्। प्रकरणसमशब्देन सत्प्रतिपक्ष उच्यते। साध्यसमपदेन चासिद्धिः अतीतकालपदेन बाध इत्युक्तार्थसंवादित्वं ध्येयम्। मण्याद्युक्तदिशा तेषां लक्षणान्यनुवदति —**तत्र तेषुमध्य इत्यादिना। उपस्थापकेति**। तदुभयोपस्थितिजनकं यद्रूपं साधारणे सपक्षविपक्षवृत्तित्वेन साध्यतदभावसाहचर्यं असाधारणे तदुभयव्यावृत्तत्वं, अनुपसंहारिणि च तदुभयशून्यत्वेन पक्ष एव साध्यतदभावसाहचर्यमित्यग्रे व्यक्तम्। तादृशधर्मत्वं साधारणादित्रितयसाधारणं लक्षणम्॥

यद्यपि मणावुभयकोटीत्याद्येवोक्तम्। तथापि तेनासाधारणस्य साध्यतदभावोपस्थापकतया दूषकत्वपक्षे नाव्याप्तिरित्युत्तरग्रन्थपर्यालोचनयोभयकोटिपदस्य एवमेवार्थोभिमत इतीत्थमनुवादः कृतः।

यत्तु पक्षधरादावुभयकोट्युपस्थितिपदेन व्याप्तिनिश्चयविरोधिसंदेहजनककोट्युपस्थितिर्विवक्षिता अन्यथा सर्वमभिधेयं वस्तुत्वादित्यादौ केवलान्वयिसाध्यकानुपसंहारिणि साध्याभावकोटेरप्रसिद्धेर[2]-व्याप्तिः स्यात्। उक्तविवक्षायां तु नाव्याप्तिः। केवलान्वयिसाध्यके इदमभिधेयं न वेत्येवं सन्देहा[3]योगेऽपि अभिधेयत्वं पक्षवृत्ति न वेत्येवं संशयसंभवात्। व्याप्तिनिश्चयविरोधिसंशयश्च साध्यतदभावसंशयः साध्ये पक्षवृत्तित्वसंशयश्च भवतीति कथनं तत्तु मणिवाक्य-

[1] तयोरपीदमेव–ठ. [2] द्धत्वेनाव्या–ठ. [3] हाभावेपि–ठ.

**वत्त्वं सव्यभिचारत्वं विप्रतिपत्तिवाक्ये सत्प्रतिपक्षे च द्वयोः कोटिद्वयोपस्थापऽकत्वेपि**

विरुद्धम् । न चैवं केवलान्वयिसाध्यकानुपसंहारिण्य[1] व्याप्तिः । [2] तस्यात्रासंग्राह्यत्वादित्याहुः ॥

नन्वथाप्यनित्यः शब्दः शब्दत्वादित्यत्राप्तवाक्यादिना व्याप्तिग्रहदशायां सद्धेतुत्वात् । तत्र सर्वसपक्षविपक्षव्यावृत्तत्वस्योभयकोट्युपस्थापकरूपस्य सत्त्वादतिव्याप्तिरिति वाच्यम् । तत्र व्याप्तिनिश्चयस्य पक्षीयसाध्यगोचरतया तदा पक्षस्यैव सपक्षत्वेन सकलसपक्षव्यावृत्तत्वांशस्य तत्राभावात् । अत्र लिङ्गनिष्ठतया यज्ज्ञानमुभयकोट्युपस्थापकं तादृश धर्मवत्त्वं विवक्षितम् । तेनायमिच्छावान् ज्ञानवत्त्वादित्यत्र प्रामाण्याप्रामाण्योभयकोट्युपस्थापकरूपज्ञानत्ववति सद्धेतौ नातिव्याप्तिः । ज्ञानत्वस्य प्रामाण्यसंशयविषयानुमितिवृत्तितया ज्ञानत्वेनैवोभयकोट्युपस्थापकत्वादिति ॥

नन्वेवमपि पर्वतोऽग्निमान् पर्वतोऽग्निमान्न भवतीति विरुद्धार्थप्रतिपादकवाक्यद्वये शब्दोऽनित्यः कृतकत्वात् नित्यः शब्दः श्रावणत्वादिति सत्प्रतिपक्षे चातिव्याप्तिरेवेत्यत आह—**विप्रतिपत्तीति ।** विप्रतिपत्तिस्तु प्रत्येकं न तथेति पूर्वपक्ष[3] मण्युक्तेः । तथाऽसाधारणग्रन्थे सत्प्रतिपक्षेद्वौ अत्र त्वेक एवेति चोक्तेरिति भावः । यद्यपि विमतं मिथ्या दृश्यत्वात् शुक्तिरजतवत् विमतं सत्यं दृश्यत्वाद्ब्रह्मवदित्यादिप्रकरणसमेप्येकस्यैवोभयोपस्थापकत्वमस्ति, तथाऽपि तस्यैतन्मतेऽसंभावितत्वेनास[4] ङ्ग्रहान्नातिव्याप्तिशङ्कावकाशः । तस्यापि सव्यभिचारत्वेन सङ्ग्रा[5] ह्यत्वाददोष इति केचित् ॥

---

[1] ण्यतिव्या–ट. [2] स्यसंग्राह्य–ठ. [3] ण्याद्युक्ते–ट. णावु–ठ. ड.
[4] संग्राह्यत्वा–ड. [5] ङ्ग्रहा–ठ.

**सव्यभिचारवदेकस्य तदुपस्थापकत्वाभावान्न स व्यभिचारलक्षणस्यातिव्याप्तिः। विपक्षमात्रवृत्तित्वं विरुद्धत्वम् । समबलप्रमाण[1] प्रतिरुद्धत्वं सत्प्रति**

प्रमाणलक्षणटीकाद्युक्तदिशा[2] ऽऽह — **विपक्षमात्रेति** । मात्रपदेन सपक्षवृत्तित्वं व्यावर्त्यते न तु पक्षवृत्तित्वमपि । तथात्वेऽसिद्धिसाङ्कर्यापत्तेः । पक्षविपक्षयोरेव वर्तमानो हेतुर्विरुद्ध इति लक्षणटीकाविरोधाच्च । वृक्षः संयोगवान् द्रव्यत्वादित्यत्र द्रव्यत्वहेतोः साध्याभाववद्वृत्तित्वेऽपि निश्चितसंयोगरूपसाध्यवत्यपि वृत्तेर्न तत्रातिव्याप्तिः । प्रतियोग्यसमानाधिकरणसाध्याभाववन्मात्रवृत्तित्वं तदर्थ इत्येके ॥

यत्तु मणौ साध्यव्यापकाभावप्रतियोगित्वं वा वृत्तिमतः साध्यवदवृत्तित्वं वा विरुद्धत्वमित्यादि । तन्न । हेत्वभावस्य साध्यव्यापकत्वज्ञानस्य ग्राह्याभावसंस्पर्शितया ग्राह्यभूतव्याप्तिज्ञानाप्रतिबन्धकत्वात् । निश्चितसाध्यवदवृत्तित्वे सति तदभाववद्वृत्तित्वस्य चाव्यभिचरितसहचाररूपव्याप्त्यभावरूपतया तज्ज्ञानस्य व्याप्तिज्ञानप्रतिबन्धद्वाराऽनुमितिप्रतिबन्धस्य सम्भवादिति भावः । एके तु मण्युक्तस्यैवायं निष्कर्षेणानुवाद इत्याहुः । पक्षत्रयवृत्तिसाधारणेऽतिव्याप्तिवारणाय मात्रपदम्। **समबलेति** । समबलत्वं चाभिमानिकं ध्येयम् । अन्यथा वस्तुनो द्विरूपताऽऽपत्तेः । "समबलतयाऽभिमतप्रमाणविरुद्धः सत्प्रतिपक्षः" इति लक्षणटीकोक्तेश्च । विरुद्धत्वं प्रतिरुद्धकार्यकत्वम् । बाधेतिव्याप्तिनिरासाय समेत्युक्तिः । साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यलिङ्गत्वं सत्प्रतिपक्षत्वमिति मण्युक्तिः । व्याप्तस्य

[1] णविरु ग. रा.    [2] शानिराह–ठ.

**पक्षत्वम् । परामर्शविषयाभाववत्त्वं असिद्धत्वम् । प्रबलप्रमाणाविरुद्धत्वं बाधः ॥**

**तत्र सव्यभिचारः त्रिविधः । साधारणासाधारणानुपसंहारिभेदात् । तत्र पक्षत्रयवृत्तित्वं साधारणत्वम् । सर्वसपक्षविपक्षव्यावृत्तत्वमसाधार-**

पक्षधर्मताप्रमितिः सिद्धिः तद्रहितोसिद्ध इति प्राचां रीतिमाश्रित्य लक्षणटीकोक्तं निष्कृष्याह--**परामर्शेति** । परामर्शविषयो व्याप्तिः पक्षधर्मता च तदुभयराहित्यमित्यर्थः ॥

यत्तु मणौ परामर्शविषयाभावो नासिद्धः व्यर्थविशेषणत्वात् किंतु आश्रयासिद्धिः स्वरूपासिद्धिः व्याप्यत्वासिद्धिरिति प्रत्येकमेव दोष इत्युक्तम् । तत्वितरव्यभिचारादित्वदुक्तलक्षणेपि तुल्यमित्यग्रे व्यक्तम् । सङ्ग्राहकमात्रत्वेस्यापि तथात्वादिति भावः । "प्रमाणबाधितविषयः कालात्ययापदिष्ट" इति लक्षणटीकाद्युक्तेराह---**प्रबलेति** । प्राबल्यमत्र वास्तवं वाऽभिमानिकं वा ध्येयम् । सत्प्रतिपक्षेऽतिव्याप्तिनिरासाय प्रबलेति । प्रबलप्रमाणनिर्धारिताभावप्रतियोगिसाध्यकत्वं बाध इत्यर्थः । वक्ष्यमाणान्तर्भावसुबोधाय मण्याद्युक्तदिशाऽवान्तरविभागमाह—**तत्र** । तेषु मध्ये इति । **पक्षत्रयेति** । पक्षसपक्षविपक्षवृत्तित्वमित्यर्थः । [1] यथा शब्दोनित्यः प्रमेयत्वादिति । **सर्वेति** । यथा भूर्नित्या गन्धवत्वादिति । "केवलान्वयिधर्मावच्छिन्नपक्षको वे" ति मण्युक्तरीत्याऽऽह—

[1] प्रमेयत्वादिति लक्षणं तु सर्वसपक्षव्यावृत्तत्वमिति मण्युक्तेराह-सर्वेति. **ट.**

णत्वम् । केवलान्वयिधर्मावच्छिन्नपक्षताकत्व-मनुपसंहारित्वम् । असिद्धिरपि आश्रयपक्षधर्मत्वव्याप्यत्वासिद्धिभेदेन त्रिविधा । तत्प्रमित्यसिध्या सह चतुर्विधा वा। एवं विरुद्धादेरपि भेदो द्रष्टव्यः ।

[1] तत्र शब्दो नित्यो मेयत्वादिति साधारणस्य सर्वमनित्यं प्रमेयत्वादित्यनुपसंहारिणश्च साध्यतदभावसाहचर्यं कोटिद्वयोपस्थापकं रूपम् । इयां स्तु भेदः साधारणस्य पक्षादन्यत्र तत्साहचर्यं अनुपसंहारिणस्तु पक्ष एवेति। अनित्यः शब्दः शब्दत्वादित्य [2] साधारणस्य तु साध्यवतः तदभाववतश्च व्यावृत्तत्वं तदुपस्थापकमिति सव्यभिचारलक्षणस्य [3] नातिव्याप्तिः । आश्रयहेतुव्याप्तीनां लिङ्गपरामर्शविषयत्वात्तदभाव [4] वत्त्व रूपमाश्रयासिद्ध्याद्यासिद्धित्रयाऽनुगतम् ॥

**केवलान्वयीति** । यथा सर्वमनित्यं मेयत्वादित्यादिप्राचीनमतावष्टम्भेन पद्धत्याद्युक्तदिशाऽऽह—**तत्प्रमितीति । भेदो द्रष्टव्य इति ।** स च पद्धतिलक्षणटीकयोर्व्यक्तः । ग्रन्थगौरवभयात् प्रकृते वक्ष्यमाणान्तर्भावानुपयोगाच्च नास्माभिरपि लिख्यते सव्यभिचारादिलक्षणं साधारणादित्रयेऽसिद्धित्रये च व्यनक्ति—**तत्र शब्द इत्यादिना ।**

---

[1] अत्र –**क. ट.** [2] त्वाद्यसा–**क. ट. रा.** [3] स्याव्या–**क. ग. रा.**
[4] वरूपत्व–**क. ग. ट. रा.**

अत्रासाधारणानुपसंहारिसत्प्रतिपक्षा अनित्यदोषाः । अनुकूलतर्कावतारदशायामनुमित्यप्रतिबन्धकत्वात् । इतरे तु नित्यदोषाः । तत्रापि बाधप्रतिरोधौ साक्षादनुमितिप्रतिबन्धकौ । नतु करणविघटनद्वारा।[1]तत्रापि बाधो अनुमितिग्राह्याभावविषय[2]धीत्वेन । प्रतिरोधस्त्वनुमितिग्राह्याभावविषयधीसामग्रीत्वेन । इतरे त्रयः करणविघटनद्वारा । तत्रापि सव्यभिचारविरुद्धौ व्याप्तिविघटनेन । असिद्धिः परामर्श[3]विषयाविघटनेन । तत्राप्याश्रयासिद्धिस्वरूपासिद्धीपक्षधर्मताविघटनेन । व्याप्यत्वासिद्धिस्तु व्याप्तिविघटनेन । तस्माद्द्वावेव हेतुदोषावित्ययुक्तमित्याहुः ॥

अनित्यदोषत्वं व्यनक्ति—**अनुकूलेति** । **न तु करणेति** । परामर्शरूपकरणेत्यर्थः । **अनुमितीति** । पूर्वप्रयुक्तहेतुजन्यानुमितिग्राह्यस्याभावविषयकधीत्यर्थः । **इतर इति** । सव्यभिचारविरुद्धासिद्धास्त्रय इत्यर्थः । द्वारेत्यनन्तरं अनुमितिप्रतिबन्धका इत्यनुकर्षः । त्वदुक्तरीत्या पाञ्चविध्यसम्भवेपि तेन रूपेण ज्ञातानां तेषामनुमित्यप्रतिबन्धकतया तथानुद्भाव्यत्वेनैवं व्युत्पादनमयुक्तमपित्वस्मदुक्तरीत्यैव तेन रूपेण ज्ञातानामनुमितिप्रतिबन्धकत्वादुद्भावनीयत्वाच्चेति भावेनोक्तरीत्या ज्ञातानां प्रतिबन्धकत्वमित्येतदसाधकतालिङ्गत्वं चेत्यादिना वक्तुं

[1] रा कथमपि बाधोनुमिति- क. रातत्राप्यनु-ट. [2] यप्रमात्वेन-ग. ट. रा. [3] विषयेति नास्ति—क. ट.

तदसत् । यद्रूपेण हि ज्ञानमनुमितिप्रति-बन्धकं तद्रूपेणैव दोषः परं प्रत्युद्भावनीयः । यद्रूपेण चोद्भावनं तद्रूपेणैवासाधकता साधनीया। यद्रूपेण च तत्साधनं तद्रूपेणैव हेत्वाभासादिदोषो विभजनीयः । अन्यथान्यः शस्त्री, अन्यो योद्धा, अन्यो जयी अन्यस्तु श्लाघ्य इतिवद्वैरूप्यापातात् । असाधकतासाधकस्य हेत्वाभासस्याप्रयोजकत्वा-पाताच्च । संभवतोप्यसाधकतासाधनादिव्यव-हारानुपयोगिनो निष्प्रयोजनस्य विभागस्याति-प्रसङ्गित्वाच्च ।

संभवन्ति हि हेत्वाभासेनन्ताः प्रकाराः । उक्तं हि न्यायसारे[1] । "यद्यपि चैषां सूक्ष्मो भेदोनन्त-त्वाद्वक्तुं न शक्यते" इति ।

सामान्यन्यायमाह — **यद्रूपेणेति** । यद्धर्मप्रकारेणेत्यर्थः । **असाधक-तेति** । इदमसाधकं एवंत्वादिति । कुत एवमित्यत आह — **अन्यथेति** । **वैरूप्येति** । अन्यज्ज्ञानं प्रतिबन्धकमन्यदुद्भाव्यं ततोन्य-दसाधकतासाधकं तदन्यस्य विभाग इति वैरूप्यापातादित्यर्थः । **अप्रयोजकत्वेति** । अन्यथेत्यत्रानुषङ्गः । तद्रूपेण ज्ञानस्यानुमित्यप्रति-बन्धकत्व इत्यर्थः । नन्वसाधकतायामनुपयोगिनोपि सम्भवमात्रेण विभाग-स्योक्तौ को दोष इत्यत आह — **संभवतोपीति** । अतिप्रसङ्गित्वाच्चे-त्युक्तं व्यनक्ति — **संभवन्ति हीति** । तथा च तेषामपि परिगणना-

[1] रेपि — ग. ट. रा.

**असाधकतालिङ्गत्वं च बाधप्रतिरोधयोरुभयानुगतेन प्रतिज्ञा[1]र्थेप्रमाणविरोधित्वेनैव । न तु बाधत्वादिना बाधितत्त्वात्प्रति[2]रुद्धत्वादित्यस्य हि प्रबलसमबलप्रमाणविरूद्धत्वादित्यर्थः । तत्र**

पातेन पञ्चैवेत्युक्तिरयुक्तेति भावः । ते च प्रकाराः प्रमाणलक्षणटीकायां व्यक्ताः । अस्त्वेवं येन रूपेण ज्ञानमित्यादिनोक्तं प्रकृते किमित्यतः

विरोधोपि त्रिधैव स्यात्प्रतिज्ञार्थविरुद्धता ।

लिङ्गराहित्यमव्याप्तिः "

इति युक्तिपादीयानुव्याख्यानव्याख्यावसरे सुधोक्तरीतिमनुसृत्याऽऽह - **असाधकतालिङ्गत्वं चेति** । कुत इत्यतः [3]वह्निरनुष्णः पदार्थत्वादित्यादौ वादिनोक्ते प्रतिवादिना पदार्थत्वादिति हेतुः असाधकः बाधितत्वात्सत्प्रतिपक्षत्वादित्युच्यमाने सति वादिना व्यर्थविशेषणत्वदूषणं वक्तुमापाद्यत इत्याह — **बाधितत्वा[4]प्रतिरुद्धत्वादित्यस्य हीति** ॥

ननु विरुद्धत्वादिज्ञानादेव स्वार्थानुमितेरिव परार्थानुमितेरपिप्रतिबन्धात्किमसाधकतानुमानेन यद्वाक्ये प्रतिवाद्युक्तदूषणावगतिः स निगृहीत इति समयबन्धेन कथाप्रवृत्तौ दूषणमात्रमुद्भाव्यम् अन्यथार्थान्तरत्वम् । एवं चासाधकतानुमानस्यैवानावश्यकत्वाद्व्यर्थविशेषणत्वानवकाश इति चेन्न । द्वयं ह्युद्देश्यम् । परानुमितिप्रतिबन्धः स्थापनाया असाधकतासाधनं च । तत्राद्यं दूषणमात्रज्ञानादेव द्वितीयं तु

[1] तार्थप्र—**ट. रा.** [2] तिपक्षत्वादि—**ग. रा.** [3] त आह—बाधितत्वादिति—इत्यधिकम्—**ट.** [4] त्वादित्यस्यहीति इत्येवास्ति—**ट. ठ. ड.**

**चेदमसाधकं प्रमाणविरुद्धत्वादित्येवमस्तु । अन्यद्व्यर्थम् । दुर्बलस्य प्रमाणपदेनैव व्यावर्तितत्वात् । प्रमाणतदाभासाविवेक एव हि प्रमाणपदप्रयोगः । न त्वप्रामाण्यनिश्चये । अहीनबलत्वेन वा वि[1]शिष्यताम् । तदवान्तरभेदोपादानं व्यर्थमेव ।**

**न च बाधप्रतिरोधयोरन्योन्यमसङ्करार्थं तदुपादानम् दूषकताबीजैक्येन सङ्करस्यैवोचितत्वात्**

तस्य दूषणस्य लिङ्गत्वज्ञानात् प्रतिबन्धकत्ववदनेनापि रूपेण त्वसम्भव इत्यभिप्रायेण वाऽसाधकमसाधनमिति मणावेवोक्तत्वादिति भावः ॥

दुर्बलप्रमाणविरोधस्य अकिंचित्करत्वेनासाधकत्वासाधकतया तद्व्यावृत्तये प्रबलेत्याद्यर्थवदित्यत आह—**दुर्बलस्येति** । दुर्बलं हि हीनबलत्वादेवाप्रमाणत्वेन निर्णीतमिति प्रमाणपदप्रयोग एव तत्र न युक्त इति तेन तद्व्यावृत्तिरित्यर्थः । ननु कथं तर्हि सत्प्रतिपक्षस्थळे वस्तुतो हीनबले समबलतयाऽभिमन्यमाने प्रमाणपदप्रयोग इत्यत आह—**प्रमाणेति** । **न त्विति** । हीनबले तु तन्निश्चय एवास्तीति भावः । उभयानुगतं हीनबलव्यावर्तकं धर्मान्तरमाह—**अहीनेति** । **तदवान्तरेति** । प्रबलसमबलेत्यवान्तरभेदेत्यर्थः । तथा चैकमेवेदं दूषणं स्यादिति पञ्चेति विभागभङ्ग इति भावः । **तदिति** । प्रबलसमबलेति विशेषणोपादनं बाधप्रतिरोधयोरित्यर्थः । **दूषकताबीजस्येति** । प्रमाणविरोधरूपत्वस्य वा अहीनबलप्रमाणविरोधत्वरूपस्य वा एकत्वेनेत्यर्थः ॥

[1] शेष्य–**ट. रा.**

**व्यावर्त्याभावेऽपि विद्यमानत्वमात्रेणोपादाने प्रबलचाक्षुषप्रत्यक्षविरुद्धत्वादित्याद्यपि प्रयुज्येत । न च परस्यात्यशक्तिज्ञापनार्थत्वान्न वैयर्थ्यमिति वाच्यम् । अशक्तिज्ञापनस्यैवोद्देश्यत्वाद्बाधाज्ञा[1]नमूलाशक्तौ प्रतिरोधाज्ञानमूलाशक्तितोऽतिशयाभावाच्च ॥**

**किंच बाधितेनापि त्वामहं जेतुं शक्त इति**

ननु संभवमात्रेण तथा प्रयोगे को दोष इत्यत आह—**व्यावर्त्येति ।** बाधो हि प्रबलप्रत्यक्षविरोधप्रबलानुमानविरोधप्रबलागमविरोधादिभेदेनानेकविधो लक्षणटीकायां व्यक्तः । तथा च प्रबलप्रमाणविरुद्धत्वादिवत्प्रत्यक्षविरोधेप्यवान्तरभेदोपपादनेन प्रबलचाक्षुषप्रबलस्पार्शनविरोधादिभेदेनाप्युद्भाव्येत । न चैवमङ्गीकृतम् । तथात्वे पञ्चत्वविभागभङ्गप्रसङ्गादिति भावः । **अत्यशक्तीति ।** प्रबलविरोधमपि त्वं न ज्ञातवान् किमु प्रमाणविरोधमात्रमित्यशक्तिज्ञापनार्थत्वादित्यर्थः । **अशक्तिज्ञापनस्यैवेति ।** अशक्तिज्ञापनमात्रेण परापजयस्य स्वजयस्य च संभवेन तन्मात्रस्यैवोद्देश्यत्वेनातिशयि"ताशक्तिज्ञापनस्यानुद्देश्यतया तादर्थ्येन सार्थक्योक्तिरयुक्ता । तन्मात्रं चावान्तरभेदानुपादानेनाप्युक्तदिशा सिध्यत्येवेति भावः । अतिशयेनाशक्तिज्ञापनस्य लाभे कुतः परित्याज्य इत्यत आह—**बाधाज्ञानेति ।**

ननु प्रबलमपि न जानासि किमु समबलमित्यस्ति कश्चिदतिशय इति मन्वानं प्रत्याह—**किं चेति ।** सुवचत्वाद्बाधादिनेति योज्यम् ।

[1] धाज्ञा--रा.

भावेनेदं प्रयुक्तमित्यपि सुवचत्वात्परस्य शक्त्यतिशय एव किं न सिध्येत्। किं चैवमपि प्रतिरोधे समबलपदवैयर्थ्यं तदवस्थमेव ॥

किंच बाधेपि प्रमाणपदेनैव प्रबल[1]त्वेपि लब्धे प्रबलपदं [2] व्यर्थम्। प्रत्युत समबलव्यावर्तकतया-हानिकृदेवेति विपरीतफलम् ॥

यद्यपि प्रतिरोधस्य परपक्षप्रतिबन्धमात्रं फलम्। बाधस्य तु स्वपक्षसिद्धिरपि। तथाऽपि स्वपक्ष-स्थापनायाः पृथक्कर्तव्यत्वात्। बाधस्य परपक्षप्रति-

---

परस्येति। बाधितानुमानप्रयोक्तुर्वादिन इत्यर्थः। एवमपीति। बाधे प्रबलेति प्रमाणविशेषणस्यात्यशक्तिज्ञापनार्थतया सार्थक्यपीत्यर्थः। तदवस्थमेवेति। संभावितत[3]त्कृत्यस्य सर्वस्य प्राङ्निरासादिति भावः। प्रबलपदं व्यर्थमित्येव न किंतु विरुद्धार्थकत्वाच्च नोपादेयमसाधकत्वानुमान[4]मित्याह — किंच बाधेपीति। इदमसाधकं प्रमाणविरुद्धत्वादित्युक्ते प्रबलप्रमाणविरुद्धत्वस्य स्वाभिमतस्य लाभाद्दोषत्वेन समबलप्रमाणविरोधसाधारण्ये संभवति तद्व्यावर्तकत्वाद्धानिकृदेवेत्यर्थः ॥

ननु समबलव्यावृत्त्यर्थकस्य न हानिकरत्वेन विपरीतफलत्वं बाधस्य स्वपक्षस्थापनपरपक्षप्रतिक्षेपलक्षणाद्विरूपत्वात् समबले च तदभावादनुकूलफलमेव प्रबलपदम्। अत एव नानर्थकमपीति चोद्यमनूद्यावद्याति — यद्यपीत्यादिना। अत्यशक्तिज्ञापनार्थतया सार्थ-

---

[1] लेतिलब्धप्रबल—ग. ट. रा. [2] व्यर्थपदं न—क. ग. रा. [3] तत-त्तत्पक्ष-ठ. तत्कृत्यस्य—ड. [4] ने इ—ट. ठ. ड.

बन्धएवोद्देश्य इति यावताप्रतिबन्धासिद्धिस्तावदेव वक्तव्यम् । न त्वन्यत् ॥

किचैवं परस्यातितरामशक्तिज्ञापनाय बहुत्वोपजीव्यत्वनिरवकाशत्वैः प्रबलप्रमाणविरुद्धत्वादिति बाधितत्वे सति सव्यभिचारित्वादित्याद्यपि प्रयुज्येत । एवं स्वस्यातिशक्तिज्ञापनायानेकहेतूक्तिरपि स्यादित्यधिकनिग्रहोच्छेदः स्यात् । वादे वादप्रक्रियया प्रवृत्ते शास्त्रे चातिहेयत्वव्युत्पादनाय बहुदोषोक्तिर्युक्ता । न तु जल्पादौ समयबन्धं विना ॥

ननु—प्रमितसाध्याभाववत्पक्षकत्वं बाधः । अत्र च न विशेषणवैयर्थ्यमिति चेन्न । त्वयाऽपि

---

क्येऽतिप्रसङ्गं चाह—**किंचैवं परस्येति** । ननु कथं तर्हि वादकथायां शास्त्रे चानेकदोषः परोक्तानुमानेषु प्रदर्श्यते तत्राप्याधिक्यनिग्रहस्थानापत्तिरित्यत आह—**वाद इति** । **न तु जल्पादौ** । जल्पवितण्डाकथयोर्नानेकोक्तिर्युक्तेत्ययुक्तम् । यावत्स्फुरति द्वयं त्रयं ततोऽधिकं वा तावत्सर्वं वाच्यमिति समयबन्धे सति तदनुक्तौ दोषाभावादित्यतआह—**समयबन्धं विनेति** । मणिकृन्मतमाशङ्क्य निराह—**नन्विति** । अवधृतप्रामाण्यकनिश्चयविषयसाध्याभाववत्पक्षकत्वमित्यर्थः । साध्याभावज्ञानस्य प्रमात्वनिश्चये बाध इत्यभ्युपगमाद्विरोधिज्ञानद्वयेत्याद्यग्रेतनग्रन्थाच्च । यद्वा साध्याभावप्रमा बाध इति मतेनेदम् । साध्याभावज्ञानस्य प्रमात्वनिश्चयो बाध इति मतेऽवधृतप्रामाण्यक-

साध्याभावप्रमाबाधफलमित्युक्तत्वेन तस्याः[1] बाधकत्वायोगात् । बाधस्य ज्ञानोपाधिकत्वे साध्याभावाज्ञानदशायां बाधाभावेन तस्यानित्यदोषत्वापाताच्च । विरोधिज्ञानद्वयसन्निपाते एकत्र प्रमात्वनिश्चयस्य करणप्राबल्यनिश्चयं विनाऽनुपपत्त्याऽऽवश्यकस्य प्रबलप्रमाणविरोधस्यैव दोषत्वौचित्याच्च ॥

किंच प्रतिरोधे क्लृप्तत्वेन बाधेपि करणविरोधस्यैव दोषत्वं युक्तम् । किं च प्रतिरोध इव बाधेऽपि आवश्यकेनाहीनबलत्वेनैव प्रतिबन्ध-

---

निश्चयविषयसाध्याभाववत्पक्षकत्वमर्थमुपेत्य दोषान्तरकथनं विरोधिज्ञानद्वयेत्यादीति ध्येयम् । इत्युक्तत्वेति । तथा च प्रबलप्रमाणविरोध एव बाधो वाच्यः । तदैव साध्याभावप्रमायाः फलत्वासिद्धिरित्यस्त्येव विशेषणवैयर्थ्यमिति भावः । विरोधिज्ञानद्वयेति । साध्यतदभावगोचरविरोधिज्ञानद्वयेत्यर्थः । करणेति । तज्ज्ञानकरणेत्यर्थः । प्रतिरोधे सत्प्रतिपक्षे एवमपि[2] वैयर्थ्यमेवास्मिन् पक्षे प्रसक्तमित्याह — किंच प्रतिरोध इवेति । प्रतिरोधेपि समबलत्वस्य व्यर्थत्वादिना[3] बलत्वेन विशेषणस्य प्रागुपपादानात् प्रतिरोध इवेत्युक्तम् । प्रमात्वेति । साध्याभावज्ञाने प्रमात्वविशेषणेनेत्यर्थः । अहीनबलप्रमाणविरोधत्वेन वा अहीनबलसाधकविरोधत्वेन वा अहीनबलावगतसाध्याभाववत्पक्षकत्वेन वा प्रतिबन्धसंभव इत्यर्थः ।

[1] स्य न बाधफलयो–क. [2] पि व्यर्थमे–ट. ड. [3] नाहीन–ट. ठ.

संभवे किं प्रमात्वविशेषणेन। किंचैवं वह्निः शीतः कृतकत्वादित्यत्र वह्निरुष्ण इति प्रमाबाधो न स्यात्। उष्णस्पर्शस्य शीतस्पर्शाभावानात्मकत्वात्। अभावपदेन विरोधिमात्रविवक्षायां सिद्धं मदभिप्रेतं सत्प्रतिपक्षसाङ्कर्यम्। दूषकानुमानीयहेतुप्रमायाः दूष्यानुमानीयसाध्यविरोधिविषयत्वात्॥

किंचैवं प्रहतमार्गत्यागेन कुसृट्याश्रयणे प्रमितसाध्याभाववत्पक्षकत्वं बाध इतिवत्प्रमितसाध्य[1]-संबन्धाभाववत्पक्षकत्वं वा प्रमितसाध्यवत्प्रतियोगिकान्योन्याभाववत्पक्षकत्वं वा बाध इत्यपि निर्वक्तुं शक्यत्वाद्बाधो नाना स्यात्। अत्र चैक-

प्रमितसाध्याभाववत्पक्षकत्वं बाध इति लक्षणेऽव्याप्तिं चाह—**किंचैव**मिति। अव्याप्त्युद्धारमाशङ्कते—**अभावे**ति। प्रमितसाध्यविरोधिमत्पक्षकत्वमित्यर्थोऽभिमत इति भावः। **सिद्ध**मिति। मदभिप्रेतं सत्प्रतिपक्षसाङ्कर्यं सिद्धमित्यर्थः। तत्कथमित्यतो व्यनक्ति—**दूषके**ति। वाद्युक्तस्थापनानुमानप्रतिभटतया प्रतिवाद्युक्तेत्यर्थः। तथा च प्रतिपक्षोऽप्येवमेवेति बाधप्रतिपक्षयोरेकदूषणत्वमेव प्राप्तमिति पञ्चेति विभागभङ्ग इति भावः। **प्रहते**ति। सर्वावगतप्रमाणाविरोधरूपमार्गत्यागेनेत्यर्थः। अस्तु [2]नाम को दोष इत्यत आह—**अत्र चे**ति॥

[1] ध्याभाववत्व-ट. ध्यवत्प्रतियो-ग. रा. [2] नाना को-ट. ड.

मेवासाधकतालिङ्गं सर्वं वा । आद्येऽन्यज्ञाने-
नानुमितिप्रतिबन्धो न स्यात् । अन्यानुमितेनैके-
नैवानुमितिप्रतिबन्ध इति तु नानुभवानुसारि ।
द्वितीये मिलितं लिङ्गं प्रत्येकं वा । आद्ये एकेनैव-
पूर्णत्वाच्छेपवैयर्थ्यम् । अन्त्ये हेत्वाभासाधिक्यम् ।
प्रतिज्ञार्थप्रमाणविरोधव्याप्यत्वेनैकीकरणेचावश्य -
कत्वाल्लाघवाच्च प्रमाणविरोध एव दोषोस्तु ॥

एतेन साध्यविरोध्युपस्थापनसमर्थया समान-
बलोपस्थित्या प्रतिरुद्धकार्यलिङ्गत्वं वा, समबल-
सामग्रीप्रतिबन्धेन निर्णयाजनकत्वं वा सत्प्रति-
पक्षत्वमिति निरस्तम् । समबलपदवैयर्थ्यात् ।
तत्त्यागे च बाधसाङ्कर्यात् ॥

एतेनैव परामर्शविपर्यीभूतप्रतिसाधनत्वं सत्प्र-
तिपक्षत्वमिति च निरस्तम् । प्रत्यक्षस्य समबलाभ्यां

---

ननूक्तरूपाणां त्रयाणां मध्ये द्वयं लिङ्गरूपम् । एकं तु लिङ्गि-
भूतम् । तत्र ताभ्यां लिङ्गाभ्यामनुमितमेकं बाधत्वेन दूपणमस्त्विति चेत्
किं लिङ्गं किं लिङ्गीति निर्धारकप्रमाणाभावात् । अनुभवविरुद्धं चैत-
दित्यप्याह—अन्येति । द्वितीय इति । सर्वं वेति पक्षे हेत्वाभासा-
धिक्यमिति पञ्चभ्योऽधिकहेत्वाभासगणनापात इत्यर्थः । मण्याद्युक्त-
लक्षणानि निराह—एतेनेति । वैयर्थ्यादिति । तथोपपादितत्वा-
दिति भावः । केनचिदुक्तं लक्षणान्तरं चान्यासद्या निराह—
एतेनैवेति । अनुव्याख्याने चेति । युक्तिपादे न विलक्षणत्वाधि-

प्रत्यक्षशब्दाभ्यां शब्दस्य च समबलाभ्यां शब्दप्रत्यक्षाभ्यां प्रतिरोधेऽव्याप्तेः । परामर्शविषयीभूतप्रबलानुमानरूपप्रतिसाधनात्मकबाध – साङ्कर्याच्च । तस्माद्बाधप्रतिरोधयोः प्रतिज्ञार्थप्रमाणविरोधत्वेनैव दोषत्वं न तु प्रबलप्रमाणविरोधत्वादिना ॥

अत एव भगवत्पादैः प्रमाणलक्षणे प्रमाणविरुद्धार्थप्रतिज्ञा प्रतिज्ञाविरोध इति अनुव्याख्याने च "प्रतिज्ञार्थविरुद्धते"ति तयोरुभयानुगतेन प्रमाणविरोधस्वरूपेणैव दोषत्वमुक्त्वा-असिद्धिरव्याप्तिरिति हेतुविरोधः साध्यस्य साधनस्य वाऽननुगमो दृष्टान्तविरोध इत्यसिद्ध्यादीनां चतुर्णामसिद्धित्वादिरूपेणैव दोषत्वमुक्तम् ॥

या तु पद्धतौ प्रमाणविरोधोपि द्वेधा प्रबलप्रमाणविरोधः, समबलप्रमाणविरोधश्चेति टीका-

करणानुव्याख्यान इत्यर्थः । तयोरिति । बाधप्रतिपक्षयोरित्यर्थः । प्रमाणलक्षणवाक्ये आह—असिद्धिरित्यादि । असिद्धत्वादिरूपेणेति । असिद्धित्वाव्याप्तित्वसाध्यविकलत्वसाधनविकलत्वरूपेणेत्यर्थः । उक्तमिति । प्रमाणलक्षण इत्यनुकर्षः । प्रमाणविरुद्धत्वेनैकीकरणे [3] प्रमाणपद्धतिविरोधमाशङ्क्य तदभिप्रायोक्त्या निराह—या त्विति ।

[1] रोधत्वे–ड. ट. [3] प्रमाणपदं न–ट. ठ.

कारीया द्वैविध्योक्तिः सा प्रत्यक्षादिविरोधभेदेन द्वावपि प्रत्येकं त्रिविधाविति त्रैविध्योक्तिः शिष्य-मतिवैशद्याय वस्तुस्थितिप्रदर्शनार्थं वा, प्रति-वादिनो विशेषजिज्ञासायां सोऽपि वक्तव्य इति शिक्षार्थं वा परोक्तयोः कालात्ययापदिष्टसत्प्रति-पक्षयोर्विभज्यान्तर्भावोक्त्यर्थं वा ॥

अत एव प्रमाणलक्षणे "प्रतिज्ञायाः समबल-विरोध एव सप्रतिसाधन" इत्युक्तम्। न तु बाधत्वादिनाऽसाधकता साध्येत्येतदर्थमिति ज्ञेयम्। अन्यथा शिष्यमतिवैशद्यार्थे[1] व्युत्पादन[2]मनु-मतमेवेति न स्वीयव्यवहारविरोध इति सुधया, न चात्र प्रबलत्वादिविशेषणस्य प्रयोजनमस्ती-त्यादिसुधया च विरोधात् ॥

केचित्तु प्रमाणलक्षणादिकमसाधकतामात्रसा-धने प्राबल्यमनुपयुक्तमित्यभिप्रेत्य प्रवृत्तम् । पद्धतिस्तु अत्यन्तासाधकत्वसाधने प्राबल्यमुप-युक्तमित्यभिप्रेत्य। अत एव मिथ्यात्वानुमान-खण्डने बाधप्रतिरोधौ पृथगुक्ताविस्याहुः ॥

---

विभज्येति । समबलप्रमाणविरोधे सत्प्रतिपक्षस्यान्तर्भावः बाधस्य प्रबलप्रमाणविरोध इति विभज्यान्तर्भावोक्त्यर्थं चेत्यर्थः । सुधयेति । प्रागुक्तानुव्याख्यानव्याख्यानरूपया युक्तिपादीयसुधयेत्यर्थः । समाध्य-न्तरमप्यन्यापदेशेनाह— केचित्विति ॥

---

[1] द्याय व्यु–ग. रा. [2] नंत्वनु–क. ग. रा.

तस्माद्बाधप्रतिरोधौ प्रमाणविरोधत्वेनैव दोषौ।
न तु प्रबलप्रमाणविरोधत्वादिनेति ॥
बाधप्रतिरोधयोः प्रतिज्ञार्थप्रमाणविरोधत्वेनैक्यम् ॥ २८ ॥

गौतमोक्तहेत्वाभासपञ्चत्वभङ्गः ॥ २९ ॥

एवं हेतुदोषेष्वसाधकतालिङ्गत्वं [1]व्यभिचार-विरुद्धव्याप्यत्वासिद्धानुगतेनाव्याप्तित्वेनैव। न तु गौतमोक्तेन सव्यभिचारत्वादिना ॥

मणाविव कोटिद्वयोपस्थापकरूप[2]वत्त्वं नानुमिति-

अत्रारुचिबीजं तु असाधकत्वज्ञापनमात्रेण परस्य पराजये किमत्यन्तासाधकत्वज्ञापनेन। ग्रन्थान्तरे पृथगुक्तिस्तु पररीत्याऽपि संभवति। अत एव साध्याप्रसिद्धेरदोषत्वेऽपि "अनिर्वचनीयासिद्धेरप्रसिद्धविशेषणः पक्ष" इति पररीत्या तत्र तत्रव्यवहार इति ॥
बाधप्रतिरोधयोः प्रतिज्ञार्थप्रमाणविरोधत्वेनैक्यम् ॥ २९ ॥

गौतमोक्तहेत्वाभासपञ्चत्वभङ्गः ॥

एवं परिगणितहेत्वाभासपञ्चके बाधप्रतिरोधयोः प्रतिज्ञाविरोधेऽन्तर्भावमुक्त्वाऽन्येषां त्रयाणां प्रागुक्तहेतुदोषयोरन्तर्भावं 'लिङ्गराहित्यमव्याप्ति[3]रिति प्रागुक्तानुव्याख्यानव्याख्यानसुधोक्तरीत्या व्यनक्ति—एवमित्यादिना। मणाविवेति। उभयकोट्युपस्थापकतावच्छेदक-

[1] सव्यभि—ट. रा. [2] पत्वेन ना—ग. ट. प. वत्वेन ना—रा
[3] मिति—ट. ठ. ड.

प्रतिबन्धक[1]म् । साधारणत्वादिरूपेणैव [2]ज्ञातस्य प्रतिबन्धकत्वात् लक्षणानुरोधेन प्रत्येकमेव हेत्वाभासत्वमित्युक्तत्वेन, एवमाश्रयासिद्धिर्व्याप्यत्वासिद्धिः पक्षधर्मतासिद्धिश्च प्रत्येकमेव दोषः प्रत्येकस्य ज्ञानादुद्भावा[3]च्चानुमितिप्रतिबन्धादिति चोक्तत्वेन प्रथमविभाग एव साधारणासाधारणानुपसंहारिविरुद्धसत्प्रतिपक्षाश्रयासिद्धव्याप्यत्वा-सिद्धपक्षधर्मत्वासिद्धबाधिता इत्यादेर्वक्तव्यत्वेन[4] गौतमोक्तपञ्चत्वायोगात् ॥

ननु महर्षिणा स्वरूपसता कोटिद्वयोपस्थापकत्वेनानैकान्तिकत्रयं परामर्शविषयाभावत्वेन चासिद्धत्रयमेकीकृत्य विभागः कृत इति न पञ्चत्व-

रूपवत्त्वं सव्यभिचारत्वमित्युक्त्वा तच्च साधारणत्वादि, तेनैव रूपेण ज्ञातस्य प्रतिबन्धकत्वादित्युक्तत्वेन लक्षणानुरोधेन प्रत्येकमेव हेत्वाभासत्वमिति चोक्तत्वेन साधारणत्वासाधारणत्वानुपसंहारित्वानां पृथग्दोषत्वोक्तेः । तथाऽसिद्धयुक्तिप्रस्तावे[5] आश्रयासिद्धिः स्वरूपासिद्धिः व्याप्यत्वासिद्धिः प्रत्येकमेव दोषः । प्रत्येकज्ञानादुद्भावनाच्चानुमितिप्रतिबन्धादिति चोक्तत्वेनाश्रयासिद्ध्यादेः पृथग्दोषत्वेन चेत्यर्थः । **प्रथमेति** । हेत्वाभाससामान्यलक्षणानन्तरप्राप्तविभाग एवेत्यर्थः ॥

नन्वेतदेवाशङ्क्य मणौ स्वरूपसतानुगतरूपेण त्रयमेकीकृत्य महर्षिणा विभागकरणादित्युक्तमित्यतस्तदाशङ्क्याह — **नन्विति** ।

[1] कत्वम्-ट. धर्नं-ट. रा. [2] ज्ञानस्य-ट. रा. [3] वनाच-क. व्यत्वाच-ग. रा. व्याच-ट. [4] प्रथमविभाग एवेत्यारभ्य एतावान् ग्रन्थः नास्ति-ग. रा. [5] वे चा-ठ.

हानिरिति चेन्न । तथात्वे साक्षात्प्रतिबन्धकत्वेन बाधप्रतिरोधयोर्व्याप्तिरहितलिङ्गत्वेन सव्यभिचार[1]विरुद्धयोरप्येकीकरणं स्यादित्याद्यतिप्रसङ्गः स्यात् ॥

स्वतन्त्रपुरुषेच्छा नियन्तुमशक्येति चेन्न । असाधकतासाधनादिव्यवहारानुपयोगित्वेन निष्फले विभागे निर्मर्यादं प्रवृत्तस्य प्रमाणपरतन्त्रत्वेन नियन्तुं शक्यत्वादिति ॥

गौतमोक्तहेत्वाभासपञ्चत्वभङ्गः । २९ ॥

---

## साधारणस्याव्याप्तावन्तर्भावः ॥ ३० ॥

---

नापि मण्युक्तप्रकारेण[2] साधारणत्वादिनाऽसाध-

---

इत्याद्यतिप्रसङ्गादिति । आदिपदेनासिद्धत्वेनाव्याप्तित्वेत्यादिग्रहः । ननु मणावेवमेवाशङ्क्य स्वतन्त्रेच्छाया नियोगपर्यनुयोगाविषयत्वादिति समाहितमिति भावेन तदाशङ्क्य निराह—स्वतन्त्रेति ॥

गौतमोक्तहेत्वाभासपञ्चत्वभङ्गः ॥ ३० ॥

---

## साधारणस्याव्याप्तावन्तर्भावः ॥ ३१ ॥

---

उभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वं च साधारणत्वादि तेन रूपेण ज्ञातस्य प्रतिबन्धकत्वादि[3] त्यादिमण्याद्युक्तेराह—साधारणेत्यादिनेति । असाधारणत्वानुपसंहारित्वयोरादिपदेन ग्रहः ।

---

[1] रेप्यकीकर–ग. रा. [2] ण असा ग. ट. [3] ति समाहितमिति भावेन वादित्या–ट.

कतालिङ्गत्वम्। तथाहि—साधारणत्वं पक्षत्रय-वृत्तित्वं चेद्विपक्षवृत्तित्वेनैव पूर्णत्वेन[1] शेषवैयर्थ्यम् स्यात्[2]। प्रत्युत पक्षसपक्षवृत्तित्वं गुणः। न तु दोषः। विरुद्धव्यावृत्त्यर्थत्वान्न वैयर्थ्यमिति चेन्न। दूषकताबीजैक्ये तस्यापि संग्राह्यत्वेनाव्यावर्तनीयत्वात्। विपक्षवृत्तित्वं चेदव्याप्तावन्तर्भावः। विपक्षवृत्तित्वस्य साध्याभावसम्बन्धरूपत्वात्। तस्यैव चाव्याप्तित्वात्॥

एतेनाव्याप्तेः प्रत्युपजीव्यत्वाद्व्यभिचार एव दोष इति अव्याप्तत्वज्ञानदशायां व्यभिचारज्ञानेनाप्यनुमितिप्रतिबन्धदर्शनाद्व्यभिचारोऽपि दोष इति[3] च निरस्तम्। तयोरभेदात्।

एतेनैव विरुद्धस्यापि तत्त्वा[4]ज्ञाने विपक्षवृत्तित्वज्ञानदशायां साधारणत्वं उपधेयसङ्करेऽप्युपाधेरसङ्कर इति च निरस्तम्। विरुद्धोपि विपक्ष-

सुधाकं हृदि कृत्वाऽऽह—साधारणत्वमित्यादिना। दूषकताबीजेति। विपक्षवृत्तित्वरूपदूषकताबीजस्य साधारणविरुद्धयोरेकत्व इत्यर्थः॥

ननु. मणौ विपक्षवृत्तित्वेनैव दूषकताबीजमुक्तमित्यतस्तदनूद्य निराह—विपक्षवृत्तित्वं चेदिति। व्यभिचारोपि दोष इति। पृथग्दोष इत्यर्थः। तयोरभेदादिति। विपक्षवृत्तित्वमात्रस्यैव साधारणत्वे तस्यैवा[5]व्याप्तित्वादिति भावः। उपधेयेति। परस्पर-

[1] नैव शे-ग. रा. [2] स्यादिति न-ग. ट. रा. [3] च इति नास्ति क. ट. [4] तत्र-रा. [5] वव्या-ट.

वृत्तित्वमेवोपाधिरिति वक्ष्यमाणत्वेनोपाध्यसङ्कर-स्याप्यभावात् ॥

किंच व्याप्यत्वान्तर्भावाच्छादनाय विपक्षवृत्तित्वं साधारणत्वमित्युक्तौ विपक्षत्वं साध्यात्यन्ता-भाववत्त्वं साध्यसंबन्धात्यन्ताभाववत्त्वं साध्यवद्भि-न्नत्वमित्यादिरूपेण नानेति तद्वृत्तित्वमपि नाना स्यात्। तथा च बाधप्रस्तावोक्तन्यायेन सर्वेषां प्रत्येकं हेत्वाभासत्वस्य वक्तव्यतया हेत्वाभासा-धिक्यं स्यात् ॥

या तु व्याप्तिज्ञानहेतुभूतसहचारज्ञानस्य सहकारी योऽभावः तत्प्रतियोगिभूतं यज्ज्ञानं तद्विषयत्वेनैकीकरणान्नाधिक्यमिति कश्चिदाह तन्न। त्वदुक्तातिवक्रविषयत्वस्याज्ञानेऽपि व्याप्त्यभावज्ञा-

व्यावर्तकतत्तत्कोडीकारकोपाधिमतो विशेष्यस्य साङ्कर्येऽपि विपक्षवृत्तित्वं साधारणत्वं विपक्षमात्रवृत्तित्वं विरुद्धत्वमित्युपाध्योरसङ्कर इति च निरस्तमित्यर्थः। वक्ष्यमाणत्वेति। विरुद्धत्वस्याव्याप्त्यन्तर्भावोक्ति-प्रस्ताव इत्यर्थः। इत्यादिरूपेणेति। आदिपदेन साध्यतत्प्रति-योगिकान्योन्याभा[1]ववत्त्वसाध्याधिकरणनिष्ठान्योन्याभावप्रतियोगित्वादि-ग्रहः। सहकारी योऽभाव इति। प्रागुक्तत्रिविधविपक्षवृत्तित्वानां ज्ञानस्याभावः तत्प्रतियोगिभूतं ज्ञानं प्रागुक्तानामेव ज्ञानं तद्विषयत्वेने-त्यर्थः। उक्तरूपविपक्षवृत्तित्वज्ञानानां व्यभिचारज्ञानत्वेन तदभावसह-कृतसहचारज्ञानस्यैव व्याप्तिग्रहहेतुत्वादिति भावः। एतत्सङ्ग्राहकमात्र-

[1] ववत्त्व सा—ट.

नैनैवानुमितिप्रतिबन्धात्। स्वरूपसतैवोक्तविषय-त्वेनैकीकरणे तु न तद्धेत्वाभासविभागे तन्त्रमित्युक्तत्वेन हेत्वाभासाधिक्यतादवस्थ्यम् ॥

किंच व्याप्तिज्ञानहेतुभूतसहचारज्ञानस्य[1] व्यभिचारज्ञानाभाव इव सहचाराभावज्ञानाभावो व्याप्त्यभावज्ञानाभावश्च सहकारीति तत्प्रतियोगिभूतज्ञानविषयत्वं विरुद्धोपाधेरसहचारस्य व्याप्यत्वासिद्ध्युपाधेरव्याप्तेश्चास्तीति तयोरपि साधारणोपाधित्वं स्यात ॥

न च सहकार्यभावशब्देन व्यभिचारज्ञानाभावरूप एव सहकारिभूताभावो विवक्षित इति नोपा-

मुक्तम्। न तु प्रतिबन्धकज्ञानविषयत्वेनेत्येतदनूद्य निराह—स्वरूपसतेति। उक्तत्वेनेति। "यद्रूपेण हि ज्ञानमनुमितिप्रतिबन्धकमि" त्यादिना ग्रन्थेन व्यवहितभङ्ग उक्तत्वेनेत्यर्थः। आधिक्येति[2]। विपक्षवृत्तित्वानां प्रागुक्तदिशा नानात्वेन पञ्चापेक्षयाऽधिक्यमित्यपरिहार्यमित्यर्थः ॥

यदपि नानाभूतविपक्षवृत्तित्वानां व्याप्तिज्ञानहेतुसहचारज्ञानसहकारिभूताभावप्रतियोगिज्ञानविषयत्वेनैकीकरणं तदतिव्याप्तं चेत्याह—किंच व्याप्तिज्ञानेति। सहचारज्ञानसहकारीभूताऽ[3]भावे सङ्कोचविवक्षयाऽतिव्याप्त्यभावशङ्कां निराह — न च सहकारीति।

[1] स्य.व्य–क. ग.  [2] क्यमात–ट.  [3] ते अ–ट. ठ.

धिसाङ्कर्यमिति वाच्यम् । आत्माश्रयादननुगमाच्च ॥

किं च समवायवृत्त्या यत्र वह्न्यभावः तद्वृत्तित्वं धूमेप्यस्तीति व्याप्तिग्रहानुप्रविष्टसंबन्धेन यत्र साध्यं नास्ति स विपक्ष इति वक्तव्यतयाऽऽवश्यकत्वेनाव्याप्तिरेव दोषः ॥

साधारणस्याव्याप्तावन्तर्भावः ॥ ३० ॥

---

आत्माश्रयादिति। साधारणव्यभिचार[1]त्वं नानेत्युक्ते साधारणव्यभिचार[2]त्वं नाम व्याप्तिग्रहहेतुसहचारज्ञानसहकारिभूतो यो व्यभिचारज्ञानाभावः तत्प्रतियोगिज्ञानविषयत्वं व्यभिचारत्वं सर्वेष्वनुगतमेकमित्युक्ते व्यभिचारनिरुक्तेर्व्यभिचारघटितत्वादात्माश्रय इत्यर्थः । अननुगमाच्चेति । व्यभिचारनिरुक्तिशरीरप्रविष्टव्यभिचाराणां विपक्षत्वं साध्यात्यन्ताभाववत्त्वमित्यादिना प्रागुक्तदिशा नानात्वादिति भावः । उपजीव्यत्वादव्याप्तित्वेनैव दोषोस्त्वित्याह—किंचेति । आवश्यकत्वादिति । व्याप्तिशरीरप्रविष्टसंबन्धाभावस्याज्ञाने विपक्षत्वादेरज्ञानेन तज्ज्ञानेऽवश्यंभाविनि तदभावरूपाव्याप्तिरेव दोषोऽस्तु किं तादृशसंबन्धेन साध्याभाववद्वृत्तिनेत्यर्थः ॥

साधारणस्याव्याप्तावन्तर्भावः ॥ ३१ ॥

---

[1] रित्वं–ठ. [2] रित्वं–ठ. रित्वमिति स्थितं रत्वमिति शोधितम्–ड.

# अथासाधारणस्याऽव्याप्तावन्तर्भावः ॥ ३१ ॥

असाधारणत्वमपि सर्वसपक्षविपक्षव्यावृत्तत्वं चेत् विशेष्यवैयर्थ्यम् । प्रत्युत सर्वविपक्षव्यावृत्तत्वं गुण एव । न तु दोषः । न च विरुद्धव्यावृत्त्यर्थं तत् । दूषकताबीजैक्येन तस्यापि सङ्ग्राह्यत्वात् ॥

यच्चोक्तमसाधारणे—उभयव्यावृत्तत्वमेव दूषकताबीजं तच्च विरुद्धे[1] नास्तीति न दूषकताबीजैक्यम् । असाधारणस्य लक्षणं तु सर्वसपक्षव्यावृत्तत्वं तदेवोद्भाव्यमसाधकतासाधकं च । दूष्यानुमानसाध्याभावोपपादकत्वात् । न तु विपक्ष व्यावृत्तत्वमपीति । तन्न । अदूषकताबीजेनासाधक-

## अथासाधारणस्याऽव्याप्तावन्तर्भावः ॥ ३२ ॥

साध्यवतस्तदभाववतश्चेत्यादिमण्युक्तं निष्कृष्यानुवदति—यच्चेति । [2] सपक्षविपक्षव्यावृत्तत्वमित्यर्थः । [3] सपक्षव्यावृत्तत्वस्य दूषकत्वे नित्यः शब्दः कृतकत्वात् इत्यादिविरुद्धस्यापि तथात्वाद्विपक्षव्यावृत्तत्वमुक्तम् । विरुद्धस्य विपक्षवृत्तित्वात् । विरुद्ध इत्युपलक्षणम् । सद्धेतौ च नास्तीत्यपि ध्येयम् । अदूषकताबीजेनेति । दूषकताबीजादन्यत्वेनेत्यर्थः । सर्वसपक्ष[4]व्यावृत्तत्वमस्तु मास्त्वसाधकत्वमित्युक्ते बाधकाभावादिति

[1] द्धत्वना- क. र. [2] उभयव्य वृत्तत्वमिति । सपक्षविपक्षव्यावृत्तत्वस्य दूषकत्व इत्यादिरीत्यास्ति–ठ. [3] सपक्षेत्यादि नास्ति–ट. [4] क्षाद्वया–ठ.

तासाधने अप्रयोजकत्वापातात् । न ह्यन्यस्य भुक्त्याऽन्यस्य तृप्तिः ॥

तर्हि सर्वसपक्षव्यावृत्तत्वमेव दूषकताबीजम् । लक्षणं उद्भाव्यमसाधकतासाधकं च । विरुद्धोपि विरुद्धत्वाज्ञाने सर्वसपक्षव्यावृत्तत्वज्ञानदशायामसाधारण एव । न चास्याव्याप्तावन्तर्भावः । पक्षादन्यत्रसाध्याभावस्य सत्त्वेपि तत्र हेतोरभावात् । पक्षे हेतुसत्त्वेऽपि साध्याभावानिश्चयादिति चेन्न । तथाऽप्यसाधारणस्यानुकूलतर्कानवतारदशायां तर्काभावादेव सन्दिग्धव्याप्तिकत्वेनाव्याप्तावन्तर्भावात् । तर्कावतारदशायां तु असाधारण्यादुत्तीर्णत्वेन हेत्वाभासत्वस्यैवाभावात् । असाधारणो ह्यनित्यदोषः इदमेवह्यभिप्रेत्य सुधायामसाधारणस्य दूषणत्वासम्मतेरित्युक्तम् ॥

---

भावः । अन्यस्य दूषकताबीजत्वे तदन्यस्य नासाधकतासाधकत्वमित्येतदर्थान्तरन्यासेन व्यनक्ति—न हीति । सर्वसपक्षव्यावृत्तत्वमात्रमुद्भाव्यमित्यादिमण्युक्तानुरोधेनाह—तर्हीत्यादि । इदमेवेति । तर्कावतारकालीनादोषत्वमेवेत्यर्थः । "साध्यव्यापकवैलोम्यनव्याप्ति"रित्येतद्व्याख्यानावसरे उक्तमित्यर्थः ॥

"सत्यपि सपक्षे तत्रावर्तमानस्य किं व्याप्तिरेव नास्त्युत केवलव्यतिरेकिवदस्तीति सन्देहावस्कन्दना"दिति पद्धत्युक्तं[1] हृदि कृत्वाऽऽ-

---

[1] किं–ट. ङ.

यद्वाऽसाधारणः सर्वसाध्यवद्व्यावृत्त्या साध्याभावव्याप्तो वा सर्वसाध्याभाववद्व्यावृत्त्या साध्यव्याप्तोवेति सन्देहेनाव्याप्यवन्त[1]र्भावः ॥

अथ वाऽसाधारणस्य पक्षमात्रवृत्तित्वेन नान्वयव्याप्तिधीः । नापि व्यतिरेकव्याप्तिधीः । यत्र[2] नित्यत्वाभावः तत्र शब्दत्वाभाव इति व्यतिरेकव्याप्तेर्यत्रानित्यत्वाभावः तत्र शब्दत्वाभाव इति प्रतिकूलया व्यतिरेकव्याप्त्या प्रतिरुद्धत्वात् । तस्मात् व्याप्तिप्रमित्यसिद्धा[3]वव्याप्यावन्तर्भावः । अत एव प्रमाणलक्षणटीकायां पक्ष एव वर्तमानत्वेन व्याप्तेरग्रहणादित्युक्तम् ॥

यद्वाऽसाधारणः पक्षे साध्यसन्देहात्सन्दिग्धा-

---

ह — यद्वाऽऽसाधारण इति । व्यतिरेकव्याप्तिसंभवोऽयं न हेत्वाभास इति पद्धत्युक्तं कस्यचिन्मतमपाकुर्वाणः लक्षणटीकारीत्याऽन्तर्भावमाह — अथवेति ॥

ननु न व्यतिरेकव्याप्तिधीरित्ययुक्तम् । व्याप्तिसम्भवेन तद्धीसंभवादित्यतो व्याप्तेः संभवेऽपि प्रतिरोधान्न तद्धीरित्याह — यत्रेति । व्याप्तेरग्रहणादित्यस्य पक्ष एव व्याप्तेरनिश्चयात् किं तु सन्देहादित्यप्यर्थमुपेत्याह — यद्वेति । निश्चितसाध्याभाववति हेतुसन्देह इव

[1] भूतः —क. ग. रा.　[2] त्रानि—ग. ट. रा.　[3] अव्याप्तिपदं न—ग. ट. रा

व्याप्तः। दृष्टं च पक्ष एव व्यभिचारसन्देहस्य दोषत्वम् स श्यामो मित्रातनयत्वादित्यादौ। तनयान्तरे श्यामत्वानिश्चयात् ॥

ननु तत्र संशयः उपाध्याहितः। स एव च संशयोनुमितिप्रतिबन्धकः। फलबलेनैव तथा कल्पनात्। न त्वन्यः। तस्यानुमानाङ्गत्वात्। सदनुमाने तु संशयो नोपाध्याहित इति[1]। अन्यथानुमानमात्रोच्छेदा[2]दिति चेत्। इहापि संशयः सर्वसपक्षविपक्षव्यावृत्त्याहितः। स एव च संशयः प्रतिबन्धकः। फलबलात्। सदनुमाने तु संशयो न तदाहित इति नातिप्रसङ्गः ॥

---

सन्दिग्धसाध्या[3]भाववति हेतुनिश्चयेऽपि व्यभिचारसन्देहेन सन्दिग्धव्याप्त्यभावरूपत्वात्सन्दिग्धाव्याप्त इत्यर्थः। "सन्दिग्धे न्यायः प्रवर्तते" इत्यनुमानमात्रे साध्यसन्देहस्यावर्जनीयत[4]या पक्षीयव्यभिचारसन्देहस्य[5] दोषत्वे[6]नुमानमात्रोच्छेदात्कथं सन्धिग्धाव्याप्तत्वमित्यतः स्वारसिकस्यादोषत्वेप्याहितस्य दोषत्वमेव प्रकृते चाहित[7] सन्देह इति भावेनाह—**दृष्टं हीति। उपाधीति।** शाकपाकजत्वोपाधीत्यर्थः। पक्षीयसन्दिग्धव्यभिचारस्य[8]साधारणे दोषत्वेऽपि न सद्धेतुमात्रोच्छेदः वैषम्या-

[1] ति नानुमान–**क. ग. रा.** [2] न्छेद इति चे–**ट. रा.** [3] व्यवति–**ठ.** [4] यत्वात्–**ठ.** [5] हस्या–**ठ.** [6] त्वेनानु–**ठ. ड.** [7] एवेत्यधिकम्–**ट. ठ. ड.** [8] स्यासाधारणदो–**ट. ठ. ड.**

किंचेह साध्याभावसंशयो हेत्वधिकरणत्वेन ज्ञायमाने सर्वस्मिन्नप्यस्ति । अत्र हेतोः सर्वसपक्षव्यावृत्ततया सन्दिग्धसाध्यवन्मात्रवृत्तित्वात् । स एव संशयः प्रतिबन्धकः । फलबलात् । सदनुमाने तु हेतुः सन्दिग्धसाध्यवत्पक्षवृत्तिरपि सन्दिग्धसाध्यवन्मात्रवृत्तिर्न । निश्चितसाध्ये सपक्षेपि वृत्तेः ॥

ननु सन्दिग्धसाध्यवन्मात्रवृत्तित्वं सदनुमाने केवलव्यतिरेकिण्यप्यस्तीति तस्याप्यव्याप्त्यन्तर्भावः स्यादिति चेन्न । अनुकूलतर्कानवतारदशायामिष्टत्वात् । मदभिप्रेतस्यान्वयव्याप्त्यभावान्तर्भावस्याहानेश्च । असाधारणे व्यतिरेकव्याप्तिस्तु प्रतिकूलव्यतिरेकव्याप्त्या प्रतिरुद्धेत्युक्तम् ॥

एतेन सर्वसपक्षव्यावृत्तत्वरूपमसाधारणत्वं विपक्षवृत्तित्वरूपाव्याप्तेरुपजीव्यमित्यसाधारणत्व-

---

दिति भावेनाह—**किंचेति** । इह असाधारणे । अस्मिन् पक्षे बाधकमाशङ्क्य निराह—**ननु सन्दिग्धेति** ॥

नन्वेवं व्यतिरेकिवदेवान्वयव्याप्त्यभावेऽप्यसाधारणो हेतुः [1]सद्धेतुः स्यात् । व्यतिरेक्यनुमान इव व्यतिरेकव्याप्तिसंभवादित्यतस्तद्वैषम्यमाह—**असाधारण इति** । प्रकारद्वयेन पृथग्दोषत्वमनूद्य निराह—**एतेनेति** । सर्वसपक्षव्यावृत्तत्वमव्याप्तेरुपजीव्यमित्यप्ययुक्त-

---

[1] सद्धेतुपदं न-ट. ठ.

मेव दोष इत्यव्याप्त्यज्ञानदशायामसाधारणत्वमपि दोष इति च निरस्तम्। उपजीव्यत्वेऽपि व्याप्त्याद्यभावरूपत्वाभावेन स्वतो दूषकत्वाभावात्। व्याप्त्यभावव्याप्यतया दूषकत्वे चाव्याप्त्युन्नायकत्वे नोपाधिवत्स्वतो हेत्वाभासत्वायोगात्। अनुकूलतर्केऽवतीर्णे उत्तीर्णासाधारणत्वे हेतावव्याप्त्यज्ञानदशायां सर्वसपक्षव्यावृत्तत्वज्ञानेऽप्यनुमित्यप्रतिबन्धाच्च। तस्मादसाधारणोऽव्याप्तावन्तर्भूत एव। एतदेवाभिप्रेत्य पद्धतौ असाधारणप्रस्तावे "सर्वथाऽव्याप्तावन्तर्भूत" इत्युक्तम्॥

केचित्तु असाधारणः सर्वसपक्षव्यावृत्तत्वात्साध्याभावस्य, सर्वविपक्षव्यावृत्तत्वात्साध्यस्य च साधक इति सत्प्रतिपक्षाऽन्तर्भूतः। न हि विरोधे स्वभिन्नत्वं तन्त्रम्। गौरवादित्याहुः॥

असाधारणस्याव्याप्तावन्तर्भावः॥ ३१॥

---

मित्याह—**अनुकूलतर्क इति**। **अव्याप्त्यज्ञानदशायामिति**। तथा चान्वयव्यतिरेकाभ्यामव्याप्तिरेव दोष इति भावः। **केचिदिति**। तार्किकैकदेशिन इत्यर्थः। तदा तु प्रतिज्ञाविरोधेऽन्तर्भावः स्पष्ट इति भावः॥

असाधारणस्याव्याप्तावन्तर्भावः॥ ३१॥

# अनुपसंहारिणोऽव्याप्तावन्तर्भावः ॥ ३२ ॥

**अनुपसंहारित्वमपि न तावद्व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावः। व्याप्त्यभाव[1]वत्त्वादित्येतावते[2]व पूर्णत्वेन शेषवैयर्थ्यात्। साधारणादिव्यावृत्त्यर्थमिति तु निरस्तम् ॥**

## अनुपसंहारिणोऽव्याप्तावन्तर्भावः ॥ ३३ ॥

मणौ हि व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावः यत्र स हेत्वभिमतो[3]ऽनुपसंहारी. केवलान्वयिधर्मावच्छिन्नपक्षको वेति लक्षणद्वयमुक्तम्। तत्राद्यं तावदपाकरोति—**न तावदिति**। व्याप्तिग्रहस्यानुकूलो य एकस्मिन् धर्मिण्युपसंहारः सहचारग्रहः तदभाव इत्यर्थः। पक्षे सन्देहरूपसहचारग्रहसत्त्वेन तदभावोऽसंभवीत्यतो व्याप्तिग्रहानुकूलेत्युक्तम्। तादृशस्तु सहचारनिश्चय इति भावः। [4]**व्याप्त्यभावादिति**। व्याप्त्यभावो यत्र सोऽनुपसंहारीत्येतावता पूर्णत्वे व्याप्तिग्रहानुकूलैकधर्मिसहचारग्रहाभाव इत्येतावन्न वाच्यमित्यर्थः। साधारणासाधारणविरुद्धबाधादावपि व्याप्त्यभावोऽस्तीत्यतिव्याप्तिनिरासायैवं विन्यास इत्यत आह — **साधारणेति**। दूषकताबीजैक्ये[5] तद्व्यावृत्तेरवायोगादित्युक्तत्वान्निरस्तमित्यर्थः ॥

[1] भावादित्येता—**क.** भाव इत्ये—**ग. ट. रा.** [2] ता पूर्णत्वे शेष—**ग. ट. रा.** [3] तानुप—**ट.** [4] इदं प्रतीकग्रहणं नास्ति—**ठ.** [5] क्येति व्यावृ—**ठ.**

**किञ्चोपसंहारशब्देन सहचारज्ञानविवक्षायां सहचारज्ञानस्य स्वरूपसत एवानुमितिप्रतिबन्धकतया त्वन्मते हेत्वाभासत्वमेव न। मन्मते तु व्याप्तिप्रमित्यसिद्धावन्तर्भावः ॥**

**उक्तं हि सुधायाम्। असिद्धिश्च द्विविधा। स्वरूपतोऽज्ञानतश्चेति। सहचारविवक्षायां तु विरुद्धोपाधिसाङ्कर्यम्। त्वन्मते विरुद्धेऽप्यसहचारस्यैवोपाधित्वात् ॥**

---

ननु व्याप्त्यभावस्य दूषकताबीजत्वे स्यादेवं न चैवं किंतूक्तरूपोपाधिरेवेत्यतः एवमपि विरुद्धसाङ्कर्यमेवेति वक्तुमाह— **किञ्चेति**। उपसंहारशब्देन सहचारज्ञानग्रहे तदभावस्य सहचारज्ञानाभावरूपत्वात् सहचारज्ञानस्येत्युक्तम्। पक्षधराद्युक्तमेवाह—**हेत्वाभासत्वमेव नेति**। अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वं वा ज्ञायमानं सत् यदनुमितिप्रतिबन्धकं तत्त्वं वा हेत्वाभासत्वमित्युक्तेरिति भावः। **विरुद्धेति**। यत्त्वज्ञायमानदशायां सद्धेतावतिव्याप्तिनिरासाय साध्यसहचारनिश्चयविरोधिहेत्वाभासतोपाधित्वं विवक्षितं चेदपि विरुद्धेतिव्याप्तमित्यतः स्वसाध्यसिद्ध्यनुकूलव्याप्तिग्रहानुकूलसहचारत्वावच्छिन्ननिश्चयविरोधिहेत्वाभासतोपाधित्वस्य विवक्षितत्वात्। विरुद्धस्य व्यतिरेकसहचारनिश्चयाविरोधित्वान्न तत्रातिव्याप्तिरिति तन्न। एतदज्ञानेऽपि व्याप्त्यभावज्ञानमात्रेणानुमितिप्रतिबन्धात्। दूषकताबीजैक्ये वैरुद्ध्यव्यावृत्तेरेवायोगादिति ॥

**किं च यो निश्चितः यत्र साध्यं तत्र हेतुरिति सहचारस्याभावः स तु न साक्षाद्दोषः। यत्र हेतुस्तत्र साध्यमिति व्याप्त्यभावरूपत्वाभावात्। व्याप्त्यभावव्याप्यतया दोषत्वे चोपाधिवदव्याप्त्युन्नायक एव स्यादित्युक्तम्। यश्च दोषः यत्र हेतुस्तत्र साध्यमिति सहचारस्याभावः स तु हेतुमति साध्याभावात्मकत्वादव्याप्तिरेव। न हि साध्या-**

यद्वा अस्त्वेवं क्लेशेन विरुद्धासाङ्कर्यं तथाऽपि न पृथग्दोषत्वमित्याह—**किंचेति**। व्याप्तिग्रहानुकूलसहचाराभावोऽनुपसंहारित्वमित्यत्र यत्र साध्यं तत्र हेतुरित्येवंरूपसहचारस्याभावो अभिमतः उत यत्र हेतुस्तत्र साध्यमित्येवंरूपसहचारस्याभावः। आद्य आह—**य इति**। यो निश्चितोभाव इत्यन्वयः। कस्येत्यतो यत्रेत्यादि। यद्यपि व्याप्तिग्रहानुकूलेत्युक्तत्वादस्य चातादृशत्वान्नास्य कल्पस्यावतारः। तथापि संभवमात्रेण वा कृतकत्वानित्यत्वयोरेवमपि सहचारो व्याप्तिग्रहानुकूल एवेति वदन्तं प्रति वाऽस्यावतार इत्यदोषः। **इति** [1]**व्याप्त्यभावरूपत्वाभावादिति**। तथा च परामर्शविषयाभावत्वाभावाद्दोषत्वमेव न स्यादिति भावः। **उक्तमिति**। पूर्वभङ्गान्त इत्यर्थः। यश्च दोष इति अभाव इत्यस्य विशेषणम्। **अव्याप्तिरेवेति**। अविनाभावो हि व्याप्तिः। साध्येन विनैव सत्त्वे कथं नाव्याप्तिः। भवत्येवाव्याप्तिरित्यर्थः। ननु साध्याभावसामानाधिकरण्यस्य व्यभिचारतया सैवाव्याप्तिः साध्याभावस्य हेतुसामानाधिकरण्यस्य कथं व्यभिचारता। येनाव्याप्तिः स्यादित्यत आह—**न हीति**॥

[1] इत्यव्याप्तिरू—**ठ.**

**भाववति हेतुसत्त्वमेव व्यभिचारः। न तु हेतुमति साध्याभाव इति युक्तम्। द्वयोरपि हेतुसाध्याभावसामानाधिकरण्यरूपव्यभिचारात्मकत्वाविशेषात्॥**

**नापि केवलान्वयिधर्मावच्छिन्नपक्षताकत्वमनुपसंहारित्वम् अनित्यो घटः घटाकाशोभयवृत्तिद्वित्वाश्रयत्वादित्यादि तु विरुद्धमेवेति वाच्यम्। उत्तीर्णानुपसंहारित्वावस्थे सर्वमभिधेयं प्रमेयत्वादिति सदनुमाने[1] तत्प्रतिसन्धानेऽप्यनुमित्यप्रतिबन्धात्। द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः अनित्याः वस्तुत्वादित्याद्यसदनुमाने तदप्रतिसन्धानेऽप्यनुमितिप्रतिबन्धाच्च॥**

मण्युक्तं द्वितीयलक्षणमपि निराह— **नापीति**। अनुपसंहारविशेष लक्षणमिदमव्याप्तमित्यतो मण्युक्तदिशा लक्ष्यबहिर्भावेन निराह— **अनित्यो घट इति**। अन्वयव्यतिरेकव्यभिचारेणैतज्ज्ञानस्यानुमित्यप्रतिबन्धकतया ज्ञायमानत्वे सत्यनुमितिप्रतिबन्धकत्व[2]रूपोक्तहेत्वाभासतोपाधित्वाभावाद्धेत्वाभासत्वमेव नेति भावेन व्यभिचारा[3]वाह— **उत्तीर्णेति**। बहुव्रीहिः। विपक्षव्याघातादितर्कबलेनेति भावः। **तदप्रतिसन्धानेऽपीति**। अत्र पक्षतावच्छेदकस्याकेवलान्वयित्वेन केवलान्वयिधर्मावच्छिन्नपक्षताकत्वप्रतिसन्धानस्यात्रानुदयादिति भावः। यथाश्रुतमूलस्य तद्व्याख्यातॄविवक्षितं लक्षणमुक्तदोषपरिहाराय शङ्कते—

[1] नेसत्प्र–**रा.** [2] त्वादुक्तहे–**ट. ड.** त्वायुक्तहे–**ठ.** [3] रं चा–**ठ.**

**ननु सन्दिग्धसाध्यवन्मात्रवृत्तित्वं अनुपसंहारित्वम् । अस्यां दशायामसाधारणोऽप्यनुपसंहारि चेत् । तथाऽप्यसाधारणप्रस्तावोक्तरीत्या तर्कानवतारदशायां तर्काभावादेव सन्दिग्धाव्याप्तिः । तदवतारदशायां तु न दोषः ॥**

**नन्विति ।** उत्तीर्णावस्थेऽनुमाने सन्देहाभावेन सन्दिग्धसाध्यवृत्तित्वं नास्तीति तत्र तदनुसन्धानस्यैवायोगेन नान्वयव्यभिचारः । द्रव्यगुणेत्यादौ च सन्दिग्धसाध्यवन्मात्रे पक्षे हेतो[1]र्वृत्तिमत्त्वेन तत्र तदनुसन्धानसम्भवेन तेनैवानुमितिप्रतिबन्धान्न व्यतिरेकव्यभिचारोऽपीति भावः । नन्वेवमपि सर्वमभिधेयं मेयत्वादित्यादावनुत्तीर्णानुपसंहारित्वदशायामव्याप्तिः । तत्र साध्याभावाप्रसिद्ध्या साध्यसन्देहाभावादिति चेन्न । इदमभिधेयं न वेत्येवं सन्देहाभावेप्यभिधेयत्वमत्रास्ति न वेत्येवं सन्देहस्य तत्रापि संभवादिति भावः । नन्विदं पक्षमात्रवृत्त्य[2]साधारणेऽतिव्याप्तमित्यत आह— **अस्यामिति ।** सन्दिग्धसाध्यवन्मात्रवृत्तित्वमनुपसंहारित्वमिति दशायां सन्दिग्धसाध्यवन्मात्रवृत्तित्वानुसन्धानदशायामित्यर्थः । **न दोष इति ।** हेत्वाभासत्वमेव नेत्यर्थः । क्वचिदत्रादौ तु[3] सन्दिग्धसाध्यवन्मात्रवृत्तित्वज्ञाने सत्यपि शब्दाद्व्याप्तिग्रहसंभवे तस्य न व्याप्तिधीप्रतिबन्धद्वाराऽनुमितिप्रतिबन्धकत्वम् । साध्यसामानाधिकरण्य[4]सन्देहस्य योग्यतासंशयपर्यवसन्नतया तत्राप्रतिबन्धकत्वेन तत्सामग्र्याः सुतरामप्रतिबन्धकत्वादिति दूषणमुक्तम् । पूर्वं सन्दिग्धाव्या

[1] तुमत्त्वेन न तत्र—ट. ड. [2] त्तिसाधारणे—ट. ड. [3] तु इति न—ट. ठ.
[4] संशयज्ञानस्य—ट. सन्देहयोग्यता—ड.

यद्वाऽनुपसंहारिणि सर्वस्यापि पक्षत्वेनान्वयव्याप्तेर्व्यतिरेकव्याप्तेर्वा ग्रहणासंभवाद्व्याप्तिप्रमित्यसिद्धावन्तर्भावः । यद्वाऽसाधारणे उक्तरीत्या मित्रातनयत्वादिरिव पक्ष एव साध्यसन्देहात्सान्दिग्धाव्याप्तः ॥

एतदेवाभिप्रेत्योक्तं पद्धतौ । सर्वं क्षणिकं सत्त्वादित्ययमप्युभयसंबन्धाभावादव्याप्तावन्तर्भूत इति ॥

केचित्तु सर्वं क्षणिकं सत्त्वादित्यत्र पक्ष एव साध्याभावेनैव संबन्धावगमात् । सर्वमनित्यं सत्त्वादित्यादौ तु पक्ष एव साध्याभावेनापि

---

प्तित्वमुक्तं इदानीं व्याप्तिप्रमित्यसिद्धावन्तर्भावमाह—यद्वेति । पूर्वं तर्कानवतारे[1]हेतोरप्रयोजकत्वाहितसाध्यसामानाधिकरण्यमादायाव्याप्तावन्तर्भाव उक्तः अधुनाऽन्यत्र साध्येन तदभावेन वा सहचारादर्शनाहितसाध्यसामानाधिकरण्यसंशयमादाय सन्दिग्धाव्याप्तत्वमाह—यद्वाऽसाधारण इति । अनुमानमात्रोच्छेदप्रसङ्गनिरासायो[2]क्तरीत्येति मित्रातनयत्वादेरिवेति चोक्तम् । शाकपाकजत्वादिरूपोपाधिसन्देहाहितसाध्यसन्देहवद्वृत्तित्वेन मित्रातनयत्वादेर्यथा सन्दिग्धा[3]व्याप्तत्वं तथा साध्यतदभावाभ्यां सहचारादर्शनाहितसाध्यसन्देहप्रयुक्तसन्दिग्धाव्याप्तत्वमित्यर्थः । प्रकारान्तरेणाव्याप्त्यन्तर्भावं परमुखेनाह—केचिदिति । पक्ष एवेति । प्रत्यभिज्ञया घटादेः सर्वस्य स्थायित्वनिश्चयादिति भावः । साध्याभावेनापीति । क्वचिन्नित्यत्वस्यापि निश्चयादिति भावः । अत्रारुचिबीजं

---

[1] रहेतो–ट. [2] प्रसङ्गनिरासायाह उक्त–ठ. [3] दिग्धव्या–क. ग. रा.

संबन्धावगमादव्याप्तः । सर्वमभिधेयं प्रमेयत्वा-
दिति तु सदनुमानमेवेत्याहुः ॥

एतेनाव्याप्तिं प्रत्युपजीव्यत्वादनुपसंहारित्वमेव दोष इत्यव्याप्त्यज्ञानदशायामनुपसंहारित्वमपि दोष इति च निरस्तम् । त्वदुक्तलक्षणत्रये आद्यस्य निष्कर्षे स्वयमेवाव्याप्तिरूपत्वात् । द्वितीयस्य स्वतो दोषत्वाभावात् । तृतीयस्य च स्वयमेव सन्दिग्धाव्याप्यत्वात् ॥

अनुपसंहारिणोऽव्याप्तावन्तर्भावः ॥ ३२ ॥

---

तु साध्यसन्देहवान्पक्ष इति मते सर्वस्य साध्यसन्देहवत्त्वेन तदभावानिश्चयात्साध्याभावेनैवेति पक्षस्य साध्याभावेनापीति पक्षस्य[1] चायोगात् पक्षे सन्दिग्धसाध्याभावसंबन्धेन चाव्याप्तत्वेऽपि प्रसङ्गादस्मदुक्तदिशा सन्दिग्धाव्याप्तत्वस्यैवापन्नत्वाच्चेति । मण्युक्तमेव पृथग्दोषत्वप्रकारमनूद्य निराह—**एतेनेति** । सर्वसपक्षव्यावृत्तत्वाद्यज्ञाने व्याप्तेरज्ञानात्तत्प्रतिसन्धान एव ज्ञायमानत्वात्तस्योपजीव्यत्वमिति भावः । तत्र हेतुमाह—**त्वदुक्तेति** । **आद्यस्येति** । व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभाव इत्यस्य । **अव्याप्तिरूपत्वादिति** । किंचेत्यादिना प्रागुपपादनात् तथा चाभेदे कथमुपजीव्योपजीवकभावः । द्वितीये केवलान्वयीत्यादिनोक्तलक्षणेऽन्वयव्यतिरेकाभ्यां तज्ज्ञानस्यानुमितिप्रतिबन्धकत्वव्यभिचारस्योक्तत्वात्तथा च स्वस्यैवादोषत्वे कथं दोषान्तरं प्रति स्वयमुपजीव्यं स्यादिति भावः । **तृतीयस्येति** । सन्दिग्धसाध्यवन्मात्रवृत्तित्वलक्षणस्य । तथा चाभेदान्नोपजीव्योपजीवकभाव इति भावः ॥

अनुपसंहारिणोऽव्याप्तावन्तर्भावः ॥ ३३ ॥

---

[1] स्यायो–ट ठ.

## अथ विरुद्धस्याप्यव्याप्तावन्तर्भावः ॥ ३३ ॥

विरुद्धत्वमपि विपक्षमात्रवृत्तित्वं चेत्, मात्रपदवैयर्थ्यम् । तत्त्यागे च साधारणसाङ्कर्येणाव्याप्तावन्तर्भावः । साधारणव्यावृत्त्यर्थं मात्रपदमिति तु निरस्तम् । साध्याभावव्याप्तत्वं चेत् साध्याभावसंबन्धेनैवालम् । किं व्याप्तिशरीरान्तर्गतेन नियमेन । नियमांशत्यागे च साधारणसाङ्कर्यम् ॥

---

## अथ विरुद्धस्याप्यव्याप्तावन्तर्भावः ॥ ३४ ॥

विरुद्धहेत्वाभासत्वरूपदोषस्याप्यव्याप्तावन्तर्भावं सुधाद्युक्तदिशा विवरितुकामः किं विपक्षमात्रवृत्तित्वं विरुद्धत्वं विपक्षवृत्तित्वमेव वा साध्याभावव्याप्तत्वं वा साध्याभावसंबन्धत्वमात्रं वा मण्युक्तरीत्या साध्यव्यापकाभावप्रतियोगित्वं वेति विकल्पान् हृदि कृत्वाऽऽद्यं निराह – **विरुद्धत्वमपीति** । **मात्रपदेति** । विपक्षवृत्तित्वमात्रस्यैव साधारण इव दूषकत्वसंभवे सपक्षावृत्तित्वे सतीत्यर्थकमात्रपदस्य व्यर्थत्वादित्यर्थः । द्वितीये दोषमाह—**तत्त्यागे चेति** । साधारणस्याव्याप्त्यन्तर्भावोक्तेः साधारणसाङ्कर्येण हेतुनाऽव्याप्तावन्तर्भाव इत्युक्तम् । **निरस्तमिति** । दूषकताबीजसाम्ये तद्व्यावृत्तेरेवायोगादित्युक्तत्वादिति भावः । तृतीयमनूद्य निराह—**साध्येति** । चतुर्थं निराह—**नियमांशेति** ।

**ननु—साध्यव्यापकाभावप्रतियोगित्वं विरुद्धत्वम्। एवं च न विशेषणवैयर्थ्यम्। नापि साधारणसाङ्कर्यमितिचेन्न। अस्य हि यत्र साध्यं तत्र साधनाभाव इति व्याप्तिर्विरुद्धत्वमित्यर्थः॥**

पञ्चममाशङ्कते—**नन्विति**। साध्यव्यापकीभूतो योऽभावः तत्प्रतियोगित्वमित्यर्थः। नित्यः शब्दः कृतकत्वादित्यत्र हेत्वभावः साध्यव्यापको भवति यत्र नित्यत्वं गगनादौ तत्र कृतकत्वाभाव इति व्याप्तेः। **न विशेषणवैयर्थ्यमिति**। यद्यप्यत्रापि नियमांशोऽधिकोऽनुप्रविष्टः। तथाऽपि साध्यसमानाधिकरणाभावप्रतियोगित्वस्य विषमव्याप्तिके सद्धेतौ धूमादावप्यस्तीति सद्धेतुव्यावर्तकत्वान्नियमांशः सफल इति भावः। **नापीति**। साधारणस्य सपक्षवृत्तितया साध्येनापि सम्बन्धेन साध्य[1]-व्यापकाभाव[2]प्रतियोगित्वादिति भावः॥

अस्मिन् लक्षणेऽपि विरुद्धस्याव्याप्त्याव[3]न्तर्भावं वक्तुं तस्यार्थनिष्कर्षं तावत्करोति—**अस्य हीति**। अस्तु किं तत इत्यत एतज्ज्ञानं च न साक्षादनुमितिप्रतिबन्धकम् अनुमितिविषयाभावानवगाहित्वात् बाधप्रतिपक्षयोरेव ताथात्वात् किंतु तत्कारणविघटकत्वेन। तच्च परामर्शविषयाभावावगाहित्वेनैव परामर्शरूपकारणविघटनद्वारा तज्जन्यानुमितिप्रतिबन्धकत्वमिति वाच्यम्। परामर्शविषयश्च पक्षधर्मता व्याप्तिश्चेति द्वयम्। तत्र किं पक्षधर्मताज्ञानविघटनद्वारा व्याप्तिज्ञानप्रतिबन्धनद्वारा वानुमितिप्रति—

[1] साध्याव्या—ङ.　[2] वाप्रति—ट.　[3] व्याप्त्यन्त—ङ.

उक्तव्याप्तिज्ञानं च न तावद्दूष्यानुमानीयपक्षधर्मताज्ञानविघटकम्। विरुद्धेऽपि तज्ज्ञानस्य सत्त्वात्। किं तु यत्र साधनं तत्र साध्यमित्युदाहरणदर्शिता या दूष्यानुमानीया व्याप्तिः तज्ज्ञानप्रतिबन्धकमित्येव[1] वाच्यम् । तत्प्रतिबन्धकत्वं च किं तद्ग्राह्या या दूष्यानुमानीया व्याप्तिः तदभावविषयत्वेन किं वा तद्ग्राह्या या व्याप्तिस्तदभावव्याप्यविषयत्वेन वा। नाद्यः। दूषिकायाः यत्र साध्यं तत्र साधनाभाव इति व्याप्तेः यत्र साधनं तत्र साध्यमिति दूष्यानुमानीयव्याप्त्यभावरूपत्वाभावात्। भावे वा मदभिप्रेतस्याव्याप्त्यन्तर्भावस्य सिद्धेः। अन्त्येऽपि किं दूषिकाया व्याप्तेः स्वरूपेण ज्ञानं दूष्यानुमानीयव्याप्तिज्ञानप्रतिबन्धकम् किं वा [2]दूष्यानु-

बन्धकत्वम् । आद्यं निराह—**न तावदिति**। द्वितीयमेव प्रश्नपूर्वं [3]विशेषयति—**किंत्वित्यादिना** । उदाहरणप्रदर्शितेति विभागः । तत्रापि विकल्पयति—**तत्प्रतिबन्धकत्वं चेति**। तद्ग्राह्येति पदच्छेदः । प्रतिबध्यत्वेनाभिमतज्ञानग्राह्येत्यर्थ । **दूषिकाया इति** । स्वज्ञानद्वारा प्रतिबन्धकीभूताया इत्यर्थः । **व्याप्त्यभावरूपत्वाभावादिति** । हेत्वभावस्य साध्यव्यापकत्वं साध्यवन्निष्ठात्यन्ताभावप्रतियोगित्वम् । अत्र च साध्यसामानाधिकरण्यांशस्य साध्याभावसंबन्धरूपव्यभिचारांशस्य वा प्रवेशाभावादित्यर्थः । अभ्युपेत्यापि दोषमाह—**भावेनेति** ।

[1] वं वा—**ग रा.** [2] ‘यत्र साध्यं तत्र साधनं’ इत्यनन्तरं दूष्यानुमानीयेत्यारभ्यैतावान्ग्रन्थः लुप्तः—**क. ग. रा.** [3] परिशेषयति—**ङ.**

**मानीयव्याप्त्यभावव्याप्यत्वेन ज्ञानम् । नाद्यः । अतिप्रसङ्गात् । नान्त्यः । व्याप्त्यभावज्ञाने तद्व्याप्यत्वज्ञानासंभवेनावश्यकस्य व्याप्त्यभाव-स्यैव दोषत्वसिद्धेः ॥**

**किं च विरुद्धस्योपाधिवद्व्याप्त्यभावव्याप्य-तया दोषत्वे स्वतो हेत्वाभासत्वं न स्यात् ॥**

**किंचान्तरङ्गं लघुतरं क्लृप्तमानुभाविकं च साध्याभावसंबन्धज्ञानं त्यक्त्वा स्वकल्पितप्रक्रिया-**

**अतिप्रसङ्गादिति** । तन्निर्विकल्पकेन वा प्रमेयत्वादिप्रकारक-तज्ज्ञानेनापि वा प्रतिबन्धापातादित्यर्थः । अस्मिन्पक्षे विरुद्धस्य हेत्वाभासत्वमेव दुर्घटमिति कथं पञ्चेति विभाग इति भावेनाह— **किं चेति** । उपाधिवत् उपाधेरिव । उपाधेर्यथा [1] व्यभिचारोन्नायकत्वेन स्वतो दोषत्वाभावान्न हेत्वाभासत्वं तथेत्यर्थः ।

ननूपाधेर्व्यभिचारव्याप्यत्वेन तदनुमितिद्वारा व्याप्त्यभाव-गमकत्वं न साक्षात् न हि व्यभिचार एव व्याप्त्यभावः । अव्यभिचरित-सहचाररूपत्वाद्व्याप्तेः साध्यहेत्वभावयोर्व्याप्तिः साध्यहेतुव्याप्तिव्याप्यत्वं तु साक्षादेव व्याप्त्यभावावगम इति नोपाधिसाम्यमिति वदन्तं प्रत्याह— **किं चान्तरङ्गमिति** । साध्यहेत्वभावव्याप्तेः साध्यहेतुव्याप्त्यभावं प्रति व्याप्यत्वविषयकत्वापेक्षया साध्याभावसंबन्धज्ञानस्याल्पविषयकत्वा-दन्तरङ्गत्वं लघुतरत्वं च व्यक्तमेव । **क्लृप्तमिति** । साधारणे प्रति-बन्धकत्वस्य निर्णीतत्वादिति भावः । साध्याभावव्याप्तौ विरुद्ध इति प्रसिद्धलक्षणानुरोधेनोक्तं साध्याभावसंबन्धज्ञानं त्यक्त्वेति । **प्रक्रियेति** । सव्यभिचारादिभेदेन पञ्चैव हेत्वाभासा इति प्रक्रियानिर्वाहायेत्यर्थः ॥

[1] चारित्वेन—ट. ड.

निर्वाहाय बहिरङ्गस्य गुरुतरस्याकलनस्यानानुभाविकस्य च साध्यहेत्वभावव्याप्तेर्हेतुसाध्यव्याप्त्यभावेन सह व्याप्तिज्ञानस्य प्रतिबन्धकत्वकल्पनमत्यन्तायुक्तम् । न ह्यत्र हिंसात्वमित्रातनयत्वादाविव साध्याभावसंबन्धोन स्फुटः । येन तत्रोपाधिनेवात्र त्वदुक्तेन विरुद्धत्वेन स उन्नीयि[1]ते ॥

किं चेदं ज्ञानं किं प्रत्यक्षस्य दूष्यानुमानीयव्याप्तिज्ञानस्य विरोधि । किं वानुमानिकस्य। नाद्यः । शङ्खे पीतत्वाभावव्याप्यशङ्खत्वग्रहेऽपि पीतत्वसाक्षात्कारदर्शनात् । अन्त्ये दूष्यानुमानीयव्याप्ति-

---

नन्वेवं स श्यामो मित्रातनयत्वादित्यादावपि साध्याभावसंबन्धत्वमेव दोषः तज्ज्ञानमेव च प्रतिबन्धकं, तदेव चोद्भाव्यं स्यात् न तु शाकपाकजत्वोपाधिरित्यत आह—**न हीति** । यद्वा मित्रातनयत्वादौ साध्याभावसंबन्धद्योतनायोपाध्युक्तिवदिहापि तदुक्तयर्थमेवोक्तरूपविरुद्धत्वमस्त्वित्यत आह—**न हीति** ॥

ननु साध्याभावसंबन्धाज्ञानेऽपि कदाचित्सामग्रीवशेनाप्तवाक्येन चोक्तरूपज्ञाने सति व्याप्तिज्ञानप्रतिबन्धदर्शनादयमपि पृथग्दोषो वाच्य इति वादिनं प्रत्याह—**किं चेदं ज्ञानमिति** । साध्यहेत्वभावव्याप्तेर्हेतुसाध्यव्याप्ति[2]भावेन सह व्याप्तिज्ञानमित्यर्थः । **अन्त्य इति** । नित्यः

[1] येत—रा. [2]प्त्यभावे—ठ.

**ज्ञानस्यानुमानिकत्वे दूष्यानुमानीयहेतौ व्याप्ति-व्याप्यस्य त्वदुक्तरीत्या व्याप्त्यभावव्याप्यस्य च ज्ञातत्वेन सत्प्रतिपक्षान्तर्भावः स्यात् । न हि सत्प्रतिपक्ष एवोदाहरणभेदमात्रेण विरुद्धो भवति ॥**

**किंचाव्याप्त्यन्तर्भावाच्छादनाय साध्यव्यापकाभावप्रतियोगित्वं विरुद्धत्वमित्युक्तौ वृत्तिमतः साध्यवदवृत्तित्वं वा साध्यासमानाधिकरणधर्मत्वं**

---

शब्दः कृतकत्वादित्यादिविरुद्धहेतौ साध्यनिरूपितव्याप्तिज्ञानस्यानुमानिकस्यैवोक्तरूपव्याप्यत्वज्ञानं प्रतिबन्धकमिति पक्ष इत्यर्थः । अस्मिन् पक्षे विरुद्धहेतौ साध्येन सह व्याप्तिज्ञानमानुमानिकमित्येव वाच्यमन्यथा तस्य प्रतिबन्धायोगादिति भावेनोक्तं दूष्येत्यादि । अनुमानं च विरुद्धहेतौ कृतकत्वादौ नित्यत्वादिरूपसाध्यनिरूपितव्याप्तिं प्रति व्याप्यस्य कस्यचिज्ज्ञानमेवेति वाच्यमिति भावेनोक्तं—**दूष्यानुमानीय हेतौ व्याप्तिव्याप्यस्येति । त्वदुक्तरीत्येति,** । साध्यहेत्वभावयोर्व्याप्तिरूपस्य हेतुसाध्यव्याप्त्यभावं प्रति व्याप्यस्य चेत्यर्थः ॥

नन्वनित्यः शब्दः कृतकत्वात्, नित्यः शब्दः श्रावणत्वादित्यादिरेव सत्प्रतिपक्षोदाहरणं नैतादृशमित्यत आह—**न हीति** । अनित्यत्वसाध[1]ककृतकत्वहेतुः साध्यव्याप्तः पक्षे साध्यसमानाधिकरणत्वात् कृतकत्वहेतुः न प्रकृतसाध्यव्याप्तः साध्यव्यापकाभावप्रतियोगित्वादित्युदाहरणभेदमात्रेणेत्यर्थः । व्याप्तितदभावानुमित्यन्यस्थळ एव प्रतिपक्षतेति मन्वानं प्रत्याह—**किंचेति** । इत्युक्तावित्यस्य विरुद्धत्वं नानास्यादित्यन्वयः । कथमित्यतो मण्युक्तान्येवाह—**वृत्तिमत इति** ।

---

[1] ध्यक्र—ट. ड.

वा साध्यवद्वृत्तिभिन्नधर्मत्वं वा विरुद्धत्वमित्यपि[1] सुवचत्वाद्विरुद्धत्वं नाना स्यात् । तत्र च बाधप्रस्तावोक्तरीत्या सर्वेषां प्रत्येकं हेत्वाभासत्वस्य वक्तव्यत्वेन हेत्वाभासाधिक्यं स्यात् ॥

यत्तु व्याप्तिज्ञानकारणीभूतसहचारज्ञानविरोधिज्ञानविषयत्वेनैकीकरणान्नाधिक्यमिति कश्चिदाह । तन्न । [2]त्वदुक्तविषयत्वाज्ञानेऽपि साध्याभावसंबन्धज्ञानेनैवानुमितिप्रतिबन्धात् ॥

किञ्च व्याप्तिज्ञानकारणीभूतं यत्र हेतुस्तत्र

पर्वतोऽग्निमान् गगनवत्त्वादित्यादावतिव्याप्तिनिरासाय वृत्तिमत इत्युक्तिः । न च तल्लक्ष्यकोटिप्रविष्टमेवेति वाच्यम् । साध्यवदवृत्तित्वरूपविरुद्धत्वस्य तत्र ज्ञानेऽपि व्यतिरेकव्याप्तिग्रहाप्रतिबन्धेन तेन तत्रानुमित्युदयाक्षतेरिति भावः । अस्तु को दोष इत्यत आह—**तत्र चेति । बाधेति ।** बाधप्रतिरोधयोः प्रतिज्ञार्थप्रमाणविरोधत्वेनैक्योक्तिप्रस्तावे एकमेव [3] साधकतालिङ्गं सर्वं वा । आद्ये अन्यज्ञानेनानुमितिप्रतिबन्धो न स्यात् । अन्यानुमितेनैकेनानुमितिप्रतिबन्ध इति तु नानुभवानुसारी । द्वितीये मिळितं लिङ्गं प्रत्येकं वा । आद्ये एकेनैव पूर्णत्वाच्छेषवैयर्थ्यम् । अन्त्ये हेत्वाभासाधिक्यमित्युक्तरीत्यित्यर्थः । यज्ज्ञानेनानुमितिप्रतिबन्धो भवति तद्धि संग्राहकतया निर्वक्तव्यम् । न हीदं तथा । तथा च पञ्चभ्योऽधिकमवर्जनीयमिति भावेनाह—**त्वदुक्तेति ।** [4]त्वदुक्तविवक्षयैकीकरणपक्षेऽपि हेतोः साध्याभावसम्बन्धज्ञानमावश्यकम् । एवं च तेनैवालं किमनेनेति भावेनाह—**किञ्च व्याप्तिज्ञानेति ॥**

[1] मिति सु–**क. ट.** [2] त्वदुक्तविषय इत्यधिकम्–**ग. रा.** [3] वासाध–**ड.** [4] इतः नन्वित्यवधिको ग्रन्थः नास्ति–**ट. ठ. ड.**

साध्यमिति सहचारज्ञानं प्रति यत्र साध्यं तत्र हेत्वभाव इत्येवंरूपस्य साध्यव्यापकाभावप्रतियोगित्वरूप[1]विरुद्धोपाधिज्ञानस्य साक्षादविरोधित्वेन विरोधार्थं यावद्धेत्वाधिकरण[2]वृत्तिसाध्याभावकत्वं विरुद्धत्वमिति निर्वक्तव्यत्वेन साध्याभावव्याप्य[3]त्वस्यैव विरुद्धत्वसिद्धिः। तत्र च नियमांशो व्यर्थ इत्युक्तम् ॥

किंच सहचारशब्देन व्याप्तिशरीरानुप्रविष्टस्य सहचारस्यैव [4]विवक्षणीयत्वेन लाघवाद्व्याप्तिज्ञानविरोधिज्ञानविषय[5]भूतायां अव्याप्तावेवान्तर्भावसिद्धिः ॥

एतेन विरोधस्य व्याप्त्यभावं प्रत्युपजीव्यत्वाद्विरोध एव दोष इति, अव्याप्त्यज्ञानदशायां विरो-

ननु कदाचित्साध्याभावसंबन्धाज्ञानेप्युक्तरूपाविषयत्वज्ञानेऽ[6]प्यनुमिति प्रतिबन्धोऽस्तीति वादिनं प्रत्याह—**किंचेति। व्याप्तिशरीरेति।** अन्यादृशस्य प्रकृतव्याप्तिर्धाकारणत्वाभावात्समवायवृत्त्या सहचारज्ञानविरोधज्ञानविषयत्वस्य धूमवह्निसामानाधिकरण्येऽपि सत्त्वेनातिप्रसङ्गाच्चैवं विवक्षाया आवश्यकत्वादिति भावः। मण्युक्तदिशा प्रकारान्तरेण विरुद्धस्य पृथग्दोषत्वमनूद्य निराह—**एतेनेति।** प्रहृतं प्रसिद्धम्। साध्याभावव्याप्तो विरुद्ध इति सर्वैरुपगमादिति भावः। उपजीव्यत्वं

---

[1] पस्यवि–**ग. रा.** [2] णत्वेन सा–**ग-रा.** [3] प्यत्वेनैव–**ग. ट. रा.** [4] रस्य वि–**ग. ट. रा.** [5] यतया–**ग. रा.** [6] प्ययुक्त–**ट. ड.**

धोऽपि दोष इति च निरस्तम्। व्याप्त्यभावस्यैव प्रहतं साध्याभावव्याप्यत्वादिरूपं विरुद्धत्वं प्रत्युपजीव्यत्वात्। न हि हेतोः साध्याभावेन संबन्धं[1] ज्ञात्वा तेन व्याप्यता ज्ञातुं शक्या। त्वत्कल्पितं साध्यव्यापकाभावप्रतियोगित्वादिरूपं विरुद्धत्वं प्रत्यपि व्याप्त्यभाव एवोपजीव्यः। तथाहि—त्वत्कल्पितस्य विरुद्धत्वस्य स्वरूपेण ज्ञानं यद्यपि न व्याप्त्यभावज्ञानाधीनम्। तथाऽपि तन्नानुमितिप्रतिबन्धकम्। यत्तु प्रतिबन्धकं व्याप्त्यभावव्याप्यतया ज्ञानं [2]तद्व्याप्त्यभावज्ञानाधीनमेवेति कथं व्याप्त्यभावो नोपजीव्यः॥

एतेनैवोपधेयसङ्करेऽप्युपाधेरसङ्कर इति च निरस्तम्। विरुद्धेऽपि साधारणवद्विपक्षवृत्तित्वस्यैवोपाधित्वोक्तेः॥

तस्मात्साधारणसाङ्कर्यपरिहाराय त्वत्कल्पितं

---

व्यनक्ति—**न हीति**। ननु मण्युक्तविरुद्धत्वलक्षणे व्याप्त्यभावस्योपजीव्यत्वं नास्तीत्यत आह—**त्वदिति**। मणिकृत्कल्पितेत्यर्थः। आदिपदेन वृत्तिमतः साध्यवदवृत्तित्वादेर्ग्रहः। **व्याप्त्यभावज्ञानाधीनमिति**। तज्ज्ञाने तन्निरूपितव्याप्यत्वस्य दुर्ज्ञानत्वादिति भावः। मण्युक्तं प्रकारान्तरेण विरुद्धस्य पृथक्त्वं निराह—**एतेनेति**। **उक्तेरिति**। अस्माभिः प्रतिपादितत्वादित्यर्थः[3]। **त्वत्कल्पितमिति**।

---

[1] न्धमज्ञा—ग. ट. रा. [2] द्व्यापकाभाव—ग. रा. [3] दिति भावः—ट. ड.

यद्विरुद्धत्वं तद्व्याप्यत्वाद्यभावानात्मकत्वादुपाधिप्रतिकूलतर्कादिवदव्याप्त्युन्नायकमेव । न तु स्वयं हेत्वाभासः । यत्तु प्रहतं विपक्षमात्रवृत्तित्व[1]रूपं विरुद्धत्वं तत्साधारणोपाधिसङ्कीर्णत्वेनाव्याप्त्यन्तर्भूतमेव ॥

[2]एतेनाव्यभिचरितसामानाधिकरण्यरूपव्याप्तिशरीरप्रविष्टस्याव्यभिचाररूपविशेषणांशस्य विरहः साधारणः, तत्प्रविष्टस्य सामानाधिकरण्यरूपविशेष्यांशस्य विरहो विरुद्धः, विशिष्टो[3] विरहो व्याप्यत्वासि[4]द्धः इति भेद इति निरस्तम् । हेत्वाभासविशेषभूता या असिद्धिः तद्विशेषभूता या व्याप्यत्वासिद्धिः तदवान्तरभेदमादाय हेत्वाभास सामान्यविभागे हेत्वाभासविशेषभूता या असिद्धिः

मण्युक्तं साध्याव्यापकाभावप्रतियोगित्वरूपमित्यर्थः । **उपाधीति** । उपाधिश्च प्रतिकूलतर्कश्चादिपदोक्तानुकूलतर्काभावश्च तद्वदित्यर्थः । प्रहतं प्रसिद्धं सर्वैरुच्यमानमित्यर्थः । प्रकारान्तरेण साधारणादित्रयस्य भेदमनूद्य निराह—**एतेनेति** । **हेत्वाभासविशे**[5]**षणतेति** । ज्ञायमानत्वे[6]सत्यनुमितिप्रतिबन्धका[7]दिरूपं हेत्वाभासत्वं हि सामान्यम् । तद्विशेषाः

[1] त्वादिरू—ग. ट. रा. [2] 'विरुद्धस्य व्याप्त्यावन्तर्भावः' इति प्रकरण विभागोऽस्ति—क. [3] ष्टविर—ग. ट. रा. [4] द्धिरिति—ट. रा. [5] षभूतेति—ट. ठ. [6] त्वेस्या—ट. ड. [7] कत्वादि—ट. ठ.

**तद्विशेषभूतायाः स्वरूपासिद्धेः शब्दोऽनित्यः चाक्षुषत्वे सति द्रव्यत्वादित्यादौ विशेषणविशेष्यविशिष्टाभावमादाय हेत्वाभाससामान्यविभागापत्तेः। हेत्वाभासविशेषस्य बाधस्य ह्रदो धूमवत्त्वे सत्यग्निमानित्यादौ विशिष्टसाध्याभावान्तर्गतविशेषणाभावादिभेदमादाय हेत्वाभाससामान्यविभागप्रसङ्गाच्च ॥**

**तत्र क्लृप्तत्वादनुगतत्वाच्च विशि[1]ष्टाभावरूपहे-**

---

सव्यभिचारादयः इत्यसिद्धिरपि हेत्वाभासविशेषः । तद्विशेषा व्याप्यत्वासिद्ध्याश्रयस्वरूपासिद्धय[2] इत्यादिभेदेनासिद्धेस्त्रिविधत्वस्य प्रागुक्तेः । व्याप्यत्वासिद्ध्यवान्तरभेदो हि व्याप्तिविशेषणासिद्धिव्याप्तिविशेष्यासिद्धी । तथा च तादृशावान्तरभेदमादाय हेत्वाभाससामान्यस्य सव्यभिचारविरुद्धादिरूपेण पञ्चेतिविभागकरणे स[3]त्यसिद्धिविशेषभूतस्वरूपासिद्धेरवान्तरभेदाः हेतुविशेषणासिद्धिहेतुविशेष्यासिद्धिविशिष्टहेत्वसिद्धी[4]रप्यादायापि हेत्वाभासविभागप्रसङ्गः स्यात् । तथा च पञ्चेति विभागभङ्गः स्यादित्यर्थः ॥

अतिप्रसङ्गान्तरं चाह—**हेत्वाभासविशेषस्येति** । परमुखेन समाधिं वाचयित्वा सममित्याह—**तत्रेति** । स्वरूपासिद्धिबाधस्थल इत्यर्थः । ननु विशेषणाद्यभावस्थलेऽप्यनुमितिप्रतिबन्धो दृश्यत इत्यत

---

[1] शिष्टाभाव एव दो–क. ट. रा. [2] द्धिभेदे–ठ. द्धयादिभेदे–ट. ड.
[3] तिये असिद्धयादि सिद्धिविशेष–ठ. [4] द्धीरादायापि–ठ.

त्वाभास एव दोषो विशेषणाद्यभावेऽपि विशिष्टाभावोन्नयनद्वारैव दोष इति चेत् [1]समं प्रकृतेऽपि[2]॥

किंच व्यधिकरणासिद्धेरदोषत्वप्रस्तावोक्तरीत्याऽन्यथानुपपत्तिरूपाव्यभिचार एव व्याप्तिः। न तु तद्विशिष्टसामानाधिकरण्यमिति क्वांशभेदोऽपि॥

तस्मात्साधारणासाधारणानुपसंहारिविरुद्धानां साध्याभावसंबन्धरूपायां, अन्यथोपपत्तिरूपायां वा, अव्याप्तावेवान्तर्भावः। तत्रापि साधारणविरुद्धयोर्व्याप्त्यभावो निश्चितः असाधारणानुपसंहारिणोस्तु सन्दिग्ध इति ज्ञेयम्॥

आह — **विशेषणादीति**। विशेष्याभाव आदिपदार्थः। **प्रकृतपीऽति**। विरुद्धहेतावपीत्यर्थः। तथा चाव्याप्तिरेवेति भावः।

ननु—व्यभिचाराज्ञानेऽपि सहचारविरहज्ञानेनाप्यनुमितिप्रतिबन्धोऽस्तीति वदन्तं प्रत्यव्यभिचरितसामानाधिकरण्यं व्याप्तिरित्यङ्गीकृत्योक्तम्। वस्तुतस्तु तदेव नास्ति। येन सामानाधिकरण्यविरहस्य[3] ज्ञानं प्रतिबन्धकमिति सोऽपि पृथग्दोषः स्यादिति भावेनाह— **किंचेति**। तद्विशिष्टं अव्यभिचारविशिष्टम्। पद्धतिविरोधमाशङ्क्य

---

[1] समं इति न—ट. रा. [2] क्लृप्तत्वादनुगतत्वाच्च विशेषणांशविरहरूपव्यभिचार एव दोषोऽस्तु न तु स्वतन्त्र सामानाधिकरण्यविरहः केवलव्यतिरेकिण्यसत्वात्—ट. ण्यपि स—ग. रा. इत्यधिकम्. [3] हस्य प्रकृऽतेपि भावेनाह किंचेति इत्यस्ति—ट. ड.

यत्तु पद्धतौ विरुद्धः साध्यसंबद्धाभावे सति तदभावसंबन्धित्वादव्याप्तः। साधारणोऽपि साध्यतदभावसंबन्धित्वादव्याप्तः। अनध्यवसितभेदावसाधारणानुपसंहारिणावुभयसंबन्धाभावादव्याप्ता - [1]वन्तर्भवत इत्युक्तम्। तत्र स्वमते त्रिप्रकारा व्याप्तिः प्रत्येकं हेत्वाभास इति नाभिप्रायः। किं तु वस्तुगत्या विद्यमानायां परैः प्रत्येकं हेत्वाभासत्वेन स्वीकृतायां त्रिप्रकारायामव्याप्तावनुगता, स्वाभिमता, साध्याभावसंबन्धादिरूपा, अव्याप्तिरेकैव हेत्वाभासः विशेषणवैयर्थ्यादिदोषाभावादि[2]त्येवाभिप्रायः। पद्धतावपि साध्यसंबन्धाभावे सति तदभावसंबन्धित्वादे-

तदभिप्रायोक्त्या निराह यत्त्विति। तत्र हि पूर्वं स्वाभिमतदोषोक्तिप्रस्तावे हेतुविरोधो द्विविधः असिद्धिरव्याप्तिश्चेति, अव्याप्तिरपि त्रिविधा, लिङ्गस्य साध्येन तदभावेन च संबन्धः, साध्यसंबन्धाभावे सति तदभावेनैव संबन्धः, उभयसंबन्धाभावश्चेत्युक्त्वा परोक्तदोषप्रपञ्चनेनान्तर्भावोक्तिप्रस्तावे द्वितीयपरिच्छेदान्ते उक्तमित्यर्थः। तथाच तत्र साध्यतदभावसंबन्धवत्त्वादिरूपेण प्रत्येकहेत्वाभासत्वप्रतीतेस्तद्विरोध इति भावः। कुत एषोऽभिप्राय इत्यतो ज्ञापकं विपक्षे बाधकं चाह—**पद्धतावपीति**। तथा चाव्याप्तिरेकैव दोष इति भावः।

[1] प्तन्त—रा. [2] त्यव्यभिचाराय—ग. रा.

रव्याप्तिं प्रति हेतुत्वस्यैवोक्तेः। अन्यथा हि भङ्ग्य-न्तरेण परोक्तप्रक्रियैव स्वीकृता स्यात् ॥

सुधायामनैकान्तिकत्वादित्यस्य हि सपक्ष-वृत्तित्वे सति विपक्षवृत्तित्वादित्यर्थः। एवं विरु-द्धत्वादित्यस्य सपक्षावृत्तित्वे सति विपक्षवृत्तित्वा-दित्यर्थः। न चात्र[1] विशेषणव्यवच्छेद्यमस्ती-त्युक्तत्वेन तद्विरोधश्च स्यात्। त्रिप्रकारायाम-

अन्यथेति। पृथग्दोषत्वाभिप्राय इत्यर्थः। साध्याभावसंबन्धत्वेनै-वानैकान्तिकत्वादेरेकदोषत्वमेव न पृथग्दोषत्वम्। अन्यथा परोक्तप्र-क्रियाङ्गीकारापत्तिरित्ये[2]कं बाधकमुक्त्वा बाधकान्तरं चाह—**सुधायामिति।** न चात्र विशेषणव्यवच्छेद्यमस्तीत्युक्त[3]भेदेन तद्विरोधश्च स्यादित्यन्वयः। अत्रेत्यनेन परामृश्यमानं दर्शयितुमुक्तं अनैकान्तिकत्वाद्विरुद्धत्वादिति। तयोर्यदि विपक्षवृत्तित्वमेवार्थस्तदा नचात्रेत्युत्तरवाक्यासाङ्गत्यमाशङ्कय तयोरर्थोक्तिरित्यस्येत्यर्थ इति। युक्तिपादीयसुधायां हि अव्याप्तिरूपहेतु-दोषानैकान्तिकत्वादेरन्तर्भावतयाऽव्याप्तित्वेनैव दोषत्वं वक्तुमुपक्रम्य पृथग्दोषत्वे दूषणमुच्यते : इदमसाधकं अनैकान्तिकत्वाद्विरुद्धत्वादिति त्वया वाच्यम्। न चात्र विशेषणव्यवच्छेद्यमस्तीत्युच्यते पृथग्दोषत्वे तदुक्तिविरोधः। अन्योन्यस्य व्यवच्छेद्यत्वसम्भवादिति भावः ॥

नन्वव्याप्तेरुक्तत्रिप्रकारानुगतमव्याप्तित्वरूपसामान्यं कुत उपेयम्। त्रिरूपैवास्त्वव्याप्तिरित्यत आह—**त्रिप्रकारेति।** साध्यतदभावसम्बन्धि-

[1] त्रापि—ग. रा. [2] त्यत्रैकं—ङ. [3] क्तत्वेन त—ट. ङ.

व्याप्तावनुगतैकरूपस्या[1]भावे हेत्वाभासाधिक्यं च स्यात्। सत्त्वे चानुगतेन लघुना साक्षाद्व्याप्तिधी-[2]विरोधिधीविषयेण च तेनैवासाधकता साध्यताम्। किं वस्तुतः सताप्यनुगत्यादिरहितेनेतरेणांशेन ॥

[3] विरुद्धस्याव्याप्तावन्तर्भावः ॥ ३३ ॥

---

त्वादित्रिप्रकारेत्यर्थः। **अनुगतैकरूपस्येति।** साध्याभावसम्बन्धित्वरूपस्य वान्यथोपपत्तिरूपस्य वा प्रागुक्तस्येत्यर्थः। अत एव पूर्वं स्वाभिमतदोषोक्तिप्रस्तावे व्याप्तिविरहोऽव्याप्तिरिति व्याप्तिविरहत्वमनुगतैकरूपमुक्तम्। **आधिक्यमिति।** हेतुविरोधो द्विविधः असिद्धिरव्याप्तिरिति प्रमाणलक्षणादौ यद्द्वैविध्यं हेतुदोषस्योक्तम्। तन्न स्यात्। किंतु चातुर्विध्यरूपाधिक्यं च स्यादित्यर्थः। **सत्त्वे [4]चेति।** अनुगतैकरूपस्येत्यनुकर्षः। प्रागुक्तसाध्याभावसम्बन्धवत्त्वादिरूपस्येति भावः। इतरेण साध्यसम्बन्धाभावादिनेत्यर्थः ॥ ३४ ॥

विरुद्धस्याऽव्याप्तावन्तर्भावः ॥ ३४ ॥

---

[1] स्यासत्त्वे—क. ट. रा. [2] विरोधपदं न—क. रा. [3] मण्युक्तहेत्वाभाससङ्करभङ्गः इत्यस्ति—क.

## अथ परमते बाधस्य व्यभिचारसङ्करः ॥ ३४ ॥

यच्चोक्तं मणौ—बाधस्यादोषत्वे वस्तुतो महानसीयः प्रसिद्धो वह्निः पर्वते वह्नित्वेन सिध्येत्। पर्वते वह्निजातीयस्य सत्त्वेन व्यभिचाराभावात्। पर्वते महानसीयो वह्निर्नास्तीति प्रत्यक्षबाधात्तु न सिध्यतीति बाधस्य व्यभिचारासङ्कर इति। तन्न। पर्वते महानसीयो वह्निर्ना-

## अथ परमते बाधस्य व्यभिचारसङ्करः ॥ ३५ ॥

स्वमते बाधस्य व्यभिचारासाङ्कर्यं [1]मद्रीत्यनुसरणे तत्साङ्कर्यमेव प्राप्नोति। तथा च बाधस्य पृथग्दोषत्वहानेः[2] पञ्चेति हेत्वाभासविभागभङ्ग इति भावेनाह - **यच्चेति**॥

ननु पर्वतीयधूमस्य महानसीयवह्न्यभावसामानाधिकरण्येन व्यभिचारान्न तेन महानसीयवह्निः सिध्यतीत्यत आह—**पर्वत इति**। व्यापकतावच्छेदकतावच्छिन्नव्यापकाभावसामानाधिकरण्यस्यैव व्यभिचारत्वाद्वह्नित्वस्य व्यापकतावच्छेदकत्वेन तदवच्छेदेन [3]तत्र तस्य सत्त्वादित्यर्थः। तर्हि कुतो न सिध्यतीत्यत आह—**पर्वत इति**। त्वदुक्तप्रत्यक्षस्य पर्वतीयवह्न्यनुमितिं प्रति[4] बाधकत्वमेव नास्ति। कथं तस्य बाधत्वेन पार्थक्यमिति भावेन निराह—**तन्नेत्यादिना**॥

[1] त्यननु-ट. ठ. [2] नन प-ट. ड. [3] तत्रेति न-ठ. ड. [4] प्रति प्रतिबन्धकत्व-ठ. ड.

**स्तीति प्रत्यक्षस्य पर्वते वह्निरस्तीति प्रत्यक्ष-शाब्दबोधौ प्रतीव पर्वते वह्निरित्यनुमितिं प्रत्यपि भिन्नविषयकत्वेनाबाधकत्वात् । यथा हीन्द्रियं स्वसन्निकृष्टविषयकज्ञानजननस्वभावम् । तथा लिङ्गमपि स्वसमानाधिकरण[1]लिङ्गिविषयकज्ञान-जननस्वभावम् । समानाधिकरणयोर्लिङ्ग-लिङ्गिनो[2]र्हि व्याप्तिः ॥**

---

एवं तर्हि महानसीयवह्निविषयानुमितिः कुतो न जायते पर्वतीयवह्निविषयैव कुतो जायत इत्यतो न त्वदुक्तबाधदोषबलात् किं तु लिङ्गस्य व्याप्तिप्रकारमपेक्ष्य लिङ्गिज्ञानजनकत्वं स्वभाव इति स्वभावबलादेवेति भावेन दृष्टान्तपूर्वमाह—**यथा हीति** ॥

यद्वा भिन्नविषय[3]कत्वेनेत्युक्तम् । तदसिद्धम् । बाधस्यादोषत्वे समानविषयत्वस्यैव प्रत्यक्षानुमित्योर्बाधकबाध्यत्वाभिमितयोः स्यादित्यतः स्वभावकृतमेव भिन्नविषयत्वमित्याह—**यथा हीति** । तथा च सामग्र्य-भावादेव महानसीयवह्न्यसिद्ध्युपपत्तौ किं बाधवशेन तदसिद्धिकल्प-नया । अत एव पद्धतौ "पर्वते धूमं दृष्टवतोऽपि कथमन्यत्रा[4]नुमित्यनु-द्भवः । व्याप्तिप्रकारमपेक्ष्य लिङ्गस्य लिङ्गिज्ञानजनकत्वनियमात् । तथा हि—कयोश्चित्समानदेशत्वेऽपि भिन्नकालीनयोः व्याप्तिः । यथा धूमस्याग्निने"त्याद्युक्तम् । [5]तत्रान्यत्रानुद्भव इत्युपलक्षणम् । कथमन्यदीया-ग्निप्रमानुद्भव इत्यपि ध्येयमिति भावः ॥

---

[1] रणजननस्वभा–ग. रा. [2] नोर्व्या–क. ग. ट. [3] यत्वेन–ट. ड.
[4] त्रानुद्भव–ट. ड. त्राग्निप्रमानुद्भ–ठ. [5] पद्धतौ कथमन्यत्राग्निप्रमानुद्भवः–ठ. पद्धतौ तत्रान्यत्राग्निमा–ड.

**अस्तु वा प्रत्यक्षानुमित्योः समानविषयकत्वं तथाऽपि न तन्मात्रं बाधत्वे तन्त्रम् । किंतु समानप्रकारकत्वमपि । घटवत्येव गेहे घटो नास्तीति भ्राम्यतोऽपि गेहे प्रमेयमस्तीति प्रमया तत्र सतो घटस्यापि प्रमेयत्वेन ग्रहणदर्शनात् । पर्वतेतरवृत्तिर्वह्निः पर्वते नास्तीति प्रमावतोऽपि पर्वतो वह्निमानिति भ्रान्तिरूपानुमितिदर्शनाच्च ।**

---

ननु प्रतियोग्यसमानाधिकरणयत्समानाधिकरणेत्यादिमण्युक्त-सामान्यव्याप्तिलक्षणपक्षे व्यधिकरणधूमवह्न्योरपि व्याप्ति[1]रस्त्येवेति पर्वतीयधूमो महानसीयवह्निज्ञानजननस्वभाव एवेति भिन्नविषय-त्वस्वभावो नेति चेन्न । तस्य लक्षणस्य निरस्तत्वात् । अत एव समानाधिकरणलिङ्गेत्युक्तम् । तुष्यतु दुर्जन इत्यभ्युपे-त्यापि बाध्यबाधकभावो न युक्त इत्याह—**अस्तु वेति** । महा-नसीयवह्निः पर्वते नास्तीति प्रत्यक्षस्य पर्वतो वह्निमानित्यनुमिते[2]रित्यर्थः । कुत इत्यतः समानविषयत्वं ज्ञानस्य भ्रमरूपज्ञानस्य वा प्रमारूपज्ञानस्य वा ज्ञानान्तरबाधकत्वे तन्त्रम् । आद्ये दोषमाह—**घटवतीति** । अन्त्य आह—**पर्वतेति** । यद्वा समानविषयकत्वं ज्ञानस्य किं तादृशप्रमा-बाधने तन्त्रम् । उत भ्रान्तिबाधने । आद्य आह—**घटवतीति** । अन्त्य आह—**पर्वतेति** । अत्यन्तासदेव भ्रान्तावारोप्यत इति सिद्धान्ते समानविषयक[3]त्वाभावेऽपि मणिकृन्मते तदस्तीत्याह—

[1] रस्तीति–ड. [2] श्चेत्यर्थः–ट. ठ. ड. [3] यत्वा–ठ. ड.

देशान्तरे सन्नेव भ्रान्तिविषय इति त्वन्मते पर्वतेतरवृत्तिवह्नेरेव भ्रान्तिरूपानुमितौ पर्वतवृत्तिवह्नित्वेन भानात् ॥

किं[1]चास्ति बाधोऽत्र[2] चेद्व्यभिचारोऽप्यस्त्येव । बाधितसाध्यके हेतुवृत्तेरेव व्यभिचारत्वात् ॥

अपि च[3] यदि बाधादेव महानसीयवह्नेरसिद्धिः । तर्हि बाधानवतारदशायां स सिध्येत् ॥

---

**देशान्तरे इति ।** समानप्रकारकत्वाभावान्न त्वदुक्तप्रत्यक्षस्य बाधकतेत्युक्तम् । क्लृप्तव्यभिचाररूपदोषादेव महानसीयवह्न्यसिद्ध्युपपत्तौ न तदर्थं बाधस्य दोषतेत्याह—**किञ्चेति** ॥

यद्यन्यनिष्ठलिङ्गस्य स्वसमानाधिकरणसाध्यविषयानुमितिजननं इवान्यनिष्ठसाध्यगोचरानुमितिजननेऽपि शक्तिमुपेत्य बाधरूपदोषादेव तदभावं मन्यसे तदा दोषान्तरं चाह—**अपि चेति । स इति ।** महानसीयवह्निः । सामग्री[4]सद्भावात्प्रतिबन्धाभावात् । अन्यथा पर्वतीयवह्निसिद्धिरपि न स्यात् । सामग्र्याः प्रतिबन्धाभावस्य चोभयत्र तुल्यत्वात् । तस्मात्तदंशे व्यधिकरणधूमादेः शक्तिरेव नेति भिन्नविषयत्वेन प्रागुक्तप्रत्यक्षानुमित्योः न बाध्यबाधकभाव इत्येव युक्तः पन्था इति भावः । पराभिमतं बाधस्यासङ्कीर्णमुदाहरणान्तरमप्यनूद्य निराह—

[1] चात्र—क. ग. ट. रा. [2] धोऽस्ति चे—क. ग. ट. रा. [3] यत् इत्यधिकम्—क. ग. ट. रा. [4] ग्रीप्रतिबन्धाभा—ट. ठ. ड.

एतेन बाधस्यादोषत्वे गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यनेन गन्धप्रागभाववति काले घटे गन्धः सिध्येत्। गन्धात्यन्ताभाववद्गामित्वरूपव्यभिचारस्याभावात्। प्रागभावप्रमारूपाद्बाधात्तु न सिध्यतीति बाधः पृथगिति निरस्तम्। बाधो[1]प्यस्ति चेद्व्यभिचारोप्य[2]स्तीति बाधानवतारदशायां प्रागभावकाले गन्धः सिध्येदिति चोक्तदोषद्वयस्य दुर्वारत्वात्॥

**एतेनेति** । निरस्तमित्यन्वयः । **गन्धः सिध्येदिति** । लिङ्गमपि[3] स्वसमानाधिकरणलिङ्गिविषयकज्ञानजननस्वभावमित्यादिप्रागुक्तसामग्र्याः सत्त्वादिति भावः ॥

ननु सामग्रीसत्त्वेऽपि व्यभिचाररूपक्लृप्तदोषादेव तत्र गन्धासिद्धिरित्यत आह—**गन्धेति** । साध्यप्रागभाववद्गामित्वं न व्यभिचारः । किं तूक्तरूप एव । स च तत्र नास्ति । प्रागभावेन विरोधात् । अग्रे गन्धानुदयापाताच्चेति भावः । कथं तर्हि तत्र बाध इत्यत आह—**प्रागभावेति** । साध्यसंसर्गाभावप्रमाया एव बाधशब्दार्थत्वादिति भावः । **अस्तीतीति** । इति[4] इति च दोषद्वयस्येत्यन्वयः । बाधितसाध्यके हेतुवृत्तेरेव व्यभिचारत्वात् । तथा समानाधिकरणसाध्यगोचरप्रमाजननस्वभावत्वाच्च । बाधस्य चानवतारादिति भावः । कथं तर्हि तत्र गन्धसिद्ध्यभावः । बाधस्य च त्वया तत्र दोषत्वानङ्गीकारादिति चेत् गन्धप्रागभाववति गन्धापादकसामग्र्या अभावा-

---

[1] अपि पदं न—क. ग. ट. रा. [2] अपिपदं न—क. ग. ट. रा. [3] पि समा—ठ. ड. [4] एकं इति पदं न—ट. ठ.

किं च प्रागभाववति काले गन्धापादनं न तावत्[1] सिषाधयिषामात्रेण । शब्दस्य तात्पर्यपारतन्त्र्यवदनुमानस्य सिषाधयिषापारतन्त्र्याभावात् ॥

नापि गन्धप्रागभावावच्छिन्नत्वस्य पक्षतावच्छेदकत्वमात्रेण तदापादनम् । पक्षतावच्छेदकस्य हि यत्र पृथिवीत्वं तत्र गन्ध इति दैशिकव्याप्तिबलेन साध्यस्य समानदेशत्वाक्षेप एव सामर्थ्यम् । न तु स्वसमानकालीनत्वाक्षेपेऽपि ॥

नापि यदा पृथिवीत्वं तदा गन्ध इति व्याप्तिबलात्तदापादनम् । गन्धप्रागभावध्वंसदशायां पृथिवीत्वस्य सत्त्वेऽपि गन्धाभावात् ॥

ननु—तथापि हेतुः स्वावच्छिन्नदेशकालीनसाध्यबोधकस्वभावः । न हि धूमेन वह्निः सिध्यन्नर्वाग्भागे काले[2] च सिध्यति । तथा च

देवेति भावेन का तत्र तव सामग्री अभिमता । गन्धप्रागभावकालेऽपि गन्धसाधनेच्छामात्रं वा गन्धप्रागभावस्य पक्षतावच्छेदकत्वमात्रं वा यदा पृथिवीत्वं तदा गन्ध इति व्याप्तिर्वा स्वावच्छिन्नदेशकालीनसाध्यबोधकस्वभावो वा यदा पृथिवीत्वं तदा गन्धप्रागभावकालीनगन्धवानिति व्याप्तिर्वा । आद्यं तावन्निराह—**न तावदित्यादिना** । व्याप्तिपक्षधर्मतामात्रपारतन्त्र्यादिति भावः । द्वितीयं निराह—**नापीति** । **स्वसमानदेशत्वाक्षेप एवेति** । स तु प्रकृते न बाधित इति भावः । तृतीयं निराह—[3]**नापि यदेति** । चतुर्थमाशङ्कते—**नन्विति** ।

[1] तथत्साधकम्–क. ग. ट. रा. [2] कालान्तरे च–क. ग. ट. रा.
[3] नापीति नास्ति–ट. ठ. ड.

पृथिवीत्वमपि स्वावच्छिन्ने गन्धप्रागभावकाले गन्धं बोधयेदेव । बाधात्तु न बोधयतीति चेन्न । यत्र यदा यदवच्छेदेन धूमस्तत्र तदा तदवच्छेदेन वह्निरिति व्याप्तिरेव हि तत्रास्ति । प्रकृते तु [1]यत्र यदा यदवच्छेदेन पृथिवीत्वं तत्र[2] तदा तदवच्छेदेन गन्ध इति व्याप्तिर्नास्तीत्युक्तम् ॥

अथ [3]प्रागभावावच्छिन्नत्वं न पक्षविशेषणम् । किं तु घटः गन्धप्रागभावकालीनगन्धवानिति साध्यविशेषणमिति चेन्न । यदा पृथिवीत्वं तदा गन्धप्रागभावसमानकालीनगन्ध इति व्याप्तेरभावात् ॥

एतेन धूमानुमाने दैवादुपनीतकाञ्चनमयत्वस्य वह्निविशेषणत्वेन भानेऽनुमितेरप्रमात्वा[4]दप्रमात्वस्य च दोषाधीनत्वादन्यस्य च दोषस्याभावाद्बाध एव

---

उक्तमिति । गन्धप्रागभावध्वंसदशायामिति पूर्वग्रन्थेनेति भावः । पञ्चममपि निरसितुमाशङ्कते—अथेति । व्याप्तेरभावादिति । यदा पृथिवीत्वं तदा घटीयगन्धप्रागभावसमानकालीनो गन्धः घटीय इति व्याप्तेः सत्त्वेऽपि समानाधिकरणतादृशगन्धेन व्याप्तेरभिमतत्वात् । तस्याश्चाभावात् । अन्यथा छलवादापातादिति भावः । अन्यदपि पराभिमतमसङ्कीर्णोदाहरणमनूद्य निराह—एतेनेति । दोषाधीनत्वादिति ।

---

[1] यत्र इति न—क. ग. ट. रा.  [2] तत्र इति न—क. ग. ट. रा.
[3] गन्ध इत्यधिकम्—ट.  [4] त्वात्तदप्र—रा.

दोषो वक्तव्य इति निरस्तम् । बाधोऽस्ति चेद्व्यभिचारोऽप्यस्तीत्यादिना दोषद्वयस्योक्तत्वात् ॥

किंच व्याप्तिपक्षधर्मताज्ञानाविषयस्याप्युपनीतस्यानुमितौ भाने यथार्थानुमितिः, जयपराजयादिव्यवस्था, अनुमितौ व्याप्तिज्ञानापेक्षा चोच्छिद्येत । न च वह्न्युपनयार्थमेव व्याप्तिज्ञानापेक्षा । [1]प्रायिकसहचारदर्शनमात्रेणाप्युपनयसिद्धेः ॥

नन्वथापि लिङ्गपरामर्शनिष्पत्त्यनन्तरं प्रत्यक्षादिबाधेनानुमितेरप्रमात्वं दृश्यते । तत्र च दोषान्तराभावाद्बाध एव दोष इति चेन्न ।

अप्रामाण्यस्य परतस्त्वादिति भावः । अन्यस्य बाभावादित्यसिद्धमिति भावेनाह—बाधोऽस्ति चेदिति । बाधितसाध्यके हेतुरित्येव व्यभिचारत्वादित्यादिनोक्तत्वादित्यर्थः ॥

ननु सत्यपि तत्र व्यभिचारे तदप्रतिसन्धानदशायां काञ्चनमयो न भवति वह्निरिति बाधप्रतिसन्धानेऽपि तादृशानुमितेरप्रमात्त्वावगमात्सोऽपि पृथग्दोष एवेति चेद्भासकसामग्र्यभावेन तथाऽनुमितिरेवायुक्तेत्येतद्विपक्षे बाधमुखेनाह—किंचेति । ज्ञानाविषयस्यापि तादृशज्ञानबलालभ्यस्यापीत्यर्थः । यथार्थेति । सर्वत्राप्यनुमितौ यत्किंचिदविद्यमानस्य साध्यविशेषणस्य भानसंभवादिति भावः । जयेति । सर्वत्रानुमितावयाथार्थ्यप्राप्तावयमनुमानप्रयोक्ता सदनुमानवादीति जयी, अयं चासदनुमानप्रयोक्तृत्वादपजयीति न स्यादित्यर्थः । अनन्यगत्या बाधस्य दोषत्वं वाच्यमिति शङ्कते—नन्विति । दोषान्तरा-

[1] प्रापक—ग ट.

निष्पन्नेऽप्यर्थनिश्चये तदप्रामाण्यनिश्चयेन पुनरप्यर्थनिश्चयविघटनवन्निष्पन्नेऽपि परामर्शे बाधेन पुनरपि परामर्शविघटनस्यावश्यकत्वेनासिद्धिव्यभिचारयोरन्यतरस्य सत्त्वात् ॥

ननु तथाऽपि व्यभिचारशरीरप्रविष्टसाध्याभावनिश्चयः स्वप्रमात्वनिश्चयाधीन इत्युपजीव्यः । प्रमात्वनिश्चयरूपो बाधः पृथगिति चेन्न । साध्याभावरूपार्थसत्त्वघटितप्रामाण्यनिश्चयस्य अर्थसत्त्व[1]नि-

सत्त्वोपपादनायोक्तं परामर्शनिष्पत्त्यनन्तरमिति । तदनिष्पत्तावसिद्ध्यादिरेव दोषस्तत्र भविष्यतीति भावः । दोषान्तरसत्त्वान्न बाधस्य तत्र दोषत्वं कल्प्यमिति[1] परिहरति—**निष्पन्नेऽपीति** । बाधेन साध्याभावप्रमारूपबाधेनेत्यर्थः । **परामर्शेति** । साध्यव्याप्यहेतुमानयमिति परामर्शेत्यर्थः । **असिद्धिव्यभिचारयोरिति**[2] । व्याप्तस्य पक्षधर्मताप्रतीतिः सिद्धिः । तदभावोऽसिद्धिरित्युक्तेः । बाधितसाध्यके त्ववृत्तिरूपत्वाद्व्यभिचारस्येति भावः । पराभिमतं प्रकारान्तरेण बाधस्य दोषत्वमाशङ्कते—**नन्विति** । **तथापीति** । दोषान्तरसाङ्कर्येपीत्यर्थः । **प्रमात्वेति** । साध्याभावज्ञानस्य प्रमात्वनिश्चयरूप इत्यर्थः । साध्याभावरूपार्थनिश्चयं प्रति तत्प्रमात्वनिश्चयस्य नोपजीव्यता । येन साध्याभावनिश्चयद्वारा निश्चितसाध्याभाववद्वृत्तित्वरूपव्यभिचारेप्युपजीव्यता स्यात् । किं तु अर्थनिश्चयस्यैव स्वप्रमात्वनिश्चये उपजीव्यतेति वैपरीत्यमेवेति निराह—**साध्याभावेति** । अर्थनिश्चायकत्वस्य प्रमात्वनिश्च-

[1] भावेनेत्यधिकम्–ट. ठ. ड.　[2] इदं प्रतीकग्रहणं नास्ति–ट. ठ. ड.

श्रयाधीनत्वेनार्थनिश्चयस्यैवोपजीव्यत्वात्। त्वन्मतेऽप्रामाण्यशङ्काराहितज्ञानस्यैवार्थनिश्चायकत्वेनापसिद्धान्ताच्च। परतः पक्षे अनवस्थानाच्च॥

तस्मात्परमते बाधस्य व्यभिचारासङ्करो न युक्तः। अस्मन्मते तु बाधस्य प्रतिज्ञादोषत्वेन व्यभिचार[1]शङ्कैव नास्तीति प्रागेवोक्तम्। व्याप्यत्वासिद्धेर्व्यभिचारासङ्कीर्णमुदाहरणं नीलधूमादित्यादिकमितित्वीश्वरवादे निरस्तम्। आश्रयासिद्धेः स्वर्णमयोद्रिराग्निमानित्यादिकमुदाहरण[2]मप्याश्रयासिद्धेरदोषत्वप्रस्तावे निरस्तम्॥

परमते बाधस्य व्यभिचारासङ्करः॥ ३४

---

यायत्तत्त्वे दोषान्तरमाह—**त्वन्मत इति**। अर्थनिश्चयस्य प्रामाण्यनिश्चयायत्तत्व इत्यत्र दोषान्तरमाह—**परत इति**। साध्याभावरूपार्थनिश्चयस्तत्प्रामाण्यनिश्चयाधीनः प्रामाण्यनिश्चयश्च प्रामाण्यग्राहकस्य प्रमाण्यनिश्चयाधीन इत्येवं रूपेणानवस्थेति भावः॥

परमते बाधस्य व्यभिचारसङ्करः॥ ३५॥

---

[1] सङ्करेत्यधिकम्—क. ग. रा. [2] णमित्यप्य ग. रा.

## उदयनोक्तहेत्वाभासासङ्करभङ्गः ॥ ३५ ॥

उदयनेन तु निबन्धे सव्यभिचारस्य कोटिद्वयोपस्थापकतया साध्यतदभावसंशयः फलम्, विरुद्धे साध्याभावासिद्धिः, बाधे तु पक्षधर्महेतौ व्याप्तिबाधः, सत्प्रतिपक्षत्वे किमत्र तत्त्वमिति जिज्ञासा, आसिद्धे तच्चतुष्टयान्यालिङ्गत्वज्ञानमिति फलमुख[1]लक्षणमुक्तम्। तदपि न। इदं हि लक्षणं किं स्वरूपसदित्येतावन्मात्रेणोच्यते असाधकतालिङ्गत्वेन वा। नाद्यः। तस्य हेत्वाभासविभागो[2]पाधित्वं

---

### उदयनेनोक्तहेत्वाभासासङ्करभङ्गः ॥ ३६ ॥

मण्याद्युक्तरीत्या पञ्चानां हेत्वाभासानामसाङ्कर्यं नेत्युपपाद्योदयनमतेऽप्यापाततोसाङ्कर्यप्रतीतावपि तदयुक्तमिति भावेन तदुक्त[M]नूद्य निराह—उदयनेन त्विति। निबन्धे निबन्धाख्यग्रन्थे। कोटिद्वयेति। साधारणानैकान्तिकस्य साध्यतदभावाभ्यां सहचारे असाधारणानुपसंहारिणोरुभाभ्यां सहचाराभावेनेति ध्येयम्। प्राचां मतेऽसाधारणानुपसंहारिणोरनध्यवसितप्रभेदत्वेन पृथगुक्तेः साधारणानैकान्तिक एव सव्यभिचारशब्देन ग्राह्यः। किमत्रेति। [3]द्वयमध्ये किं तत्त्वं निर्दोषत्वमित्यर्थः। तच्चतुष्टयेति। सव्यभिचारादिचतुष्टयान्यत्वे सत्य-

[1] खल–क. रा.  [2] सोपा–ट.  [3] यद्द्वय–ट. ठ. ड.

नास्तीत्युक्तत्वात् । द्वितीये हि[1] सव्यभिचारे इदमसाधकं संशयजनकत्वादिति, विरुद्धे साध्याभाव[2]साधकत्वादिति, बाधे तु बाधितव्याप्तिकत्वादिति, सत्प्रतिपक्षे[3] तु जिज्ञासाजनकत्वादिति, असिद्धे चतुष्टयान्यालिङ्गत्वज्ञानजनकत्वादिति, प्रयोक्तव्यम् । तत्र च संशयजनकत्वं साध्याभावबुद्धिजनकत्वं च किं फलोपधानं विवक्षितं योग्यता वा। नाद्यः। [4]असाधारणत्वादिग्रहकाले कुतोऽपि निमित्तात्संशयसाध्याभावबुद्ध्योरनुत्पत्तौ उत्पत्तावप्यप्रमितौ चासाधकताहेतोरासिद्धिः[5] । बाधप्रतिरोधयोस्तु प्रत्यक्षादाविवानुमितावपि साक्षाद्विषयापहारिणोः पुनः परावृत्त्या [6]द्रविडमण्डकन्यायेन करणसामर्थ्यविघटकहेत्वाभासान्तरसंपादनेनाव्याप्तिज्ञानजिज्ञासाजननाभ्यामसाधकतानुमापकत्वकल्पनमत्यन्तायुक्तम् ॥

---

लिङ्गत्वज्ञानमित्यर्थः । **उक्तत्वादिति** । यद्रूपेण हि ज्ञानमनुमितिप्रतिबन्धकमित्यादिना पञ्चहेत्वाभास[7]तत्यत्खण्डनप्रस्तावे उक्तत्वादित्यर्थः। **असिद्धेरिति** । आद्ये लिङ्गस्वरूपस्यैवाभावात् । द्वितीये लिङ्गसत्त्वेऽपि तत्प्रमित्यभावेन [8]प्रमित्यसिद्धेरित्यर्थः । **द्रविडमण्डकेति** । विवृत[9]स्त्वयं न्याय उदयनोक्तवक्त्रभिप्रायविघ्यर्थभङ्गे । **अत्यन्तायुक्तमिति** ।

[1] येस–क. ग. रा. [2] वबोध–का. ग. ट. रा. [3] तु इति न–क. ग. रा. [4] साधार–क. ग. रा. [5] द्धेः–क. ग. रा. [6] त्यद्र–ट. रा. [7] सा इ–ठ. ड. [8] तत्प्रामि–ट. ठ ड. [9] तश्चायं–ट. ड.

किं च सत्प्रतिपक्षे जिज्ञासाजनकस्येष्टसाधनत्वज्ञानस्याभावेन वा, अत्यन्ताभीष्टविषयकप्रबलजिज्ञासान्तरप्रतिबन्धेन वा, किं तत्त्वमिति जिज्ञासाया अनुत्पत्तौ असाधकत्वहेतोरसिद्धिः स्यात्। असिद्धेप्येतच्चतुष्टयान्यालिङ्गत्वं नासाधकतासाधकम्। तदज्ञानेऽपि स्वरूपासिद्ध्या[1]दावेकैकज्ञानेनासाधकताऽनुमितिदर्शनात्। नान्त्यः। योग्यताया विपक्षवृत्तित्वसाध्याभावव्याप्यत्वादिरूपत्वात्। तस्य चाव्याभावन्तर्भावस्योक्तत्वात्। बाधसत्प्रतिपक्षयोर्हेत्वाभासत्वस्यैव निरासाच्च॥

उदयनोक्तहेत्वाभासासङ्करभङ्गः॥ ३५॥

---

हेतुदोष[2]त्वमेवायुक्तं एवंरूपेण कल्पनं त्वत्यन्तायुक्तमित्यर्थः। तथा च द्वयोः प्रतिज्ञातार्थप्रमाणविरुद्धत्वेनैकेन रूपेण प्रागुक्तदिशा प्रतिज्ञादोषत्वमेवेति भावः। अस्मिन् पक्षेऽसाधकताऽनुमानानुत्थानं प्रतिपक्षे स्यादिति दोषान्तरं चाह—**किं चेति**। **इष्टेति**। जिज्ञासा हि ज्ञानेच्छा फलादन्यत्रेच्छा चेष्टसाधनत्वज्ञाने सति भवति। किमनयोस्तत्त्वमिति ज्ञानस्येष्टसाधनत्वज्ञानं तज्जनकमिति जिज्ञासाजनकस्येष्टसाधनत्वज्ञानस्येत्युक्तम्। **असिद्धिः स्यादिति**। जिज्ञासाजनन[3]रूपफलस्य तदानीमभावेन किं तत्त्वमिति जिज्ञासाजनकत्वादिति हेतोरभावादिति भावः। योग्यता वेति पक्षं निराह—**नान्त्य इति**। **हेत्वाभास-**

[1] द्ध्येकैक—क. ग. ट. [2] षमेवा—ट. ठ. ड. [3] जननस्वरूपयोग्यत्वहेतुरभिमत इति युक्तम्. तस्योत्तीर्णतादशायामपि भावादिति भावः इत्यस्ति-ट ड.

## मणिकण्ठोक्तहेत्वाभासासङ्करभङ्गः ॥ ३६ ॥

एतेन यदुक्तं मणिकण्ठे—सूत्रोक्तरीत्या हेत्वाभासाः पञ्चैव। अनुपसंहारी तु व्याप्यत्वासिद्धावन्तर्भूतः। तत्र यद्यपि विरुद्ध[1]द्वये च व्याप्तिप्रमाव्यतिरेकोऽस्ति। तथाप्यनैकान्तिकयोः संशयकारणसाधारणासाधारणधर्मज्ञानानिबन्धनः प्रमाव्यतिरेकः। विरुद्धे तु साध्यासमानाधिकरण-

---

त्वस्येति। हेतुदोषत्वम्येत्यर्थः। कुतोन्तर्भावबहिर्भावचिन्तेत्येवकारार्थः[2] ॥

उदयनोक्तहेत्वाभासासङ्कर[3]भङ्गः ॥ ३६ ॥

---

## मणिकण्ठोक्तहेत्वाभासासङ्करभङ्गः ॥ ३७ ॥

---

हेत्वाभासपञ्चकस्यान्योन्यासाङ्कर्यं मणि[4]कण्ठोक्तमनूद्य निराह—**एतेनेति**। **सूत्रेति**। सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासा इति गौतमसूत्रोक्तेरित्यर्थः। पञ्चत्वाक्षेपसमाधी मणिकण्ठोक्तावेवानुवदति—**तत्र यद्यपीति**। पञ्चसु मध्य इत्यर्थः। **अनैकान्तिकद्वये चेति**। साधारणासाधारणरूपे इत्यर्थः। **साधारणासाधारणेति**। साधारणधर्मासाधारणधर्मविप्रतिपत्तिभेदेन त्रीणि संशयकारणानि। तत्र साधारणानैकान्तिकेसाधारणधर्मज्ञाननिमित्तको व्यति-

---

[1] द्वे अनैकान्तिकद्वये—क. ग. ट. [2] रः—ट. ठ. ड. [3] सासाङ्कर्य—ट. ठ. [4] कर्णोक्त—ट.

धर्मग्रहनिबन्धनः । तत्रोपजीव्यत्वात्तेषामेवो-द्भावनम् । न तु प्रमाव्यतिरेकस्यासिद्धस्येति तदपि निरस्तम् । साधारणादेर्धर्मस्य हि साधार-णत्वादिनाज्ञानं संशयहेतुः । साधारणत्वं च सपक्ष-विपक्षवृत्तित्वम् । तत्र च विपक्षवृत्तित्वमेवा-व्याप्तिरिति सैवोद्भाव्या । न तु [1] सपक्षवृत्तित्वमपि । वैयर्थ्यादित्युक्तं साधारणप्रस्तावे ॥

एवमसाधारणत्वमपि सपक्षविपक्षव्यावृत्तत्वम् । तत्र च वृत्तिमतः सपक्षव्यावृत्तत्वं सन्दिग्धाव्या-प्तिरिति सैवोद्भाव्या । न तु विपक्षव्यावृत्तत्वमपि । वैयर्थ्यादित्युक्तमसाधारण[2]प्रस्तावे ।

एवं साध्यासामानाधिकरण्यमपि यत्र हेतुस्तत्र साध्यमिति सामानाधिकरण्याभावः । स च हेतु-मति साध्याभावात्मकत्वादव्याप्तिरेवेत्युक्तमनुप-संहारिप्रस्तावे ॥

---

रेकः, असाधारणधर्मज्ञाननिबन्धनोऽसाधारणानैकान्तिके व्याप्तिप्रमा-व्यतिरेक इति तयोर्भेदः । तेषामेवेति । साधारणा [3] साधारणधर्मसाध्य-समानाधिकरणधर्माणामेवेत्यर्थः । साधारणत्वादिज्ञानमिति । अन्यथा पर्वतोऽग्निमान् [4]पक्षत्वादित्यादौ प्रमेयत्वेनेव वृक्षवत्त्वरूपेण वा जातेऽपि ज्ञाने साध्यसंशयापत्तेरिति भावः । साधारणेति । साधारणस्या-व्याप्त्यन्तर्भावप्रस्ताव इत्यर्थः ॥

---

[1] तुप—क. [2] सपक्षविपक्षेत्यारभ्य एतावान् ग्रन्थः नास्ति—ग. रा. [3] णधर्मासा—ट. ठ. [4] वृक्षवत्त्वादि—ट. ड.

**किं चैवं सति व्याप्तस्य पक्षधर्मत्वाप्रमितिरूपासिद्धिरप्याश्रयहेतुस्वरूपतद्विशेषणासत्त्वज्ञाननिबन्धनेत्याश्रयासत्त्वादीनामपि हेत्वाभासान्तरत्वं स्यात् ॥**

**ननुचाभावज्ञानाद्भावप्रमाव्यतिरेकः सर्वत्र नैतावतासाधारण[1]त्वं सिध्यति [2]यच्चेह निरूप्यत इति चेन्न। व्यभिचारस्यापि व्याप्त्यभावरूपत्वेनाभावज्ञानाद्भावरूपव्याप्तिप्रमाविरह इति साम्यात्।**

एवमग्रेऽपि । उपजीव्यत्वात्तेषामेवोद्भावनमित्यत्रातिप्रसङ्गान्तरं चाह—**किं चेति**। विरुद्धेऽनैकान्तिकद्वये च प्रमाव्यतिरेकाविशेषेप्यवान्तरभेदाद्भेदोक्तौ योऽतिप्रसङ्ग उक्तः तदुद्धारमाशङ्क्य साम्येन निराह—**नन्वित्यादिना। सर्वत्रेति**। आश्रयासत्त्वहेतुस्वरूपासत्त्वहेतुविशेषणासत्त्वादिज्ञाननिबन्धनासिद्धिषु सर्वास्वप्याश्रयाद्यभावज्ञानाद्व्याप्तिपक्षधर्मतारूपभावप्रमाविरह इत्यर्थः। **एतावतेति**। भावप्रमाव्यतिरेकनिमित्तत्वमात्रे[3] च भावि[4]प्रमाव्यतिरेकं प्रत्यसाधारणकारणत्वमाश्रयाभावज्ञानानामस्तीत्यर्थः। तावता हेत्वाभासाधिक्यं कुतो नेत्यत आह—**तच्चेति**। भावप्रमाव्यतिरेकं प्रति यदसाधारणं कारणं तदेवेह हेत्वाभासप्रकरणे विभज्यमानत्वेन निरूप्यत इत्यर्थः। **इति साम्यादिति**। तथा च साध्याभावव्याप्तरूपविरुद्धस्यानैकान्तिकद्वयस्य चाव्याप्तित्वेनैकदूषणत्वमेव न तु त्वदुक्तप्रकारेणानेकहेत्वाभासत्वमिति भावः ॥

---

1 णत्वं—ग. 2 तच्चेह—क. ग. रा. 3 त्रेण भा—ट. ठ. ड. 4 भावप्र—ट. ठ. ड.

किं च प्रतिरोधस्यापि सर्वकार्यसाधारण-दोषत्वाद्धेत्वाभासत्वं न स्यात् ॥

यदि च सत्प्रतिपक्षस्य द्वेधा[1] प्रतिबन्धकता-साधारण्यसाधारणी च तत्रासाधारणमनुमिति-प्रतिबन्धकत्वमादाय हेत्वाभासत्वं तर्ह्यभावज्ञान-स्यापि भावप्रमाप्रतिबन्धकत्वं द्वेधेति समम् ॥

मणिकण्ठोक्तहेत्वाभाससङ्करभङ्गः ॥ ३६ ॥

## लीलावत्युक्तहेत्वाभासचातुर्विध्यभङ्गः ॥ ३७ ॥

लीलावत्यां तु—

असिद्धविरुद्धसव्यभिचारानध्यवसिताश्चत्वारो हेत्वाभासाः । बाधप्रतिरोधौ तु पूर्वोक्तरीत्या

नन्वभावज्ञानस्य भावप्रमाव्यतिरेकहेतुत्वे हेत्वाभासत्वरूपासाधारणदोषत्वं व्याप्त्यभावज्ञानस्य न स्यादित्यतः प्रतिबन्दीमुखेन समाधातुमाह—किं चेति । सर्वकार्येति । अनुमितितदितरसर्वकार्येत्यर्थः । हेत्वाभासत्वं हेत्वसाधारणदोषत्वमित्यर्थः । परमुखेनोत्तरं वाचयित्वा सममित्याह—यदि चेति । सममिति । तथाचासाधारणमनुमितिप्रतिबन्धकत्वमादाय हेत्वाभासत्वं भविष्यतीति भावः ॥

मणिकण्ठो[2]क्तहेत्वाभाससङ्करभङ्गः ॥ ३७ ॥

## लीलावत्युक्तहेत्वाभासचातुर्विध्यभङ्गः ॥ ३८ ॥

लीलावत्यां त्विति । इत्युक्तमित्यन्वयः । पूर्वोक्तरीत्येति ।

[1] द्वयीप्र—क. ग. रा. [2] णोक्त—ट.

व्याप्तिपक्षधर्मताप[1]हारेणैव दोषौ। न स्वातन्त्र्येण। तत्र व्याप्तिपक्षधर्मतावत्त्वेनानिश्चितो हेतुरसिद्धः। तेनासिद्धित्रयस्य संग्रहः। पक्षैकवृत्तिरनध्यवसितः॥

यद्यपि सव्यभिचारविरुद्धानध्यवसितेषु व्याप्त्यप्रमितिरूपा व्याप्यत्वासिद्धिरस्ति। तथाऽपि व्यभिचारिणि परार्थानुमाने सर्वोपसंहार-प्रवृत्तोदाहरणवाक्यादुपाध्यस्फुरणदशायां व्याप्तिग्रहण[2]सम्भवाद्व्याप्त्यग्रहो नोद्भावयितुं शक्य इति व्यभिचार एवोद्भाव्यः। विरुद्धे[3]तु विपरीतप्रतिबन्धे वाक्यस्थेऽन्तरङ्गे स्फुरति सति बहिरङ्ग-

---

बाधितस्थळे हेतोः साध्याभाववद्वृत्तित्वेन व्याप्तेरपहारेण सन्दिग्धसाध्यवद्वृत्तित्वाभावेन पक्षधर्मताप[4]हारेणेत्यर्थः। दूषणसौकर्यायासिद्ध्यादेः लक्षणमाह—**तत्रेति**। **असिद्धत्रयस्येति**। आश्रयासिद्धस्वरूपासिद्धव्याप्यत्वासिद्धरूपासिद्धत्रयस्येत्यर्थः। साध्याभावव्याप्तो विरुद्धः। पक्षत्रयवृत्तिः सव्यभिचार इति व्यक्तत्वात्तयोर्लक्षणानुक्तिः। साङ्कर्यशङ्कामनूद्य निराह—**यद्यपीत्यादिना**। **व्यभिचारिणीति**। अनित्यः शब्दः [5]प्रमेयत्वात् यत्र [6]प्रमेयत्वं तत्रानित्यत्वं घटादाविति व्यभिचारिणीत्यर्थः। **विपरीतप्रतिबन्ध इति**। प्रतिबन्धो व्याप्तिः साध्याभावेन सह हेतोर्व्याप्तिरूपविपरीतव्याप्तौ स्फुरन्त्यां नित्यः

---

[1] परिहा—ट. [2] हसं—क. ग. रा. [3] द्धेवि—क. ग. रा.
[4] ताकारेण—ट. तापरिहारेणे—ठ. [5] ब्दः मे—ट. ठ. ड. [6] त्रमेय—ट. ठ. ड.

व्याप्त्यज्ञानादिकं नोद्भाव्यम् । अनध्यवसिते तु विपक्षव्यावृत्तिमुखेन व्यतिरेकव्याप्तेर्दर्शितत्वान्न व्याप्त्यसिद्धिरुद्भावयितुं शक्या । न चानध्यवसिते सन्दिग्धसाध्यवत्पक्षमात्रवृत्तित्वेन साध्याभावसम्बन्धाद्व्यभिचार एवास्त्विति वाच्यम् । सपक्षविपक्षयोर्लिङ्गाज्ञानस्यैवानध्यवसाय-[1]रूपाज्ञानहेतुत्वेन सरलदूषणतयोद्भाव्यत्वात् । तत्फलतो व्यभिचारस्तु विलम्बितप्रतीतिक इत्युक्तम् ॥

तन्न । व्यभिचारिणि त्वया समर्थितेन व्यभिचारस्योद्भाव्यत्वेनैव मदुक्ताव्याप्तेरेवोद्भाव्यत्वसिद्धेः । उक्तं हि—साध्याभावसम्बन्धरूपो

---

शब्दः कृतकत्वादिति वाक्यादवगम्यमानायामित्यर्थः । अनध्यवसिते त्विति । भूर्नित्या गन्धवत्त्वात् यत्र नित्यत्वाभावः तत्र गन्धवत्त्वाभावो [2] जलादाविति साध्याभावहेत्वभावयोर्विपक्षवृत्तित्वमुखेन व्यतिरेकव्याप्तेरनध्यवसित[3]प्रयोक्त्रा दर्शितत्वादित्यर्थः । व्यभिचार एवेति । सन्दिग्धव्यभिचार एवास्त्वित्यर्थः । सरलेति । अक्लेशदूषणतयेत्यर्थः । तत्फलभूतोऽनध्यवसायज्ञानफलभूतः । कथं सिद्धिरित्यत आह—उक्तं हीति । साधारणस्याव्याप्तावन्तर्भावप्रस्तावे प्रागुक्तमित्यर्थः ॥

---

[1] यरूपत्वेन—इति यज्ञानरूपत्वेन, इति चन्द्रधा शोधितमस्ति—ट. [2] यथेत्यधिकम्—ट. [3] हेतुपदमधिकमस्ति—ट. ड.

व्यभिचार एवाव्याप्तिरिति । न चानित्यत्वसाधकस्य मेयत्वादेर्गगनादौ व्याप्तिभङ्गे स्वेन प्रमितेऽप्यनाप्तवादि[1]वाक्यादुदाहरणादेव व्याप्तिसिद्धिः । शब्दोऽनित्यश्चाक्षुषत्वादित्यादावसिद्धेरप्यनुद्भाव्यतापातात् । तत्रापि वादिवाक्येनेवोपनयेनैव पक्षधर्मताया ज्ञातत्वात् ॥

किंच यदि व्यभिचारिणि शक्योद्भावनत्वाद्व्यभिचारमादाय व्याप्त्यप्रमितेस्त्यागस्तर्हि तत एवासिद्धावपि पक्षे हेत्व[2]सत्त्वमादाय पक्षे हेतुसत्त्वाप्रमितिरूपासिद्धेरपि त्यागः स्यात् । ततश्च पक्षे हेत्वसत्त्वं हेत्वाभासान्तरं स्यात् । तत्र पक्षे

---

ननूक्तम[3]त्रोदाहरणवाक्याद्व्याप्तिग्रहसंभवादव्याप्त्युद्भावनमशक्यमितीति चेत्, सत्यमुक्तम् । दुरुक्तं तदित्याह— **न चेति** । व्याप्तिसिद्धिरित्यनेनान्वयः । **प्रमित इति** । **अनाप्तेति च** । हेतुगर्भ[4]विपरीतप्रमासद्भावेऽप्यनाप्तवाक्याद्व्याप्तिनिश्चयसंभवेनाव्याप्त्युद्भावनस्याशक्यत्वेऽसिद्ध्युद्भावनमप्यशक्यं स्यात् । स्वस्य हेतु[5]त्वाभावनिश्चये सत्यपि वादिवाक्याद्धेतुसत्त्वनिश्चयस्य संभवादिति भावेनाह—**शब्द इति** । प्रतिबन्दीरूपेणातिप्रसङ्गं चाह—**किंच यदिति । त्याग इति** । अनुद्भावनं तत एव शक्योद्भावनत्वादेवास्तु को दोष इत्यत आह—**ततश्चेति । हेत्वाभासान्तरमिति** । त्वया व्याप्तिपक्षधर्मतावत्त्वेनानिश्चितो हेतुरसिद्ध इति त्वयोक्तत्वेन तदपेक्षया हेत्वसत्त्वमात्रं हेत्वाभासान्तरं स्यात् । तथा च त्वदुक्तचतुष्ट्वभङ्ग इति भावः । परमुखेनैवोत्तरं वाचयित्वा सममित्याह—**तत्र पक्ष इति** ।

---

[1] वादिपदं न—**क. रा.** [2] त्वसिद्धत्व—**ग. रा.** [3] मातो—**ट. ड.**
[4] भम् । विप—**क. ग.** [5] तुत्वाभाव—**ट. ड.**

